चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् । ३६ ॥

पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । पौष्णं पेषणं चरौ एव विधीयते । पुरोडाशे तु अर्थोक्तं अर्थेन प्रयोजनेन पुरोडाशनिष्पादनेन उक्तं प्राप्तमेव । नहि पेषणं विना पुरोडाशस्य निष्पत्तिर्भवति, इति न तत्र विधातव्यम् । अर्थसिद्धं तत् तत्र । अथ पशौ यद्यपि न अर्थसिद्धम्, तथापि पशौ पेषणं न स्यात् । अर्थविप्रतिषेधात् हृदयाद्याकाररूपस्य अर्थस्य विप्रतिषेधात् पेषणेन विनाशप्रसङ्गात् । तस्मात् पेषणं चर्वर्थमेव, न सर्वार्थम् ।

चरावपीति चेत् । ३७ ॥

पौष्णं पेषणं हृदयाकाराद्यर्थविनाशप्रसङ्गात् पशौ न कर्तव्यं चेत् तर्हि चरौ अपि न स्यात् । नेत्यनुवर्तते । अन्योन्यालग्नकत्वरूपविशदपाको हि चरुर्भवति, पेषणे तु तन्नाशः प्राप्तः । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, पक्तिनामत्वात् । ३८ ॥

पौष्णे चरौ पेषणे कृतेऽपि न अर्थविप्रतिषेधः । चरुशब्दस्य पक्तिनामत्वात् । तण्डुलप्रकृतिकत्व– अनवस्रावितत्वोभयविशिष्ट–अन्तरूष्मपक्वत्वरूपा या पक्तिः तस्याः नाम चरुरिति । पूष्णश्च अदन्तकत्वात् पेषणेन विशदत्वस्य बाधेऽपि न दोषः । तस्मान्नार्थविप्रतिषेधः । तस्मात् पौष्णचर्वर्थं पेषणम्, न सर्वार्थमिति सिद्धान्तः । के.

तत् सर्वत्राविशेषात् । ३।४।१३।३४ ॥

तत् सोमेन्द्रचरुरूपं कर्म सोमपानव्यापदि क्रियमाणं सर्वत्र आर्त्विजे याजमाने च वमने स्यात् । अविशेषात् विशेषस्य 'अमुष्य वमने प्रायश्चित्तम्' इति अश्रवणात् । इति पूर्वः पक्षः ।

स्वामिनो वा, तदर्थत्वात् । ३५ ॥

पूर्वपक्षव्यावृत्त्यर्थो वाशब्दः । स्वामिनो यजमानस्य सोमवमने सोमेन्द्रश्चरुः स्यात् न ऋत्विजो वमने । तदर्थत्वात् यजमानार्थत्वात् कर्मणो यत्र सोमो वम्यते । तस्मात् याजमाने वमने सोमेन्द्रश्चरुः इति सिद्धान्तः ।

लिङ्गदर्शनाच्च । ३६ ॥

'सोमपीथेन वा एष व्यृध्यते यः सोमं वमति' इति लिङ्गस्य दर्शनात् याजमाने सोमवमने सोमेन्द्रश्चरुः स्यात् । व्यृध्यते इति स वक्तव्यो यस्य सोमपानात् ऋद्धिः समृद्धिः प्रार्थनीया । तद्वैगुण्याच्च व्यृद्धिराशङ्क्यते । विगता ऋद्धिः व्यृद्धिः ऋध्यभावः हानिः । स्वामिन एव च तदुभयमपि, इति तस्यैवेष्टिः । के.

तानि द्वैधं गुणप्रधानभूतानि । २।१।३।६॥

अवगतमेतत् भावशब्दाः प्रधानकर्मणो वाचका इति । बहुप्रकाराश्च भावशब्दाः यजति ददाति जुहोति इत्येवंप्रकाराः, अवहन्ति दोग्धि पिनष्टि विलापयति इत्येवमादयश्च । तेषु संदेहः किं सर्वे प्रधानकर्मणः अभिधायकाः, उत केचित् गुणकर्मणः इति । भावार्थेभ्यः अपूर्वमिति व्युत्पादिते सर्वेषामेव आख्यातपदानां भावार्थत्वाविशेषात् सर्वेभ्य एव अपूर्वप्रसक्तौ इदानीं तदपवादार्थं गुणप्रधानविवेकः क्रियते । तत्रायं पूर्वपक्षिणोऽभिसन्धिः— यथा यजति ददाति जुहोतीत्यादिषु भावना भाव्यं अपूर्वमेव धात्वर्थस्य संनिधिवशाद् गृह्णाति प्रयोजनतया साध्यम्, तथा अवहन्ति दोग्धि पिनष्टि विलापयतीत्यादिष्वपि भावनाभाव्यम् अपूर्वमेव धात्वर्थस्य प्रयोजनतया साध्यं युक्तम् । अतः सर्वेषामेव प्रधानकर्मत्वमविशेषात् । ननु 'व्रीहीनवहन्ति' इत्यादिषु द्वितीयाश्रुत्या व्रीह्यादीनामेव समभिव्याहृतावघातादिक्रियाऽपेक्षया प्राधान्यमवगम्यते । अतः कथं कर्मणः प्राधान्यमेव । मैवम्, लोकवेदयोर्द्वितीयायाः प्राधान्याभिधानव्यभिचारात् । तथाहि, लोके तावत् 'उपाध्यायाय गां ददाति' इत्यादिषु अनीप्सितकर्मण्यपि द्वितीया दृश्यते एव । तथा वेदेऽपि सक्तुमारुतैककपालादिषु, 'सक्तून् जुहोति' 'एककपालं जुहोति' इत्यादिषु द्वितीया श्रूयते एव । न च सक्त्वादीनां प्राधान्यमस्ति । अतो नात्र द्वितीयाश्रुत्या व्रीह्यादीनां प्राधान्यमवगम्यते इति । न च वाच्यम्, वैतुष्यरूपदृष्टोपकारद्वारेण सामवायिकत्वे संभवति यागादिवत् अपूर्वद्वारेण आरादुपकारकत्वमयुक्तमिति । यतो वैतुष्यार्थत्वेन अवघातविधौ सति दृष्टार्थत्वं सामवायिकत्वं च भवति, विधेश्च अप्राप्तविषयत्वात् । न च प्रमाणा–

न्तरविषयवैतुष्योपायो विधिः संभवति इति दृष्टार्थत्वमेव। न च नियमस्य अप्राप्तत्वात् नियमार्थोऽयं विधिरिति वक्तव्यम्, नियमस्याश्रुतत्वात्। नहि अत्र नियमाभिधायकः कश्चिच्छब्दः श्रूयते। किञ्च वैतुष्योपायत्वेन अवघातस्य प्राप्तत्वात् उपायान्तरनिवृत्तिरूपो नियमो वक्तव्यः। तथा च सति शब्दान्तरेण परिसंख्यैव उक्ता भवेत्। सा च त्रिदोषत्वात् अयुक्तेति प्रधानकर्मत्वमेव। अथोच्यते, न वयं नियमस्य शाब्दत्वं अन्यनिवृत्तिरूपत्वं वा ब्रूमः। किं तर्हि? लोकप्राप्तस्यैव अपूर्वसाधनताज्ञापनम्। तच्च अस्य निवृत्तिफलत्वात् नियम इत्युच्यते। तदत्र अवघातस्य अपूर्वसाधनत्वमभिमतं यत् विधिज्ञाप्यं किं प्रयाजादिवत् साक्षादेव अपूर्वजनकत्वम्, अपूर्वाय वैतुष्यजनकत्वं वा? न तावत् साक्षात्, सिद्धान्तिना तदनभ्युपगमात्। नापि अपूर्वाय व्रीहिवैतुष्यजनकत्वम्, तस्यापि लोकत एव प्राप्तत्वात्। अथैवं सति लोकानुसारेण दलनादेरपि अपूर्वसाधनत्वप्राप्त्यै विधिरिति चेत् नैतत्, तथा सति परिसंख्याऽऽपत्तेर्न नियमविधित्वम्। तस्मात् प्रयाजादिवत् अपूर्वार्थत्वमेव अवघातादीनामिति। एवं च सति 'यदेकस्मादपूर्वं तदेतरत् तदर्थम्' इति न्यायेन व्रीह्यादिद्रव्याणां अवघातार्थत्वात् सर्वेषामेव आख्यातानां प्रधानकर्माभिधायित्वम्, ततश्च अपूर्वभेद एवेति। एवं प्राप्ते, अभिधीयते। भवेदेतदेवं यदि उभयमत्र द्रव्यं क्रिया च विधीयते। तदा हि द्वयोरेव प्रयोजनाकाङ्क्षायां द्रव्यस्य दृष्टक्रियानिष्पादकत्वेनैव प्रयोजनाकाङ्क्षानिवृत्तिः। कर्मणस्तु दृष्टासंभवात् अदृष्टार्थत्वमेव कल्प्यते इति प्रयुक्तम्। यदा तु वाक्यान्तरप्रतिपादितप्रयोजनं द्रव्यमुपात्तम्, तदा कर्मणोऽपि तदपेक्षितदृष्टोपकारनिर्वर्तनेनैव प्रयोजनत्वात् नादृष्टकल्पनायां प्रमाणमस्ति। इहापि 'व्रीहीनवहन्ति' इत्यादौ 'व्रीहिभिर्यजेत' इत्यादिवाक्यप्रतिपादितप्रयोजनमेव व्रीह्यादिद्रव्यमुपात्तम्, तथा विधीयमानस्य अवघातादिकर्मणोऽपि तदपेक्षिततण्डुलादिरूपदृष्टोपकारनिर्वर्तनेनैव प्रयोजनत्वात् नादृष्टकल्पनायां प्रमाणमस्ति। तदुक्तम्—
'नामाख्यातार्थसंबन्धे यदक्लृप्तं प्रयोजनम्।
तस्यादृष्टार्थता युक्ता, नेतरस्याप्रमाणिका॥'
इति॥ (वा. पृ. ४०६)। न च एवं सति अवघातादेर्दृष्टवैतुष्योपायत्वस्य प्राप्तत्वात् न तदर्थतया विधेवैयर्थ्यमिति वक्तव्यम्। यतो व्रीहीणां तण्डुलादिनिर्वृत्तिद्वारेण यागसाधनत्वात् तण्डुलनिर्वृत्तिरूपार्थाक्षेपेण अवघातप्राप्तिर्वक्तव्या। न च श्रौते विधौ सति आक्षेपः संभवति। तेन आक्षेपात् प्रागेव श्रौतस्य विधेः प्राप्तविषयत्वम्। न च विनापि विधिना प्राप्स्यतः किं विधिनेति विधिवैयर्थ्यम्, अप्राप्तांशपूरणेनैव अर्थवत्त्वात्। तथाहि, नित्यभूता खलु प्राप्तिः विधितोऽवगम्यते, आक्षेपतश्च पाक्षिकी। अन्यस्यापि वैतुष्योपायस्य आक्षेपाविशेषात्। तेन यस्मिन् पक्षे नावघातप्राप्तिः तत्पक्षपूरणेन अपूर्वोपयोगितया विधेः साफल्यमिति। अयमेव च नियमपरिसंख्ययोर्भेदः यत् पक्षप्राप्तविषयत्वात् नियमविधेः अप्राप्तांशपूरणमेव फलम्, अर्थादन्यनिवृत्तिः। परिसंख्यायां तु युगपदुभयप्राप्तेः अप्राप्तांशपूरणाभावात् अन्यनिवृत्तिरेव विधेः फलमिति। एष च नियमविधिप्रकारः 'व्रीहिभिर्यजेत' इत्यत्र द्रव्यविधावपि ऊहनीयः। ननु अत्र किम् अवघातादिजन्यं अदृष्टमस्ति न वा? न तावन्नास्ति, अदृष्टमन्तरेण नियमानुपपत्तेः। अथास्ति, तदा संमार्गादिवत् अवघातादेरपि अदृष्टार्थत्वात् नास्त्यधिकरणभेद इति। नहि अवघातादेः अदृष्टार्थत्वे विधानमनुष्ठानं वा, किंतु दृष्टलोलुपत्वात् विधिः अपेक्षितव्रीहिवैतुष्यार्थमेव। तस्य च अप्राप्तांशपूरणेन यत् अवघातादेर्नियमानुष्ठानप्रतिपादनम्, तदुपपत्तये तण्डुलादिगतमदृष्टं कल्प्यमानम् 'न निमित्तं विधिरपबाधते' इति न्यायेन न दृष्टार्थत्वं अबाधितमधिकरोति। संमार्गादिषु तु विध्यपेक्षितदृष्टाभावात् अदृष्टार्थमेव विधानमिति भेदः। यत्तु द्वितीया प्राधान्यं व्यभिचरतीत्युक्तम्, तदनन्तराधिकरणे परिहरिष्यामः। इह पुनः अद्वितीयान्तानामपि बहूनाम् 'प्रयाजशेषेण हवींष्यभिघारयति' 'मैत्रावरुणाय दण्डं प्रयच्छति' 'अग्नेस्तृणान्यपचिनोति' 'तप्ते पयसि दध्यानयति' इत्येवमादीनामपि उदाहरणत्वात् वाक्यान्तरक्लृप्तप्रयोजनद्रव्यसंबन्धेन दृष्टोपकारदर्शनमेव प्रमाणमिति। तदुक्तम् 'यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्' 'यैस्तु द्रव्यं चिकीर्ष्यते

गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्' (सू.२।१।७–८) इति । अतो द्रव्यगुणत्वात् एवमादीनां नापूर्वभेद इति । **प्रयोजनम्–** विकृतौ प्रैयङ्गवे चरौ अतिदेशप्राप्तः अवघातो व्रीहिद्रव्ये एव कर्तव्यः, प्रधानश्रुतद्रव्याङ्ग-द्रव्यस्य अबाधकत्वात् । अतिदिष्टप्रयाजाज्यवदिति पूर्वः पक्षः । तदुक्तम् '**प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम् । प्रयाजेष्वाज्यवत् तेन हन्तौ स्याद् व्रीह्यबाधनम् ॥**' इति । ('प्रयाजेज्याज्यवत्तेन' इति मूले वा. पृ. ४०७) । सिद्धान्ते तु (प्रयोजनं–) प्रियङ्गूणामेव कार्यान्तरोपयुक्तत्वेन संस्कार्यत्वात् तासामेवावघातः इति । तदुक्तम् '**प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते । तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः पियङ्गवः ॥**' इति । (वा. पृ. ४०७) । तथा प्रकृतावपि प्रयोजनानि, अदृष्टार्थत्वे सति सर्वौषधिके कृष्णलावघातवत् सकृदेवावघातः कर्तव्यः । एवं यव-प्रयोगेऽपि अवघातार्थं व्रीहय एवोत्पादयितव्याः । तथा प्रधानद्रव्यवैतुष्यं उपायान्तरेणापि कर्तव्यं यदि पूर्वः पक्षः । सिद्धान्ते तु तण्डुलनिर्वृत्तिपर्यन्तं अवघातोऽभ्यसितव्यः । यवप्रयोगे तु यवा एव अवहन्तव्याः । प्रकृतद्रव्यवैतुष्यं च नोपायान्तरेण कर्तव्यमिति । सूत्रं तु–आख्यातानि द्वैधं द्विप्रकारं विधायकानि कानि चित् गुणकर्मणः, कानि चित् प्रधानकर्मण इति ।

यत्तु केनापि गुरुमतमजानता तन्मतमसम्यगुपन्यस्य दूषितम्, तदुपहासास्पदम् । तथाहि, स खलु एवमाह 'अन्यनिष्ठो हि भावार्थो न विधिविषयः, नापूर्वविषय इत्यर्थः । अन्यनिष्ठत्वं च भावार्थस्य अवगतापूर्वसाधन-द्रव्यप्रयोजनत्वम् । तथा अवघातप्रोक्षणादिषु विद्यते इति तेषामपूर्वविषयत्वाभावात् गुणकर्मत्वमेव । अनन्यनिष्ठस्तु भावार्थोऽपूर्वविषय एव । अनन्यनिष्ठत्वं च भावार्थस्य अवगतापूर्वसाधनद्रव्यप्रयोजनत्वमेव । तच्च प्रयाजानुयाजादिषु विद्यते इति तेषां प्रधानकर्मत्वमेव ।' इति । न चैवम्भूते प्रधानकर्मत्वे सुवर्णभरणदानाध्ययनादीनि व्यभिचारस्थानानि भवन्ति, सर्वेषामेव अनारभ्याधीतत्वेन अपूर्वसाधनद्रव्यप्रयोजनत्वानवगमात् । नापि 'यस्य पर्णमयी जुहूर्भवति' इतिवत् अपूर्वसंबन्धिद्रव्यप्रयोजनत्वावगतिः, सुवर्णादीनां व्यभिचरितक्रतुसंबन्धित्वात् अपूर्वोपायत्वानुपस्थितेः, द्वितीयाद्यनीप्सितकर्मण्यपि नानुपपन्ना । एवं च सति अवघातादिषु अन्यनिष्ठत्वेन भावार्थस्य अपूर्वविषयत्वासंभवात् विषयस्य च पूर्व-विशेषावगतिहेतुत्वात् विधिशब्देन अपूर्वं प्रतीयमानं कृतमेव अनूद्यते इति युक्तम् । प्रयाजादिषु तु अपूर्व-साधनद्रव्यप्रयोजनत्वानवगमे विषयभावस्य उक्तत्वात् युक्ता प्रयाजादिविषयापूर्वान्तरावगतिरिति । न चैवं सति अवघातादीनां अपूर्वाविषयत्वात् अविधेयत्वमिति वाच्यम् । नहि अपूर्वविषयत्वं विधेयत्वम्, किंतु अपूर्व-सिद्ध्यर्थमुपादीयमानत्वम् । तच्च अवघातादिष्वपि अविशिष्टमेवेति । यदा यत् तत्सिद्ध्यर्थमुपादीयते, तत् विधेयमिति तन्त्रे व्यवहारः इति । सर्वं चैतत् अवहितमतिभिः तत्त्वतो निरूप्यमाणं अस्मन्मताभिन्नमेव । अपूर्वाभिधानाभिधेययोः परं विशेषः । अपूर्वाभिधानं च अपूर्वाधिकरणे एव निराकृतम् । अलं अतिपरपक्ष-प्रतिक्षेपमात्रपरतयेति । तौता.

## ⌛ तानि द्वैधं गुणप्रधानभूतानि । २।१।३।६॥

तानि अपूर्वबोधकानि आख्यातानि द्वैधं द्वेधा द्विप्रकाराणि । कानिचित् गुणभूतानि कानिचित् प्रधानभूतानि चेति । विहितकर्मणां गुणत्वप्रधानत्वद्वारा आख्यातानां द्विविधत्वं ज्ञेयम् ।

**यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् । ७ ॥**

प्रधानकर्मणां लक्षणमुक्त्वा तद्वाचकानां प्रधानभूतानामाख्यातानां लक्षणमर्थादाह । यैः प्रयाजादिभिः आज्यादि द्रव्यं दृष्टधर्मवत्तया न चिकीर्ष्यते नोत्पादयितुमिष्यते, तानि कर्माणि प्रधानभूतानि । द्रव्यस्य आज्यादेः प्रयाजादिदृष्टकार्यनिर्वर्तकतया गुणभूतत्वात् प्रयाजादिनिरूपितं गुणत्वं प्राप्तत्वात् । तथा च तादृशप्रधानकर्मविधायकानि आख्यातानि प्रधानभूतानि इत्यर्थः ।

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् । ८ ॥**

गुणकर्मणां लक्षणमुक्त्वा तद्द्वारा गुणभूतानामाख्यातानां लक्षणं बोधयति । तुशब्दः प्रधानकर्मादिवैलक्ष-

ण्यार्थः । यैः आधानावहननादिकर्मभिः द्रव्यं अग्निव्रीह्यादि चिकीर्ष्यते उत्पादयितुं संस्कर्तुं विकर्तुं आप्तुं वा इष्यते, तत्र कर्मणि गुणः गुणभावः प्रतीयेत । तस्य कर्मणः द्रव्यप्रधानत्वात् द्रव्यसंस्कारार्थत्वात् । तत्र हि द्रव्यं संस्कार्यतया प्रधानम् । अर्थात् तादृशानां गुणकर्मणां बोधकानि आदधीत अवहन्ति इत्यादीनि आख्यातानि गुणभूतानि । यैर्द्रव्यमुत्पाद्यते यथा आधानेन अग्नयः क्रियन्ते, वरणेन ऋत्विजः संस्क्रियन्ते, अवहन्तिना व्रीहयः पेषणेन वा तण्डुला विक्रियन्ते तानि गुणभूतानि प्रयोजनवद्द्रव्यसंस्कृतेरीप्सितत्वात् । के.

* 'तानि द्वैधं' इति (न्यायेन) अभ्याधानेन द्रव्यं चिकीर्ष्यते । दृष्ट एव संस्कारः अग्नेः ('भ्राष्ट्रादाहृत्य अवदध्यात्' इत्यादौ) । टुप्. १२।४।७।२०. * उपादेयस्थले प्रकृतग्रहणस्य 'तानि द्वैधम्' इत्यत्र निराकृतत्वात् । भाट्ट. ४।१।११. * एतेन दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् इति न्यायस्य तानिद्वैधादौ व्युत्पादनेऽपि अकर्मकाले प्रयोगबलात् अवश्यमदृष्टार्थत्वमिति शङ्कानिराकरणार्थत्वेन अस्य (गानस्य) अवैयर्थ्यं इति सूचितम् । के.

॥ तानिद्वैधाधिकरणम् । कानिचित् कर्माणि प्रधानभूतानि, कानिचिच्च गुणभूतानि । तेषां लक्षणमुच्यते ॥

**तानि द्वैधं गुणप्रधानभूतानि । २।१।३।६ ॥**

भाष्यम्— अवगतमेतद् भावशब्दाः कर्मणो वाचका इति । बहुप्रकाराश्च भावशब्दाः यजति, जुहोति, ददाति इत्येवंप्रकाराः, दोग्धि, पिनष्टि, विलापयति इत्येवमादयश्च । तेषु संदेहः किं सर्वे प्रधानकर्मणो विधायकाः, उत केचित् संस्कारकर्मणः इति । भावार्थत्वाविशेषात् सर्वे प्रधानकर्मणो वाचका इति प्राप्तम्, ततो ब्रूमः । तानि द्वैधं भवितुमर्हन्तीति । द्विप्रकाराणि, कानिचित् प्रधानकर्मणो वाचकानि, कानिचित् संस्कारकर्मणः । एवमपि सर्वाणि अर्थवन्ति, अर्थवत्त्वे सति सर्वेभ्यो न शक्यमपूर्वं कल्पयितुम् । अतो न सर्वाणि प्रधानकर्मणो वाचकानि ।

वा— एवमाख्यातभेदानुसारेण अपूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं गुणप्रधानविवेकारम्भः । तत्र तावत् 'आख्यातत्वाविशेषेण भूतैर्भव्यार्थजन्मनः । सिद्धे च साध्यताशक्तेः सर्वाख्यातप्रधानता ॥' यावद्धि प्रयोजनकल्पनं तत् सर्वं धात्वर्थात् न्याय्यं प्रयोजनवच्च प्रधानमपूर्वसाधनं च । तेन यज्यादिवदेव अवहन्त्यादीनामपि व्रीह्यादिभिर्निष्पाद्योऽर्थः । अतश्च तेऽपि अपूर्वसाधनमिति । अत्रोच्यते 'नामाख्यातार्थसंबन्धे यदक्लृप्तप्रयोजनम् । तस्यादृष्टार्थता युक्ता नेतरस्याप्रमाणिका ॥' सर्वत्रैव द्रव्यकर्मसंबन्धे कर्मणां द्रव्येण विना अनुत्पत्तेः प्रथमं तावत् द्रव्यं कर्म उत्पादयत्, दृष्टोपकारित्वात् तदर्थमाभासते । तत्र क्वचिद् भूयः कर्म परावृत्य द्रव्यस्योपकरोति क्वचिदात्मलाभमात्रमनुभवति । तद्यदा आत्मलाभमात्रं तस्य दृश्यते, तदा साकाङ्क्षत्वात् अदृष्टं कल्पयितुं शक्यते । यदा तु कार्यान्तरौपयिकेन दृष्टेनैव तण्डुलनिर्वृत्त्यादिना द्रव्योपकारेण निराकाङ्क्षीभवति, तदानीं अदृष्टकल्पनाऽवसराभावात् अन्यथैव विधानार्थवत्त्वोपपत्तेः नादृष्टसाधनत्वं प्रतीयते ।

**यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् । ७ ॥**

भाष्यम्— एवं सति अल्पीयसी अदृष्टकल्पना न्याय्या । ननु न विनिगमनायां हेतुमवगच्छामः, कुतोऽपूर्वं कुतो नेति । तदुच्यते । यैर्भावकर्मभिः न द्रव्यं संस्कर्तुमिष्यते, उत्पादयितुं वा, तानि प्रधानभूतानि प्रधानकर्मणो वाचकानि । द्रव्यस्य गुणभूतत्वात् । द्रव्यं हि गुणभूतम्, कर्मनिर्वृत्तेः ईप्सिततमत्वात् ।

वा— यैः कर्मभिर्द्रव्यं स्वरूपतो धर्मतो वा न कर्तुमिष्यते, यथा प्रयाजादिभिः, तानि स्वसाधनानि प्रति प्रधानभूतत्वात् अदृष्टार्थानि भवन्ति ।

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् । ८ ॥**

भाष्यम्— यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत कर्म । कुतः ? तस्य द्रव्यप्रधानत्वात् । प्रत्यक्षं यजेत इत्येवमादिभिः द्रव्यं न चिकीर्ष्यते । तस्मात् तानि प्रधानकर्मणो वाचकानि, द्रव्यस्य गुणभूतत्वात् । पिनष्टि इत्येवमादिभिर्द्रव्यं संस्क्रियते । तस्मात् तानि गुणकर्मवचनानि । एष एव विनिगमनायां हेतुः ।

प्रयोजनं तु पूर्वस्मिन् पक्षे प्रैयङ्गवेऽपि चरौ व्रीहयः उत्पाद्या अवघातार्थत्वेन, सिद्धान्ते नोत्पाद्याः।

वा—यैः पुनः द्रव्यं उत्पाद्यते यथा आधानेन अग्नयः अवाप्यन्ते क्रियन्ते वा, यथा वरणेन ऋत्विजः संस्क्रियन्ते, यथा अवहन्तिना व्रीहयः, पेषणेन तण्डुलाः (तण्डुलपिष्टानि)। तानि गुणभूतानि प्रयोजनवद्द्रव्यसंस्कृतेः ईप्सितत्वात्। यदा (तु) दृष्टार्थमदृष्टार्थं च उभयथाऽपि तुल्यवत् अनुष्ठीयेत, तदा किं प्रयोजनं चिन्तायाः। तदुच्यते। प्रैयङ्गवेऽपि चरौ अतिदेशप्राप्तो व्रीहिसाधनक एव अवहन्तिः कर्तव्यः पूर्वपक्षे। कुतः? 'प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम्। प्रयाजेज्याज्यवत् तेन हन्तौ स्याद् व्रीह्यबाधनम्॥' सिद्धान्ते तु बाध्यन्ते। कुतः? 'प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते। तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः॥' ननु च पूर्वपक्षेऽपि प्रधानप्रयुक्तव्रीह्याश्रयत्वेन प्रकृतौ अप्रयोजकत्वात् प्रैयङ्गवे चरौ प्रधानेन अगृह्यमाणान् व्रीहीन् अवघातो न लभते। नैतदेवम्। 'तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः। वाजिनेज्यादि तुल्यं च नाप्रयोजकलक्षणम्॥' 'व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्र इयं प्रयोजिका इयं न इति नास्ति विशेषहेतुः। न च वाजिनादिवत् अवहन्तेः अनुनिष्पादित्वम्। न च पदकर्मवत् (एकहायन्याः सप्तमपदवत्) परप्रयुक्तप्रकृतैकहायन्यधीननिराकाङ्क्षत्वम्। न च एकदेशद्रव्यत्वमुत्तरार्धादिवत्। नापि 'पुरोडाशकपालेन' इतिवत् अर्थाभिधानकर्मत्वम्। तस्मात् अवहन्तिरपि प्रयोजकः। न च अस्मिन् पक्षे नियोगतो यागार्था एव व्रीहयः अवहन्तव्याः, लौकिकैरपि कर्मसिद्ध्यविशेषात्। न चात्र प्रकृतग्रहणे प्रमाणम्, प्रकरणस्य अविशेषकत्वात्। न च अधिकारात् विशेषः 'तुल्येषु नाधिकारः स्यात्' इति न्यायात्। (नैराकाङ्क्ष्ये अधिकारस्य नवमाधिकरणसूत्रे विशेषकत्वनिरासात् न प्रकृतग्रहणे प्रमाणमित्यर्थः। सु. पृ. ६२६)। संस्कारपक्षे तु लौकिकानामानर्थक्येन (आनन्दाश्रमीये तु आनर्थक्ये न इति मुद्रितम्। वयं तु तृतीयान्तं मन्यामहे) असंस्कार्यत्वात् अपूर्वसाधनविशेषणत्वेन कथञ्चित् प्रकृतग्रहणं क्लेशेन भविष्यति। न च आराद्उपकारकत्वे अवहन्तेः यागस्येव लौकिकैः साध्यमानस्य किञ्चिदानर्थक्यं इति श्रौतत्वात् व्रीहिमात्रग्रहणमेव युक्तम्। (स्वयं प्रयोजनान्तराण्याह—) धर्ममात्रं च तदा अवहन्तिः सर्वौषधावहन्तिवत् सकृदेव च कर्तव्यः, न आ तण्डुलनिर्वृत्तेः। प्रधानव्रीहीणां च दलनादिभिरपि तण्डुलीभावः स्यात्। सांनाय्योपांशुयाजाङ्गत्वमपि चास्य प्रकरणाविशेषात् तथा भवति, इति तद्विकारेष्वपि प्रयोक्तव्यः इत्यादीनि प्रयोजनानि। (त्रीणि प्रयोजनान्युक्तानि। आदिशब्दात् यवपक्षेऽपि व्रीहीणामेव अवघातः, त्रयाणामेव च इति प्रयोजनद्वयम्। सु. पृ. ६२६)।

शा— आख्यातभेदानुसार्यपूर्वभेदानुसरणं कर्तव्यं इति स्थितम्। तस्यापवादः क्रियते।

सोम— भावार्थाधिकरणेनैव अस्य संगतिः। सूत्रार्थस्तु— तानि आख्यातानि गुणकर्मप्रतिपादकानि प्रधानकर्मप्रतिपादकानि इत्येवं द्वैधं द्विधा इति।

वि— 'अवघातादिनाऽपूर्वमुत्पाद्यं विद्यते न वा।, यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥, दृष्टे तुषविमोके तु नापूर्वं द्रव्यतन्त्रतः। स्याद् यजत्यादिवैषम्यं नियमापूर्वकृद् वचः॥'

भाट्ट— 'व्रीहीनवहन्ति' इत्यादौ पूर्ववदेव अवघातस्य फलभावनाकरणत्वमविवादम्। तच्च फलं न व्रीहयः, अजन्यत्वात्। नापि वैतुष्यम्, तज्जनकत्वस्य लोकसिद्धत्वेन अविधेयत्वात्। नापि पक्षे दलनादेरपि अर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः, तस्यापि वैफल्यात्। न च तस्यादृष्टार्थत्वम्, अदृष्टस्य अवश्यकल्पनीयत्वे शाब्दावघातादेव तत्कल्पनौचित्यात्। अतोऽदृष्टार्थमेव अवघातः। तदपि चादृष्टं न व्रीहिनिष्ठम्, तत्त्वावच्छिन्नं प्रति आत्मत्वेन समवायिकारणत्वात्। अतः पूर्ववदेव व्रीहय एव अवघातार्था इति व्रीहिविशिष्टोऽवघात एव अदृष्टार्थमाराद्उपकारकत्वेन विधीयते। इति प्राप्ते, दृष्टे संभवति अदृष्टस्य अन्याय्यत्वात् वितुषीभावः एव अवघातफलम्। न च तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम्, दलनाद्युपायान्तरव्यावृत्तिफलक-

नियमस्यैव अवघाताश्रितस्य अदृष्टार्थे विधेयत्वात्। अत एव कृष्णलचरौ अवघाताभावे तस्य लोपः। वस्तुतस्तु श्रौतस्य अवघातस्यैवाक्षेपतः पूर्वप्रवृत्त्या वितुषीभावार्थं विधेयत्वम्। अतश्च आक्षेपप्रतिबन्धात् दलनादि-व्यावृत्तिफलको नियमः फलम्। वैतुष्यस्य च दलनेनापि जायमानत्वात्। वैयर्थ्यशङ्का तु अवघातादेव व्रीहि-निष्ठादृष्टस्यापि उत्पत्तिकल्पनान्निराकर्तव्या। तददृष्टस्य च जन्यत्वमात्रं लाघवात् कल्प्यते, न तु प्रयोजकत्वमपि, दृष्टरूपे वैतुष्ये एव तत्कल्पनात्। अतः कृष्णलचरौ वैतुष्याभावे तल्लोपः। आर्थिकविध्यन्तरकल्पनात् एकया द्वितीययैव वा जन्यद्वयोक्तेः नानेकोद्देश्यता। तत्तददृष्टस्य च द्वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैव अवगतेः तत्त्वेनैव समवायिकारणता, नात्मत्वेन। अतश्च अवघातस्य अदृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूत-व्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम्। प्रयोजनं यागार्थव्रीह्यपेक्षया व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे, सिद्धान्ते नेति।

मण्डन— 'संस्कारकर्मैव किलावघातः।'

शंकर— 'आख्यातद्वैधमिष्टं नः।' ४. 'प्रधानं कर्म वक्ति तत्।' ५. 'गुणकर्मापरं वक्ति।' ६. (पञ्चमषष्ठाभ्यां द्विविधाख्यातस्वरूपलक्षणमुक्तम्)।

* भावार्थाधिकरणे अपूर्वं सिद्धम्, धात्वर्थस्य अपूर्व-जनकत्वे द्रव्यादेस्तदर्थत्वमिति च, तदपवादार्थं **तानि-द्वैधाधिकरणम्**। कौ. २।१।४।७. * **तानिद्वैधाधिकरणे** दृष्टोपकारकं गुणकर्म, अदृष्टोपकारकं प्रधानकर्म इत्युक्तम्। कु. * सत्यपि अपूर्वप्रयुक्तत्वे अपूर्वार्थत्वमवघातादे-र्मन्त्राणां च न प्रयाजादिवददृष्टद्वारा, **तानिद्वैधमन्त्रा-धिकरणादौ** निरस्तत्वात्, किन्तु व्रीह्यग्न्यादिद्वारा। **सोम. ९।१।१.**

**ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्। ३।७।१९।३९ ॥**

भाट्टदीपिकायां कुतूहले च 'अग्नयश्च स्वकाल-त्वात्' इति सूत्रं पृथक्त्वेन गृहीत्वा अन्तरागर्भिणी-न्यायेन अधिकरणान्तरमेव कृतम्। पूर्वपक्षं उत्सूत्रं गृहीत्वा सिद्धान्तपरत्वेनैव च तत् स्वीकृतम्। वार्तिक-कारैरपि 'अधिकरणान्तरसूत्रोक्तन्यायप्रतिपादितानुमित-पूर्वपक्षः सिद्धान्त एवायं सूत्रवाक्यभेदेनोच्यते' इत्यु-क्तम्। परन्तु सूत्रभेदेन इत्यनुक्त्वा सूत्रवाक्यभेदेन इत्येवोक्तम्। तेन भाट्ट–कु–वत् भिन्नं सूत्रं वार्तिककारा न मन्यन्ते। भाष्येऽपि 'अग्नयश्च सर्वार्था इति समधि-गतमेतत्' इत्युक्त्वा सिद्धान्तत्वमेव तस्य सूत्रवाक्यस्य स्वीकृतम्। उत्तरसूत्रेण अग्निविषये किमपि नोक्तं इत्यपि च तदनुसारेण युक्तमेव। परंतु 'अग्नयश्च स्वकालत्वात्' इति वाक्यस्य भिन्नसूत्रत्वं भाष्यवार्तिक-कारौ नानुमन्येते।

ज्योतिष्टोमे ये ऋत्विजः स्वामिसप्तदशाः इत्युक्ताः ते सर्वे सर्वार्थाः स्युः। यागकर्मसु यो यत् कर्तुमिच्छति शक्नोति च, स तत् कुर्यात्। न तु तत्र काचिद् व्यवस्था। कुतः? प्रयुक्तत्वात् परिक्रयेण यागकर्मसु योजितत्वात्। इति पूर्वः पक्षः। अत्र सिद्धान्तः उत्तरसूत्रे भविष्यति 'तत्संयोगात् कर्मणः' इत्यत्र। अथ अन्तरागर्भिणी-न्यायेन अग्निविषयं सिद्धान्तमाह– 'अग्नयश्च स्वकाल-त्वात्' इति। अत्र उत्सूत्रः पूर्वपक्षः–'अग्नयः आहवनी-यादयः न सर्वार्थाः, किन्तु प्रकृत्यर्था एव। विकृत्यर्थत्व-स्यापि स्वीकारे तु प्रकृतिवद्विकृतिः इति चोदकेनापि प्राप्त्या द्विरुक्तत्वदोषः' इति। एवं प्राप्ते, उच्यते। अग्नयश्च सर्वार्थाः प्रकृतिविकृतिरूपसर्वकर्मार्थाः। कुतः? स्वकालत्वात् वसन्तादिः ऋतुः कृत्तिकादीनि नक्षत्राणि च अग्नीनां स्वः कालः। स्वीयः कालो येषामाधानार्थं विहितः ते स्वकाला अग्नयः। नहि तेषामाधानं कंचित् यागकालमधिकृत्य विहितम्। स्वकालत्वात् अग्नयः सर्वार्थाः इति सिद्धान्तः।

**तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्या-र्थवत्त्वात्। ४० ॥**

पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम्। तत्संयोगात् अध्वर्युहोत्रादिविशिष्टपुरुषैः विशिष्टकर्मणः संयोगात्, समाख्याऽऽदिभिः तादृशस्य संयोगस्य ज्ञात-त्वात् व्यवस्थैव, नाव्यवस्था। एवं संयोगस्य कर्मपुरुष-संयोगस्य अर्थवत्त्वात् सफलत्वसिद्धेर्व्यवस्थैव। अव्यव-स्थायां हि संयोगो निष्फलः स्यात्। आध्वर्यवसमाख्यं

कर्म अध्वर्युणैव कर्तव्यम्, न होत्रा नोद्गात्रा । हौत्रसमाख्यं शस्त्रानुवचनादि कर्म होत्रैव कर्तव्यम्, नाध्वर्युणा नोद्गात्रा । स्तोत्रगानरूपमौद्गात्रसमाख्यं कर्म उद्गात्रा कर्तव्यम्, नाध्वर्युणा न होत्रा इति सा व्यवस्था ।

अत्र सुधा— तैः ऋत्विग्भिः कर्मणः संयोगात् यथासमाख्यं व्यवस्था स्यात् । व्यवस्थितसंभवे विकल्पापादकाव्यवस्थितशास्त्रार्थायोगेन लिङ्गप्रकरणापेक्षितव्यवस्थासमर्पकतया हौत्रादिसमाख्याऽऽख्यस्य हौत्रर्त्विक्संयोगस्य तद्विरोधाभावेन श्रुतिकल्पकत्वोपपत्तेः विनियोगाख्यार्थवत्त्वात्—इति । के.

* 'तमध्यापयीत' इति संनिधिसिद्धोपनीतकर्तृकत्वानुवादः । यद्वा उपनयनाध्यापनवाक्ययोः प्रयोजकव्यापाराविवक्षया उपगमनाध्ययनविधिः । मणि. पृ. ४.

‖ 'तं यथायथोपासते तदेव भवति' इति न्यायेन उत्कृष्टब्रह्मोपासनात् उत्कृष्टमेव फलं मोक्षाख्यं भवत्येव । श्वेताश्व०भाष्यम् १।७.

‖ 'तेनोत्पद्यविनष्टत्वान्नास्यारम्भक्षणोऽपि हि' इति न्यायः । ननु आत्माश्रितत्वेऽपि क्रियायाः क्षणिकत्वेन उत्पन्नमात्रविनाशिन्याः 'तेनोत्पद्य०' इति न्यायेन अपूर्वारम्भकत्वं न संभवति इत्याशङ्क्य । सु. पृ. ६०५.

* 'तेन ह्यन्नं क्रियते' इति 'शूर्पेण जुहोति' इति विधेः अर्थवादः । वि. १।२।३. * 'तस्मात् एकं साम तृचे क्रियते स्तोत्रीयम्' इत्यत्र ननु समासस्थामपि ऋचमनूद्य त्रित्वविधानं दृष्टम् । न । तत्रापि समासार्थस्यैव विधानाभ्युपगमात् । के. * 'तस्मात् काले एव दद्यात् काले न दद्यात्' अयं अभ्यनुज्ञारूपः प्रतिषेधः । ( समृद्धिकाले दातव्यम् । दारिद्र्ये तु न दातव्यम् इत्यर्थः । ) बाल. पृ. ३३ * 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति अनारभ्य विधीयते । वा. ३।८।८।१८.

‖ तस्याऽऽग्रयणाद् ग्रहणम् । १०।५।१०।४२॥

षोडशी ग्रहः उक्थ्याग्रयणाभ्यां पात्राभ्यां सकाशात् ग्रहीतव्यः, उत आग्रयणादेव इति विचारे सिद्धान्तेनोपक्रमते । तस्य षोडशिनो नाम ग्रहस्य आग्रयणात् पात्रात् ग्रहणं कर्तव्यम् । 'आग्रयणाद् गृह्णाति षोडशिनम्' इति वचनात् । वचनात् इति पदं उत्तरसूत्रात् आवृत्त्या अपकृष्यते ।

उक्थ्याच्च वचनात् । ४३ ॥

षोडशिनो ग्रहस्य आग्रयणात् पात्रात् उक्थ्याच्च पात्रात् ग्रहणं कर्तव्यम् । 'आग्रयणाद् गृह्णाति षोडशिनम्' इति 'उक्थ्याद् गृह्णाति षोडशिनम्' इति च वचनात् । इति पूर्वः पक्षः ।

अनभ्यासे पराक्शब्दस्तादर्थ्यात् । ४५ ॥

ननु तर्हि आग्रयणात् उक्थ्याच्च पात्रात् अभ्यासेन षोडशी ग्रहः पृथक् ग्राह्यः इति चेन्नेत्याह । कुतः ? 'यत् पराञ्चमुक्थ्यान्निगृह्णाति षोडशिनम्' इति वचनात् । पराक्शब्दः अनभ्यासे वर्तते । तादर्थ्यात् पराक्शब्दस्य तदर्थत्वावगमात् 'पराचीः सामिधेनीरन्वाह' अनभ्यस्ता इति गम्यते । एवं पराक्शब्दात् पात्रद्वयात् अभ्यासेन पृथक् ग्रहणं नोपपद्यते । तस्मात् उक्थ्याग्रयणाभ्यां पात्राभ्यां सकाशात् सकृदेव षोडशी ग्राह्यः । इति पूर्वपक्षः ।

उक्थ्यविच्छेदवचनत्वात् । ४६ ॥

इतश्च षोडशी ग्रहः उक्थ्यात् आग्रयणाच्च ग्राह्यः । 'विच्छिन्दन्ति ह वा एतदुक्थ्यम्, यदुक्थ्यानि षोडशिनं च ततः प्रणयन्ति' ततः उक्थ्यात् प्रणयन्ति इति प्रणयतिना संबन्धात् विस्पष्टं उक्थ्यस्य पात्रस्य अपादानत्वं दर्शयति । तस्मात् उक्थ्यात् आग्रयणाच्चेति उभाभ्यां षोडशी ग्रहीतव्यः ।

आग्रयणाद्वा, पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् । ४७ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । षोडशी ग्रहः आग्रयणादेव पात्रात् ग्राह्यः, न उक्थ्यपात्रात् । 'यत् पराञ्चमुक्थ्यान्निगृह्णाति षोडशिनम्' इति पराक्शब्दस्य देशवाचित्वात् कालवाचित्वात् इत्यर्थः । उक्थ्यादनन्तरं षोडशी ग्राह्यः इत्युक्ते उक्थ्यस्य अपादानत्वं नास्ति । तस्मात् उक्थ्यादनन्तरं आग्रयणात् षोडशी ग्राह्य इत्येव । पुनराधेयवत्, यथा 'पराञ्चमग्न्याधेयात् पुनरादधाति' इति कालसंयोगे पञ्चमी नापादाने, एव-

मिहापि । तस्मात् षोडशी आग्रयणादेव ग्राह्यः इति सिद्धान्तः ।

**विच्छेदः स्तोमसामान्यात् । ४८ ॥**

यदुक्तं पूर्वपक्षिणा 'विच्छिन्दन्ति ह वा एतदुक्थ्यम्, यदुक्थ्यानि षोडशिनं च ततः प्रणयन्ति' इति विच्छेदवचनात् उक्थ्यस्य अपादानत्वमिति, तन्न । विच्छेदः स्तोमसामान्यात् उक्तः । उक्थ्यग्रहास्त्रयोऽपि एकविंशस्तोमकाः षोडशिग्रहोऽपि तादृशः । एवमेकविंशस्तोमसामान्यात् षोडशिग्रहस्यापि उक्थ्यविच्छेदत्वेन उत्प्रेक्षा कृता । उक्थ्यविच्छेदो नाम प्रचारकाले त्रीन् उक्थ्यग्रहान् प्रणयन्ति तदनन्तरं षोडशिनं प्रणयन्ति इति । 'ततः प्रणयन्ति' इत्यपि पञ्चमी नापादाने, किन्तु कालसंबन्धे एव, ततः उक्थ्यप्रणयनादनन्तरं षोडशिनं प्रणयन्ति इति । तस्मात् आग्रयणादेव षोडशिनो ग्रहणं नोक्थ्यादपि इति सिद्धान्तः । के.

**ⵣ तस्योपदेशसमाख्यानेन निर्देशः । ३।७। २०।४१ ॥**

पूर्वाधिकरणे स्वामिसप्तदशानामृत्विजां समाख्याऽऽदिना तत्तसु यागकर्मसु संयुक्तत्वज्ञानात् व्यवस्था इत्युक्तम् । तदपवादार्थमिदं सिद्धान्तसूत्रम् । तस्य आध्वर्यवादिसमाख्यातस्य कर्मणोऽपि । उपदेशसमाख्यानेन उपदेशेन 'तस्मान्मैत्रावरुणः प्रेष्यति च अनु चाह (अन्वाह च)' 'प्रतिप्रस्थाता मन्थिनं जुहोति' इत्यादिना, नेष्ट्रीया पोत्रीया इत्यादिना समाख्यानेन च निर्देशो भवति । तेनापि विशेषव्यवस्था ज्ञातव्या । सौत्रस्य निर्देशपदस्य अपवादार्थकता कुतूहले उक्ता ।

अत्र सुधा—'कर्मसमूहस्य आध्वर्यवादिसमाख्यानात् क्वचिदपि बाधे समाख्यैक्यात् सर्वत्र अप्रामाण्यापत्तेः विशेषसमाख्यया बाधायोगमाशङ्क्य मैत्रावरुणादिवाक्येन बाधस्य अवश्याङ्गीकार्यत्वात् सृष्टीरुपदधाति इतिवत् भूम्ना आध्वर्यवादिसमाख्याप्रवृत्त्यङ्गीकारेण परिहर्तुं तस्य आध्वर्यवादिसमाख्यातस्यापि कर्मणः यथा मैत्रावरुणोपदेशेन कर्त्रन्तरोपदेशशून्येभ्यः कर्मभ्यः निष्कृष्य कर्त्रन्तरदेशना, तथा विशेषविषयत्वात् संकोचवृत्तिना आख्यानेन विशेषाख्या शून्येभ्यः कर्मभ्यः निष्कृष्य कर्त्रन्तरदेशना इत्येवं उपदेशोक्तिः इति । अत्र वार्तिकं (३।३।७।१४ सूत्रे) समाख्ययोस्तु विरोधे सामान्यविशेषसमाख्ययोः सूत्रबद्ध एव बाधो भविष्यति 'तस्योपदेशसमाख्यानेन निर्देशः' इति । अत्र सोमनाथी– तस्योपदेशेन वचनेन विशेषसमाख्यानेन निर्देशो निष्कर्षः अपवाद इति यावत् । प्राभाकरैरिदं सूत्रं सामान्यसमाख्यायाः वचनविशेषसमाख्याभ्यां बाधव्युत्पादनार्थं अधिकरणान्तरत्वेन व्याख्यातम् । तदनुपपन्नम् । समाख्यायाः वचनापेक्षया सामान्यस्य विशेषापेक्षया च दुर्बलत्वस्य अन्यत्र सिद्धत्वेन पूर्वपक्षानुन्मेषात् । तस्मात् प्रकृताधिकरणशेषभूतमेवेदम् । सोम. ३।७।१९.

**तद्वच्च लिङ्गदर्शनम् । ४२ ॥**

यागीयकर्मसु आध्वर्यवादिसमाख्यया अध्वर्य्वादीनां व्यवस्थया नियम इत्युक्ते तदपवादतया उपदेशसमाख्यानाभ्यां विशेषनियमः इति उक्ते सिद्धान्ते हेत्वन्तरपरं सूत्रम् । तद्वत् आध्वर्यवादिसामान्यसमाख्यावत् पोत्रीयादिविशेषसमाख्यावच्च 'यत्र होतुः प्रातरनुवाकमनुब्रुवतः उपशृणुयात्' इति लिङ्गं हौत्रे प्रातरनुवाके समाख्यया प्राप्तं होतारं दर्शयति । तथा 'उद्गीथ उद्गातॄणाम्, ऋचः प्रणव उक्थशंसिनाम् (होतॄणां उद्गीथः), प्रतिगरोऽध्वर्यूणाम् (उद्गीथः)' । तथा 'यो वाऽध्वर्योः स्वं वेद स्ववानेव भवति, एतद्वा अध्वर्योः स्वं, यदाश्रावयति' इति च लिङ्गं तत्रतत्र कर्मणि तंतमृत्विजं विशेषतो दर्शयति । तस्मात् विशेषसमाख्यया विशेषतो ऋत्विजां कर्मसु व्यवस्थया नियमः ।

अत्र सुधा — यथा आध्वर्यवादिसमाख्यानात् कर्मणः अध्वर्य्वादिकर्तृव्यवस्था, यथा च विशेषसमाख्यानेन कर्त्रन्तरदेशना तथा लिङ्गदर्शनं (विशेषतो नियामकम्) इति । के.

* ०तस्यतस्योपदिश्येत (२।२।३।६) । यद्यपि 'आश्विनं ग्रहं गृहीत्वा' इत्यनेन द्वयमपि प्रातःसवनं आश्विनग्रहोत्तरकालत्वं च विधीयेत, तथापि विधायकस्य एकपदानुसारात् 'तस्यतस्योपदिश्येत' इत्येतदापत्तिर्नास्ति । वा. ३।६।७।२२ पृ. १०४७.

**तस्य धेनुरिति गवां प्रकृतौ विभक्तं चोदितत्वात् तत्सामान्यात् तद्विकारः स्याद् यथेष्टिर्गुणशब्देन । १०।३।१४।५६ ॥**

'अथैष भूर्वैश्वदेवः त्रिवृदेव सर्वः, तस्य विश्ववत्यः स्तोत्रीया धेनुर्दक्षिणा' इति भूर्नाम एकाहः क्रतुः श्रुतः । तत्र 'तस्य धेनुर्दक्षिणा' इत्यनुषङ्गः । येयं 'तस्य धेनुः' इति धेनुः श्रुता, सा प्राकृतीनां दक्षिणानां मध्ये गवामेव निवर्तिका, नाश्वादीनाम् । प्रकृतौ दक्षिणानां विभक्तं यथा स्यात्तथा चोदितत्वात् गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति प्रत्येकं दक्षिणात्वमुक्तम् । अत्र भूनाम्नि क्रतौ तु गवामेव धेनुत्वं विशेष उच्यते गौरेव धेनुर्नान्या । एवं च तत्सामान्यात् गोत्वसामान्यात् धेनुः तद्विकारः गोविकारः स्यात् अधेनूनां गवां बाधः स्यात् । यथा इष्टिः ऐष्टिको विध्यन्तः गुणशब्देन 'सौर्यं चरुं निर्वपेत्' इति निर्वापशब्देन नियम्यते तद्वत् । तस्मात् ज्योतिष्टोमगताः सर्वा दक्षिणाः भूनाम्नि क्रतौ स्युः, गावस्तु धेनवः दुग्धदाः स्युः इति विशेषः । इति पूर्व पक्षः । अथवा 'तस्य धेनुः' इत्येकवचनात् ज्योतिष्टोमिकीनां सर्वासां गवां स्थाने एका धेनुर्गौर्दक्षिणा अश्वादयस्तु यथाप्रकृति इति पूर्वः पक्षः ।

**सर्वस्य वा क्रतुसंयोगादेकत्वाद् दक्षिणार्थस्य, गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभता स्यात्, तया समवायाद्धि कर्मभिः । ५७ ॥**

भूनाम्नि क्रतौ विहिता या धेनुर्दक्षिणा, सा सर्वस्य क्रतुदाक्षिण्यस्य निवर्तिका । क्रतुसंयोगात् 'तस्य धेनुर्दक्षिणा' इति अनुषङ्गयुक्तवाक्ये तत्पदोक्तस्य कृत्स्नस्य क्रतोः धेनुदक्षिणया संबन्धात् । ज्योतिष्टोमे तावत् गवाश्वादीनां तिलमाषान्तानां दशानां द्रव्याणां समुदाये एव एकं दक्षिणात्वम्, न तु प्रत्येकं पृथक् दक्षिणात्वम्, गौश्च अश्वश्च इति दशभिश्चशब्दैः सर्वेषां समुदायमुद्दिश्य एकदक्षिणात्वविधानात् । तादृश्याः दक्षिणायाः प्राकृत्याः भूनाम्नि विकृतौ विहितया एकया धेन्वा बाधः । एकत्वं दक्षिणार्थस्य, दक्षिणाया योऽर्थः प्रयोजनं ऋत्विगानमनं तस्य एकत्वम्, न नानात्वम् । गुणानां च कार्यैकत्वात्, दक्षिणाया ये गुणाः गवाश्वादयः तिलमाषान्ताः तेषामपि कार्यैकत्वात्, दक्षिणात्वरूपकार्यैकत्वात् विकृतौ भनाम्नि क्रतौ अर्थे ऋत्विगानमनरूपे श्रुतिभूतम् 'तस्य धेनुर्दक्षिणा' इतिश्रुतिविहितं धेन्वेकत्वं समर्थं स्यात् । तया धेनुदक्षिणया हि यस्मात् कर्मभिः साकमृत्विजां समवायात् संबन्धात् तस्मात् धेनुः सर्वस्य क्रतुदाक्षिण्यस्य बाधिका ।

**चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् । ५८ ॥**

'तस्य धेनुः' इति सूत्रे 'यथेष्टिर्गुणशब्देन' इति विकृतीष्टिदृष्टान्तः पूर्वपक्षिणा प्रदर्शितः तस्य वैषम्यमाह सिद्धान्ती । चोदनानां सौर्यादिविकृतीष्टिचोदनानां अनाश्रयात् अनाश्रयणात् अस्वीकारात् प्रत्यक्षोपदिष्टधर्मविशेषाभावात् निर्वापलिङ्गेन प्रकृतीष्टिविध्यन्तस्य नियमः स्यात् इति युक्तम् । भूनाम्नि क्रतौ तु गवादीनामेकं कार्यं दक्षिणात्वम्, तस्मिंश्च श्रुतिभूता एका धेनुः चोदकप्राप्तां सर्वां दक्षिणां निवर्तयितुमर्हति । तस्मात् एका धेनुः कृत्स्नां प्राकृतीं दक्षिणां निवर्तयति इति सिद्धान्तः । के.

* 'तस्य धेनुरिति गवां प्रकृतौ विभक्त-(क्तं) चोदितत्वात् सामान्यात् (तत्सामान्यात्) तद्विकारः स्याद् यथेष्टिर्गुणशब्देन ।' 'एष भूर्वैश्वदेवः त्रिवृदेव सर्वः तस्य विश्ववत्यः स्तोत्रीया धेनुर्दक्षिणा' इत्युदाहृत्य किं धेनुर्गवां निवर्तिका, उत कृत्स्नाया दक्षिणायाः इति संदेहे 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इत्यनेन न्यायेन दक्षिणासंबन्धे प्रथमं गवादीनामुपादानेन उद्देश्यत्वावगमात् उद्देश्यगतस्य च शब्दोक्तस्यापि साहित्यस्य अविवक्षितत्वात् प्रत्येकं दक्षिणात्वावगतेः गोत्वैकार्थसमवेतदोग्ध्रीत्ववाचिना धेनुशब्देन गवामेव दोग्ध्रीणां निवृत्तिप्रतीतेः एकवचनेन च द्वादशशतसंख्यानिवृत्तिप्रतीतेः यथा 'सौर्यं चरुं निर्वपेत्' इति निर्वापलक्षणगुणशब्देन ऐष्टिको विध्यन्तो नियम्यते, तथा धेनुशब्देन गोमात्रनिवृत्तेः नाश्वादिनिवृत्तिः इति पूर्वपक्षयित्वा कृत्स्नाया दक्षिणाया निवृत्तिः इति सिद्धान्तितम् । सु. पृ. ४३५.

* तस्य निमित्तपरीष्टिः । १।१।३।३ ॥

चोदनालक्षणसूत्रेण श्रुत्यर्थाभ्यां वेदार्थस्वरूपम्, तत्र च प्रमाणं प्रतिज्ञातम् । तत्र किं स्वरूपं तावत् भेदाभेदरूपेण कथ्यताम्, उत प्रमाणप्रतिज्ञायां हेतुः इति संशये प्रधानत्वात् स्वरूपस्य, तदेव भेदाभेदाभ्यां कथनीयम् । इति प्राप्ते, भेदाभेदनिर्णयस्य अनपेक्षत्वसव्यपेक्षत्वात् प्रामाण्ये हेत्वनपेक्षत्वं अधुना कथनीयमिति सूत्रेण कथ्यते । तस्मात् अनपेक्षत्वरूपप्रामाण्यहेत्वभिधानावसरकथनं सूत्रेण क्रियते । ऋजु. पृ. ३३.

⌛ तस्य निमित्तपरीष्टिः । १।१।३।३ ॥

अनेन सूत्रेण धर्मप्रमाणपरीक्षाप्रतिज्ञा कृता । तस्य धर्मस्य यानि निमित्तानि ज्ञापकानि प्रमाणानि, तेषां परीष्टिः पर्येषणा सम्यक् परीक्षा 'करिष्यते' इति शेषः । के.

* तस्य निमित्तपरीष्टिः । धर्मे वेदः प्रमाणं इत्युक्तम् । तत् संभवति न वा इति परीक्षा प्रत्यक्षादीनां धर्मप्रामाण्यासंभवनिरूपणद्वारा क्रियते इत्यर्थः । मणि. पृ. ११.

* 'तस्य व्रतम्' इत्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेत' इति श्रूयते । व्रतमिति कर्मनाम । टुप्. ६।२।५।२०.

⌛ तेषामर्थेन संबन्धः । ३।१।४।७ ॥

दर्शपूर्णमासयोः निर्वापप्रोक्षणावहननादयः औषधधर्माः, उत्पवनविलापनग्रहणासादनादयः आज्यधर्माः, शाखाऽऽहरणं वत्सापाकरणं गवां प्रस्थापनं इत्यादयः सांनाय्यधर्माः श्रुताः । ते किं सर्वे सर्वत्र कर्तव्याः, उत ये यत्रार्थवन्तः ते तत्र कर्तव्याः इति विचारे सिद्धान्तमाह । तेषां अवहननादीनां धर्माणां अर्थेन प्रयोजनेन संबन्धः स्यात् । यस्य यत्र प्रयोजनसाधकत्वं स तत्र कर्तव्यः इति ।

विहितस्तु सर्वधर्मः स्यात्, संयोगतोऽविशेषात् प्रकरणाविशेषाच्च । ८ ॥

उक्तं सिद्धान्तं तुशब्देन व्यावर्तयन् पूर्वपक्षमाह । अपूर्वसाधनोद्देशेन यः कश्चित् धर्मो विहितः, स सर्वोऽपि सर्वधर्मः औषधाज्यसांनाय्यानां सर्वेषामेव धर्मः स्यात् । संयोगतः अपूर्वसंयोगस्य अविशेषात् समानत्वात्, प्रकरणाविशेषाच्च दर्शपूर्णमासप्रकरणपाठस्य समानत्वाच्च ।

अर्थलोपादकर्म स्यात् । ९ ॥

एतं पूर्वपक्षं निराचष्टे । आज्यधर्माणामुत्पवनादीनां औषधे सांनाय्ये च, औषधधर्माणां अवहननादीनां आज्ये सांनाय्ये च, सांनाय्यधर्माणां वत्सापाकरणादीनां आज्ये औषधे च अर्थलोपात् अर्थस्य दृष्टस्य फलस्य लोपात् अभावात् अकर्म अक्रिया स्यात् । सर्वे सर्वत्र न कर्तव्याः । किन्तु यत्र यस्य दृष्टं फलं तत्रैव स कर्तव्यः ।

फलं तु सह चेष्टया, शब्दार्थोऽभावाद् विप्रयोगे स्यात् । १० ॥

ननु अवघातादीनां आज्यादौ विधिवशात् अदृष्टं प्रयोजनं कल्प्यतां इति चेत् तत्राह । तुशब्दः शङ्कानिरासं सूचयति । चेष्टया अनुष्ठानेन सह सहितं तदव्यवहितोत्तरकालं फलं वैतुष्यादि उपलभ्यते । यद्वा चेष्टया अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु वैतुष्यादि फलं दृष्टकार्यं उपलभ्यते । तथाच दृष्टे संभवति नादृष्टकल्पना । दृष्टस्य फलस्य विप्रयोगे अनुपलब्धौ अभावात् दृष्टफलस्य अभावनिश्चयात् शब्दार्थः विधिबलकल्प्यः अदृष्टोपकारः स्यात् । प्रकृते तु दृष्टस्य सत्त्वात् नादृष्टकल्पना । ननु प्रकरणाविशेषात् सकलावान्तरापूर्वाणां धर्मप्रयोजकत्वं स्यात् इति चेत् तत्राप्याह । 'विप्रयोगे अवान्तरापूर्वस्याभावे सति, परमापूर्वस्य च धर्मस्य व्यवस्थापकत्वाभावात् शब्दार्थः व्रीह्यादिशब्दस्य आज्यादिरपि अर्थः स्यात् संभाव्येत परमापूर्वसाधनत्वाविशेषात् । न चैवमस्ति । किन्तु चेष्टया अवघातादिक्रियया सह श्रुतेषु व्रीह्यादिषु तण्डुलपिष्टादिप्रणाड्या, तत्तद्यागजन्यमवान्तरापूर्वं नाम फलमस्ति ।' इति कुतूहलम् । के.

* तेषामर्थाधिकरणम् । व्रीहीनवहन्तीत्यत्र व्रीहि॰ पदस्य अपूर्वसाधनमात्रपरत्वेऽपि नावघातस्य आज्यसांनाय्यसाधारण्यम्, तत्रावघातस्य पक्षेऽपि प्राप्त्यभावेन अत्यन्ताप्राप्तविधानतो विधिगौरवापत्तेः इति व्रीहियवमात्रविषयत्वं नियमविधिबलीयस्त्वादाश्रितम् । किञ्च तत्रैवाधिकरणे व्रीहियवाभ्यां वैतुष्यार्थं अवघातः

अपेक्षितः नाज्यसांनाय्याभ्यां इत्यपेक्षितविधेः अनपेक्षितविधानदौर्बल्यन्यायेनापि अवघातस्य औषधद्रव्यमात्रशेषत्वं दर्शितम् । वाक्यशेषानुग्रहः अभ्युच्चयमात्रे इति तत्रैव स्फुटम् । पराक्रमः. ४०।२-४१।१.

ऋ तेषामर्थाधिकरणम् । व्रीहिन्यायः । दर्शपूर्णमासयोः व्रीहि-आज्य-सांनाय्यधर्माः व्यवस्थिता एव, न संकीर्णा भवन्ति ॥

तेषामर्थेन संबन्धः । ३।१।४।७ ॥

भाष्यम्— स्तो दर्शपूर्णमासौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्र श्रूयन्ते धर्माः निर्वपणं प्रोक्षणं अवहननमित्येवमादय औषधधर्माः । तथा उत्पवनविलापनग्रहणासादनादय आज्यधर्माः । तथा शाखाऽऽहरणम्, गवां प्रस्थापनम्, गवां प्रस्नावनमित्येवमादयोऽपि सांनाय्यस्य । तेषु संदेहः किं सर्वे, औषधे आज्ये सांनाय्ये च कर्तव्याः, उत ये यत्र क्रियमाणा अर्थवन्तः ते तत्र कर्तव्या इति । ननु संयुक्ताः (उद्देश्यविशेषसंयुक्ताः) एवैते श्रूयन्ते । यथा 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इति । बाढं संयुक्ताः । अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या । वाक्येन एषां व्रीह्यादिसंयोगः । अतोऽस्ति संशयः । किं तावत् प्राप्तम् ? तेषामर्थेन संबन्धः । अर्थेन प्रयोजनेन । ये यत्र क्रियमाणाः प्रयोजनवन्तः, ते तत्र कर्तव्याः । प्रथनादय आज्यसांनाय्ययोः अनुपकारका इति न तत्र करणीयाः । एवमुत्पवनादय औषधसांनाय्ययोः, शाखाऽऽहरणादय आज्यौषधयोः । ननु श्रूयन्ते सर्वे सर्वत्र । एतदेव न जानीमः श्रूयन्ते, न श्रूयन्ते इति । तत् विचारयितव्यम् । यद्यपि श्रूयेरन् तथापि अनुपकारकत्वान्नैव कर्तव्या भवेयुः ।

वा—उक्तः सहेतुः सविषयश्च शेषः । इदानीं 'कथं च विनियुज्यन्ते' इत्ययमंशो विचार्यते । तत्र त्रिषु अधिकरणेषु क्रमेण संस्कारद्रव्यगुणानां विनियोगः कथ्यते । तत्रापि किल प्रथमे लिङ्गेन, द्वितीये वाक्येन, तृतीये श्रुत्या विनियोग इति केचित् । तत्तु आचार्या नेच्छन्ति । यद्यपि अत्र विचित्रप्रमाणव्यापारपरामर्शः, तथापि श्रुतिविनियोगः एवात्र पादे, लिङ्गादिविनियोगस्तु द्वितीयपादात् प्रभृति भविष्यतीत्युक्तम् । औषधधर्मा इत्याद्यपि एतदधिकरणसाध्यमपि सिद्धान्ताभिप्रायेणोक्तम् । 'ननु संयुक्ता एवैते' इति सिद्धान्तवादी श्रुतिबलेन संशयमाक्षिपति । परः पुनः पदान्तरसंबन्धकृतं व्रीह्यादिसंबन्धं शुद्धावघातविधिना बाध्यमानं मन्यमानः आह— 'अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या' इति तच्चैतदयुक्तमिव । कुतः ? 'प्रयुज्यते पदं किञ्चिद् विना नहि पदान्तरात् । वाक्याधिकरणे चोक्ता श्रुतिबाधप्रतिक्रिया ॥' नहि व्रीह्यादिभिः संबध्यमाना अवघातादयः नावघातादयो भवन्ति । यदि हि एवं भवेयुः, ततः श्रुतिविरुद्धत्वात् वाक्यं बाध्येत । अत्र पुनः केवलानामेव अवघातादीनामनुष्ठातुमशक्यत्वात् अवश्यमेव संबन्ध्यन्तरे कार्याः । नहि भवत्पक्षेऽपि अवघातादयः केवलाः क्रियन्ते । तत्र प्रकरणलभ्यद्रव्यमात्रसंबन्धः क्लेशान्तरेण कल्प्येत । अथापि किञ्चिदध्याहृत्य संबन्धः क्रियते, तथापि क्लेशः । अथ आरादुपकारकत्वेन प्रधानसंबन्धः इष्यते, तत्रापि विप्रकर्षः । अथ तु नैव केनचित् संबध्यते, ततो विध्यानर्थक्यप्रसङ्गः । तस्मात् असदेतत् । तेन एवं व्याख्येयम्—'वाक्यभेदतदेकत्वसंदेहान्नात्र संशयः । परमावान्तरापूर्वप्रयुक्तत्वकृतो ह्यसौ ॥' नैव अत्र अयं पूर्वपक्षहेतुः 'अवघातादयः पदार्थाः स्वतन्त्राः श्रुत्या विधीयन्ते, वाक्येन व्रीह्यादिभिः संबध्यन्ते, तच्च श्रुत्या बाध्यते । तस्मात् केवलविधानात् किं सर्वार्थाः, किंवा दृष्टोपकारसामर्थ्येन यथासंयोगमेव भवन्ति' इति । किं तर्हि ? 'विधीयतेऽवघातादिः श्रुत्या व्रीह्यादिसंगतः । व्रीहित्वाद्यर्थता चास्य निष्फलत्वेन नेष्यते ॥' यदि हि एषां यथाश्रुतव्रीह्याद्यर्थत्वमध्यवसीयते, ततः संयुक्तत्वात् सर्वे सर्वत्र न प्राप्नुयुः । एते पुनः नवमाद्यधिकरणन्यायेन ('व्रीह्यादिस्वरूपस्य अवघातादिव्यतिरेकेणापि सिद्धत्वात् तदर्थत्वे विध्यानर्थक्यापत्तेः लक्षणया अपूर्वसाधनत्वावच्छिन्नोद्देशेन विधीयन्ते' इत्यनेन) श्रौतं व्रीहित्वं उल्लङ्घ्य अपूर्वसाधनत्वेन संबध्यन्ते । तच्च प्रकरणापेक्षापूर्वसाधनांशलक्षणागम्यत्वात् वाक्यगम्यमिति मन्यमानः आह (भाष्यकारः)

'वाक्येन एषां व्रीह्यादि'संबन्धः, न श्रुत्या । यच्च तत् अपूर्वसाधनांशलक्षणात्मकं वाक्यम्, तत् प्रकरणविशेषात् यथा औषधे, तथा आज्यसांनाय्ययोरपि अविशिष्टम् । एवं उत्पवनविलापनशाखाऽऽहरणादीनां लक्षणयैव अश्रुतहविरन्तरसंबन्धो दर्शयितव्यः । तत्र किमेकं दर्शपूर्णमासापूर्वं धर्माणां प्रयोजकम्, उत अनेकम् । यदाऽपि अनेकम्, तदाऽपि किमपूर्वमात्रम्, उत किञ्चिदेव इति । यदि एकमपूर्वं सर्वाणि वा सर्वेषां प्रयोजकानि, ततः संकरो धर्माणाम् । अथ तु अनेकमपूर्वं किञ्चिदेव प्रयोजकम्, ततः प्रत्येकं व्यवस्था इति । तत्र सिद्धान्तेनैव तावत् उपक्रमते 'तेषामर्थेन संबन्धः' ( इति ) । यद्यपि तावत् केवल-( प्रोक्षति इत्यादि- )पदवाच्याः श्रूयेरन्, तथापि क्व क्रियेरन् इत्यपेक्षिते, 'यत्र क्रियमाणाः प्रयोजनवन्तः' भवन्ति, तत्र कर्तव्याः । न चैते संकीर्यमाणाः सर्वत्र प्रयोजनवन्तो दृश्यन्ते । सत्यपि च अपूर्वप्रयुक्तत्वे दृष्टप्रयोजनद्वार एव संबन्धः अवकल्पते । अथवा शास्त्रेणैव यत्र क्रियमाणाः प्रयोजनवन्तो विज्ञायन्ते, यदपूर्वसाधनं व्रीह्यादिशब्दैः स्वामिधेयजात्येकार्थसमवायि ( स्वामिधेयया जात्या सह एकस्मिन् अर्थे समवैति इति ) लक्षितम्, तदर्थत्वेन अवघातादयो विज्ञायमानाः संबन्धाभावात् अपूर्वान्तरसाधने अलक्षिते, न भविष्यन्ति । 'ननु श्रूयन्ते सर्वे सर्वत्र' इति, अपूर्वैकत्वात् भेदे चासति लक्षणानियमापरिज्ञानात्, प्रयोजनस्य च विध्युत्तरकाललभ्यत्वात् न तद्दर्शनद्वारेण व्यवस्था इति मत्वा परिचोदना । 'एतदेव न जानीमः' इति नावश्यमेकमेव अपूर्वं प्रयोजकं, अपूर्वमात्रं वा इत्यभिप्रायः । सत्यपि हि अविशेषश्रवणे 'अर्थाद्वा कल्पनैकदेशत्वात्' ( अर्थात् सामर्थ्यात् प्रयोजनानुसारात् कल्पना व्यवस्था । शक्तेः विधिसहकारित्वेन विध्येकदेशत्वात् इति सूत्रार्थः ) इति अविरुद्धैव व्यवस्था । अथवा एकापूर्व-अपूर्वमात्र-प्रयुक्तत्वपक्षयोः ( एकापूर्वं च अपूर्वमात्रं च एकापूर्वापूर्वमात्रे । प्रयुक्तत्वं च प्रयुक्तत्वं च प्रयुक्तत्वे । एकापूर्वापूर्वमात्राभ्यां प्रयुक्तत्वे । एका०प्रयुक्तत्वे इति पक्षौ, तयोः । इति विग्रहः । संभावनापूर्वपदः अवधारणापूर्वपदो वा कर्मधारयः । के. ) संकरः, नानाऽपूर्वप्रयुक्तव्रीह्यादिजातिलक्षितसाधनसंबन्धे तु व्यवस्था । न च एतयोः अन्यतरस्य अवधारणम् । अतो न जानीमः सर्वे सर्वत्र श्रूयन्ते, न इति ।

**विहितस्तु सर्वधर्मः स्यात्, संयोगतोऽविशेषात् प्रकरणाविशेषाच्च । ८ ॥**

**भाष्यम्**— उच्यते । यः अर्थात् प्राप्तः स्यात्, सः यत्र प्रयोजनम्, तत्रैव क्रियेत । शब्देन तु सर्वे अमी पदार्थाः विहिताः । तेन न यत्र केवलं प्रयोजनं प्रत्यक्षं दृश्यते, तत्रैव कर्तव्याः । क्व तर्हि ? यत्रयत्र विहिताः । ते च अमी सर्वत्र विहिताः गम्यन्ते । कुतः ? संयोगतः अविशेषात्, प्रकरणाविशेषाच्च । सर्वेषां तावत् आज्यौषधसांनाय्यानां अपूर्वेण साध्यसाधनसंयोगः अविशिष्टः । यत्र क्रियमाणाः अपूर्वस्य कृता भवन्ति इति विज्ञायते । तथा प्रकरणमविशिष्टम्, यस्मिन् विहिताः । सर्वेषां विहिता भवन्ति इति गम्यते । अतः सर्वे सर्वत्र कर्तव्याः । यत्तु अमी न सर्वत्र उपकुर्वन्ति इति, विधानसामर्थ्यात् सर्वत्र उपकारकाः इति गम्यते । स चायं अदृष्ट उपकारो भविष्यति ।

**वा**— परः स्वाभिप्रायं विवृणोति । फलस्य हि सूक्ष्मसामर्थ्यरूपावस्था अङ्कुरस्थानीया पूर्वानुत्पन्नोत्पत्तेः ( पूर्वं अनुत्पन्नस्य उत्पत्तेः हेतोः ) अपूर्वं इत्युक्तं प्राक् ( अपूर्वाधिकरणे 'सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते' इत्यादिना ) । तच्च फलैकत्वात् एकमेव अध्यवसीयते । तत्साधनत्वं च आज्यौषधसांनाय्यानां सर्वेषामविशिष्टम् । अतः तदुद्देशेन विहितानां सर्वधर्मत्वं विज्ञायते । यद्यपि च आग्नेयादीनां अवान्तरापूर्वाणि प्रात्यात्मिकानि भवेयुः, तथापि तेषां निष्फलत्वात् यागादिस्वरूपवदेव प्रयोजकशक्तिर्नास्ति इति परमापूर्वमेव प्रयोजकमवधार्यते । भिन्नापूर्वप्रयुक्तत्वेऽपि प्रकरणगतापूर्वसाधनमात्रोद्देशेन विधीयमानानां शेषाणां विशेषेण अनुपादानात्, उपादाने च वाक्यभेदप्रसङ्गात् सार्वत्रिकविधानमस्ति इति सर्वधर्मत्वे हेतुः । तत्सिद्ध्यर्थं च 'संयोगतोऽविशेषात् प्रकरणाविशेषाच्च' इत्युक्तम् । यत् एकस्य अपूर्वसाधनत्वं धर्मसंबन्धकारणम्, तत् इतर-

त्रापि अविशिष्टम्। यत्तु विशिष्टं व्रीहित्वादि, तत् लक्षणामात्रौपयिकत्वात् अनियामकम्। यदपि कारकत्वं लक्ष्यते, तदपि सर्वेषां प्रदेयत्वात् अविशिष्टम्। तस्मात् अपूर्वासंबद्धं अप्रदेयं अप्रकृतापूर्वसाधनं च वर्जयित्वा सर्वे सर्वत्र कर्तव्याः। यो हि अर्थात् प्राप्नोति इति, अचोदितः सन् सामर्थ्येन, लौकिकप्रयोजनेन वा यः प्राप्नोति, स तद्वशेन व्यवतिष्ठते। अथवा यत्र पूर्वतरप्राप्तप्रयोजनद्वारेण धर्माः प्राप्नुवन्ति, न च धर्मेभ्य एव प्रयोजनकल्पना यथा विकृतिषु, तत्र यावदर्थत्वं भवेत्। अत्र पुनः प्रकृतौ उपदेशेन प्राक् प्रयोजनेभ्यः स्वरूपमात्रेण कल्पयिष्यमाणप्रयोजनाः सन्तो विधीयन्ते। तेन नैषा वचनव्यक्तिः 'यत्र प्रयोजनं तत्रैते' (इति)। किं तर्हि? 'यत्रैते तत्र दृष्टमदृष्टं वा प्रयोजनम्' इति। तस्मात् सर्वधर्माः।

**अर्थलोपादकर्म स्यात्। ९॥**

भाष्यम्— नैतत्, सर्वे सर्वत्र करणीया इति। ये यत्र नोपकुर्वन्ति, न ते तत्र क्रियामर्हन्ति इत्युक्तमेव। ननु विधानसामर्थ्यात् सर्वे सर्वत्रोपकरिष्यन्ति। नेति ब्रूमः।

वा— दृष्टार्थलोपात् शास्त्रगम्यार्थलोपाद्वा इति निगदव्याख्यातं भाष्यम्।

**फलं तु सह चेष्टया, शब्दार्थोऽभावाद् विप्रयोगे स्यात्। १०॥**

भाष्यम्— नास्ति विधानम्, येन सर्वे सर्वत्र उपकुर्वन्ति। न च प्रत्यक्षादिभिः उपकारमवगच्छामः। अर्थापत्तिरपि नियोगतः तत्रैव भवेत्, यत्रैव शब्देन चोदना भवति, नान्यथा। यदि च प्रथनादीनां आज्यसांनाय्ययोः अनुपकुर्वतामपि तत्प्रकरणे समाम्नायः अनुपपन्नो भवेत्, ततः अर्थात् अदृष्ट उपकारः कल्प्येत। ते तु अवश्यं समाम्नानीयाः औषधार्थम्। फलं हि सह चेष्टया अवहननादिक्रया अवगम्यते तुषविमोचनादि। प्रयोजनं च तेन, न तस्मात् ऋते पुरोडाशः सिध्यति। सति चास्मिन् अर्थवान् प्रकरणे समाम्नायः। अर्थवति च तस्मिन् नादृष्टकल्पनायां प्रमाणमस्ति इत्यतो न शक्यं कल्पयितुम्। यदि च तत्र तण्डुलादिनिष्पादनं दृष्टं नाभविष्यत्, ततो विप्रयोगे तण्डुलादीनामभावात् उपकारस्य शब्दार्थमात्रं दृष्टोपकारानपेक्षं कर्तव्यम्, इति आज्यसांनाय्ययोरपि क्रियमाणानां अदृष्टमभविष्यत्। तस्मात् न प्रथनादयः सर्वत्र। एवं उत्पवनादयः शाखाऽऽहरणादयश्च। तस्मान्न सर्वे सर्वत्र कर्तव्याः। प्रथनादयो नाज्यसांनाय्ययोः, औषधे एव ते। उत्पवनादयः आज्यस्य, नौषधसांनाय्ययोः। शाखाऽऽहरणादयश्च सांनाय्यस्य, नाज्यौषधयोः इति सिद्धम्।

वा— यदुक्तं अदृष्टकल्पनात् नैव इतरत्रापि अर्थलोप इति, तत्राभिधीयते। '**यद्याहत्य विधीयेरन्नाज्येऽपि प्रथनादयः। अदृष्टार्था अगत्या स्युर्दृष्टं वा न भवेद्यदि॥**' आम्नानान्यथाऽनुपपत्त्या हि अदृष्टं कल्प्यते। तच्च आम्नानमन्यथैव दृष्टार्थतया उपपन्नमित्यर्थापत्तेरसंभवः। तत् दर्शयति। अवघातादीनां अनुष्ठानसहितं फलं व्रीहिषु दृश्यते, अन्यत्र तु चेष्टामात्रम्। न च सफलचेष्टाऽनुष्ठानसंभवे विफलानुष्ठाने विधिः पुरुषं नियोक्तुं शक्नोति, न च तेन अनियुज्यमानः फलकल्पनानिमित्तं लभते। तत् इतरेतराश्रयं भवति फलात् विधिः, विधेश्च फलमित्यभ्युपगमात्। '**नह्यत्रैकमपि स्पष्टं प्रसिद्धं व्रीहिषु द्वयम्। अन्योन्यनिरपेक्षं च प्रत्यक्षमुपलभ्यते॥**' तथा उत्पवनादीनामाज्यसांनाय्ययोः इति योजनीयम्। तथाहि, '**योऽर्थः प्रत्यक्षदृष्टोऽपि क्रतुना पुरुषेण वा। नापेक्ष्येतोपकाराय सोऽग्राह्यो, न त्वयं तथा॥**' अवघातादिनिर्वर्त्यो हि तुषकणविप्रमोचनादिः अर्थः पुरोडाशसिद्धिं प्रति षड्भिरपि व्रीहि–पुरोडाश–क्रतु–अपूर्व–अध्वर्यु–यजमानैः अपेक्षितः। नहि तस्मादृते व्रीहिभिः यष्टुं पुरोडाशो वा निर्वर्तयितुं शक्येतेति। तत् दर्शयति (भाष्यम्,) 'प्रयोजनं च तेन' इति। '**विप्रयोगे तु दृष्टस्य फलस्य तदभावजा। तेषां शब्दार्थमात्रत्वात् स्याददृष्टार्थकल्पना॥**' ततश्च अवघातः आज्यसांनाय्ययोरपि स्यात्। सति तु दृष्टे कात्स्न्येनिकासंभवात् यथार्थमेव व्यवस्थासिद्धिः। तथाहि, '**क्व चिद् दृष्टनिराकाङ्क्षः क्षीणार्थापत्तिशक्तिकः।**

नादृष्टार्थोऽपि सोऽन्यत्र शक्यः कल्पयितुं विधिः ॥'

अथवा, तत एते सर्वत्र विहिता भवेयुः, यदि परमापूर्वप्रयुक्ताः सर्वापूर्वप्रयुक्ता वा स्युः। तदा च एवं ते भवेयुः, यदि भिन्नानि व्रीह्यादिकर्मापूर्वाणि (आग्नेयादिजन्योत्पत्त्यपूर्वाणि) न स्युः, यदि च एषाम् (उत्पत्त्यपूर्वाणाम्) प्रयोजकशक्तिर्न स्यात्। तानि तु प्रयोजकशक्तिमन्ति प्रतिकर्मभिन्नानि विद्यन्ते। तत्र भेदस्तावत् अपूर्वाधिकरणे (२।१।२।२) साधितः। यद्यपि च एषां साक्षादफलत्वम्, तथापि स्वरूपसिद्ध्यन्यथाऽनुपपत्त्यैव प्रयोजकत्वं भविष्यति। न च निष्फलानि। तन्नाम निष्फलत्वात् अप्रयोजकं भवति, यत् अत्यन्तनिष्फलं तन्निरपेक्षम् (अङ्गनिरपेक्षम्) वा द्रव्ययागादि स्वरूपवत् लब्धात्मकम्। आग्नेयाद्यवान्तरापूर्वाणि तु परमापूर्वसिद्ध्यङ्गत्वात् पारंपर्येण फलवन्ति। न च धर्मेभ्यः प्राक् सिद्धानि निर्ज्ञातोपायपरिमाणानि वा। तस्मात् आत्मलाभार्थमेव प्रयुज्यन्ते। यच्च येषु धर्मेषु विधीयमानेषु अपूर्वमुपतिष्ठते, तत् तेषां प्रयोजकं भवति, न यावत्किञ्चित्। व्रीह्यादिशब्दैश्च स्वकर्मसाध्यमेव केवलं अपूर्वमुपस्थाप्यते नान्यत्, असंबन्धात्। अतश्च अवघातादयः तदेव एकमपूर्वं प्राप्य अर्थवन्तो जाताः न परमापूर्वं कर्मान्तरापूर्वं वा अपेक्षन्ते। तत् दर्शयति। यस्मात् अवहननादि चेष्टया सह श्रुतेषु व्रीह्यादिष्वेव स्वापूर्वसाधनद्वारेण विधेः फलं दृश्यते। तस्मात् नान्यत्र संक्रान्तिः। यदि तु तत्र अपूर्वं न स्यात्, ततः अर्थात् अदृष्टं कल्प्येत, व्रीह्यादिशब्दैः अनुपस्थापितोऽपि उपकारः प्रयोजकः कल्प्येत। अस्ति तु तत्।

सूत्रमपि एवम्— विप्रयोगे तण्डुलादिनिष्पाद्यस्य अपूर्वस्य प्रयोजनाभावात् सांनाय्यादिसंबन्धोऽपि व्यवहितपरमापूर्वद्वारेण कर्मान्तरापूर्वद्वारेण वा शब्दार्थः स्यात्। प्रत्यासन्नापूर्वसद्भावे तु न शब्दः तावन्तं खेदं सहते। तस्मात् अप्रमाणकः सांनाय्यादिसंबन्धः। एवं तर्हि आग्नेयाद्यपूर्वसंबन्धाविशेषात् स्रुगादीनामवघातादयः प्राप्नुवन्ति। नैष दोषः, कारकान्तरत्वेन तेषामलक्षितत्वात्। यथैव हि प्रदेयत्वाविशेषेऽपि सांनाय्यादेः अपूर्वान्तरसाधनत्वात् अप्रतीतिः, एवं एकापूर्वसंबन्धेऽपि वीहित्वैकार्थसमवेतप्रदेयरूपकारकत्वाभावात् स्रुगादीनामग्रहणम्। यत्तु तस्मिन्नेव अपूर्वे समानकारकत्वेन उपकरिष्यति, तस्य भविष्यन्त्येव धर्माः यथा यवानाम्। सर्वं चैतत् नवमे विस्तरेण वक्ष्यामः।

शा—'एकमेव फलापूर्वं फलस्यैकस्य सिद्धये।
कल्प्यं नान्यानि धर्माणां तादर्थ्यात् संकरी भवेत् ॥'
अत्राभिधीयते। सन्ति तावत् अवान्तरापूर्वाणि। कुतः?
'नह्याग्नेयादिकर्माणि विशरारूणि, तैर्विना। संहृत्य परमापूर्वं जनयन्ति स्वरूपतः ॥' तस्मात् यथासंयोगं व्यवस्था।

सोम— स्वरूपज्ञानानन्तरं प्राप्तावसरोऽयं विचारः। सूत्रार्थस्तु— तेषां संस्काराणां अर्थेन दृष्टप्रयोजनवशेन व्यवस्थया संबन्धः इति।

वि—'श्रुता व्रीह्याज्यसांनाय्यधर्माः सांकर्यगामिनः। व्यवस्थिता वा, सांकर्यं फलापूर्वेण संगतेः ॥, अवान्तरापूर्वसत्त्वात् साक्षात् तेनैव संगतौ। श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा ॥' सा श्रुतिः प्रकरणात् उत्तमा बलिष्ठा।

भाट्ट— तदेवमङ्गत्वे निरूपिते श्रुत्यादीनि षट् प्रमाणानीत्युक्तम्। तत्र श्रुतिर्नाम अङ्गत्वघटकीभूतोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः। स च द्वितीयातृतीयाविभक्तिरूपः। कृदन्तस्थले निष्ठातृजादिव्यावृत्त्यर्थं प्राधान्येनेति। तस्य कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात्। अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'वारणो यज्ञावचरः' इत्यादौ वाक्यीयः एव विनियोगः, न श्रौतः। अत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः। वस्तुतस्तु ईप्सितत्वाख्याया उद्देश्यतायाः साध्यतामात्रवाचिद्वितीयावाच्यत्वाभावात् तत्रापि न मुख्या श्रुतिः। अपितु भाक्त एव तत्र श्रुतिव्यवहारः, ईप्सितत्वांशे लक्षणाऽङ्गीकारात्। अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम्। एवं षष्ठ्यादावपि कारकत्वशक्तत्वाभावात्

श्रुतित्वव्यवहारो भाक्त एव। एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादनम्, तत्रापि वाक्यीय एव विनियोगः, न श्रौतः। एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम्। तदेवं श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धे अधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गित्वयोः अवच्छेदकविचारः क्रियते।

दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'आज्यमुत्पुनाति' इत्यादयः आज्यौषधसान्नायसंबन्धिनः संस्काराः श्रुताः। तेषु किं सर्वसाधारणमवघातविधौ उद्देश्यताऽवच्छेदकम्, उत आज्यादिव्यावृत्तम्? एवमन्यत्रापीति विचारः। तत्र न तावत् श्रुतं व्रीहित्वादिकमेव उद्देश्यताऽवच्छेदकम्, आनर्थक्यापत्तेः। अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात् यवेषु अनापत्तेश्च। अतो नवमाद्याधिकरणन्यायेन व्रीहित्वाविवक्षया अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। तत्र फलप्रत्यासन्नत्वात् एकत्वात् आरादुपकारकेषु क्लृप्तप्रयोजकशक्तिमत्त्वाच्च परमापूर्वस्य तत्साधनत्वमेव प्रदेयघटकत्वसंबन्धेन लक्ष्यते। अस्ति च आग्नेयादेः तत्प्रत्यपि साधनता। अत एव न वाङ्नियमन्यायोऽपि। अतश्च उद्देश्यताऽवच्छेदकस्य सर्वसाधारणत्वात् आज्यादिष्वपि अवघातादेः संकरः। न च प्रतिनियतनिर्देशात् व्यवस्था। तथात्वे व्रीहित्वादिविवक्षाया आवश्यकत्वेन नीवारादिषु अनापत्तेः। इति प्राप्ते, यद्यपि विधिः अविशेषप्रवृत्तः स्यात्, तथापि दृष्टार्थत्वे नियमविधिलाघवाद्यनुरोधेन विशेषे व्यवस्थाप्यते, किमुत यदा सोऽपि विशेषप्रवृत्तः एव। व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात्। तस्यापि अनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेः आनर्थक्याभावेन तदतिक्रमकारणाभावात्, परंपरया फलवत्त्वाच्च। अतो व्रीहिपदेन व्रीहिसाध्यानि यानि आग्नेयाग्नीषोमीयैन्द्राग्नोत्पत्त्यपूर्वाणि, तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्याश्रयत्वस्यैव उद्देश्यताऽवच्छेदकत्वेन विवक्षितत्वात् नाज्यादिषु अतिप्रसङ्गः। अत्र च अपूर्वत्रयस्य एकानुगमकाभावेऽपि एकपदोपादानात् वाक्यभेदः। तत्तद्व्यापारकसाधनता एव च विवक्ष्यन्ते, न तु साधनताऽवच्छेदकादीन्यपि। तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेपि न क्षतिः। यथा च व्रीहियवयोः कारणताभेदेऽपि यत्र साधारण्यम्, तथा कौस्तुभे विस्तरः। तत्रतत्र नवमादौ चोपपादयिष्यते।

मण्डन—'व्रीह्यादेरवघातादि।'

शंकर—'अवघातादेर्न संकरः।'

* आज्य–ओषधि–सांनाय्यधर्माणामुत्पत्त्यपूर्वप्रयुक्ततया यथायोगं व्यवस्थां तृतीय-(३।१।४)सिद्धामङ्गीकृत्य, उत्पत्त्यपूर्वसाधनत्वस्य स्रुवादिष्वपि सत्त्वात् अतिप्रसङ्गमाशङ्क्य निराक्रियते इति 'तेषामर्थाधिकरणेन' अपि अगतार्थत्वं सूचितम्। सोम. ९।१।५. * 'तेषामर्थेन संबन्धः' इत्यादिभिः त्रिभिरधिकरणैः संस्कारद्रव्यगुणानां श्रुतशेषिसंयोगेन व्यवस्था अभिहिता। कु. ३।१।७।१३. * तेषामर्थाधिकरणे (३।१।४।७–१०) संस्कारविनियोगः कथ्यते। स च लिङ्गेन इति केचित्। वस्तुतस्तु श्रुत्यैव। वा. ३।१।४।७ पृ. ६६५. * आरुण्यस्यामूर्तत्वेन क्रयं प्रति करणत्वासंभवेन, 'तेषामर्थेन संबन्धः' इत्यधिकरणे 'विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात्' इति पूर्वपक्षसूत्रोक्तन्यायेन (प्रकृतापूर्वसाधनं वर्जयित्वा सर्वत्र सर्वे धर्माः संबध्यन्ते) प्रकृतापूर्वसाधनद्रव्यमात्रे निवेशो युज्यते; कु. ३।१।६।१२ पृ. २५२. * यत्र तु व्रीहियवादिवाक्ये कारणताद्वयं प्रमाणसिद्धम्, तत्रैव परं आग्नेयादौ वैजात्यकल्पनं इति तेषामर्थाधिकरणे वक्ष्यते। कौ. २।१।४।९ पृ. ६७. * व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहाराय आग्नेयत्वोपांशुयाजत्वादिव्याप्यो धर्मोऽस्तीति तेषामर्थाधिकरणे (३।१।४।७–१०) कौस्तुभे उक्तम्। भाट्ट. ५।४।४. * व्रीहिभिर्यजेत इति शास्त्रावगतं यद्धविः प्रकृतितया अपूर्वसाधनम्, तत्र अवघातपर्यवसानेन असाङ्कर्यं तेषामर्थाधिकरणोक्तरीत्या प्रत्यासत्तिबलेन अवान्तरापूर्वप्रयुक्तत्वाद्वा न साङ्कर्यम्। सोम. ९।१।१. * न तावत् सर्वेषामवघातादीनां अपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यम्, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरण-

न्यायेन आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्षणात् । भाट्ट. ९।१।३. # तेषामर्थाधिकरणवक्ष्यमाणा धर्मव्यवस्था । सु. पृ. ७३०.

तेषामृग् यत्रार्थवशेन पादव्यवस्था । २।१। १०।३५ ॥

ऋच इत्यस्ति वेदे 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषि ' इति । कर्थलक्षणिका ऋचः इति प्रासङ्गिकमन्त्रविचारं परिसमाप्य इदानीं मन्त्रविशेषश्रुतऋग्यजुःसामपदार्थनिरूपणं अनुप्रसङ्गेन क्रियते । अत्रायं पूर्वपक्षिणोऽभिसन्धिः, यत्रार्थेन पादव्यवस्था सा ऋगिति ऋग्लक्षणमुक्तम् । न चैतत्संभवति । 'अग्निः पूर्वेभिः' इत्यत्र क्रियापदाभावेन अर्थावच्छेदनिबन्धनपादव्यवस्थाव्यतिरेकेणापि ऋग्दर्शनात् । अतः अनिरूपणमेव ऋक्पदार्थस्य इत्येवं प्राप्ते, अभिधीयते । भवेदेवं यदि पादबद्धो मन्त्रः ऋक्त्वं व्यभिचरति । तथाहि पादबद्धे मन्त्रे अभियुक्ता ऋक्शब्दं प्रयुञ्जते, न लौकिकपदबन्धमात्रे । अत्र पादबद्धत्वं मन्त्रोपलक्षणार्थमेव । तेन 'अग्निः पूर्वेभिर्ऋषिभिः' इत्यत्र क्रियापदानुपादानात् अर्थवशेन पादव्यवस्थाया अभावेऽपि गायत्र्यादिच्छन्दोवशेन पादव्यवस्थायां अविरुद्धमृक्त्वमिति । प्रयोजनम्– पूर्ववदेव प्रतिपत्तिलाघवमिति । सूत्रं तु अर्थवशेनेत्युपलक्षणम् । वृत्तवशेनापि यत्र गायत्र्यादिपादव्यवस्था सा ऋगिति । तौता.

तेषामृग् यत्रार्थवशेन पादव्यवस्था । २।१।१०।३५ ॥

ऋचः सामानि यजूंषि मन्त्रा इत्युक्तम् । तत्र ऋग्लक्षणमाह । तेषां त्रिविधानां मन्त्राणां मध्ये ऋक् नाम सा, यत्र अर्थवशेन अर्थानुसारेण पादानां चरणानां व्यवस्था अक्षरेयत्ताविशेषो भवति । तथा च विशिष्टैकार्थप्रतिपादकत्वे सति पादबद्धमन्त्रत्वं ऋक्त्वम् । के.

तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत । ६।२।८।२८ ॥

अग्निहोत्रं सकृत् प्रदोषकाले सकृच्च प्रातःकाले होतव्यम्, न तु प्रातःप्रातः प्रदोषेप्रदोषे च । एवं सकृत् पौर्णमास्यां पौर्णमासयागः सकृच्च अमावास्यायां दर्शयागः, न तु पौर्णमास्यांपौर्णमास्यां अमावास्यायाममावास्यायां च । सकृत्कृतेन कृतार्थं शास्त्रम् । इति उत्सूत्रे पूर्वपक्षे प्राप्ते वाशब्देन पूर्वपक्षनिरासं सूचयन् सिद्धान्तमाह । तेषामग्निहोत्रादीनां कर्मणां औत्पत्तिकत्वात् कालसंयुक्तानामेव उत्पद्यमानत्वात्, निमित्ते प्राप्ते नैमित्तिकस्य कर्तव्यत्वाच्च आगमेन सायमादिकालस्य आगमेनआगमेन प्रवर्तेत होमं कर्तुम् । आगतेआगते विहिते काले प्रयोगः कर्तव्यः इति असकृत् प्रयोगः इति सिद्धान्तः । 'तेषां सर्वसायमादिकालजीवनानां औत्पत्तिकत्वात् उत्पत्तौ प्रयोगे निमित्तत्वात् आगमेन तृतीयानिमित्ततायाम्, सर्वसायमादिकालावच्छिन्नजीवनानां निमित्तानां प्राप्तौ सत्यां नैमित्तिकाः प्रयोगाः प्रवर्तेरन्' । इति कुतूहलम् ।

तथाहि लिङ्गदर्शनम् । २९ ॥

सिद्धान्ते लिङ्गं दर्शयति । 'अथ वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इति आगतेआगते काले प्रयोगं दर्शयति । सकृत्करणे तु क्वातिपत्तिः ? तस्मात् असकृदेवानुष्ठानं स्वस्वकाले इति सिद्धान्तः । के.

तेषामौत्पत्तिकत्वाधिकरणम् । अग्निहोत्रादिकर्मणां निमित्तानुरोधेन आवृत्तिः ॥

तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत । ६।२।८। २८ ॥

भाष्यम्— 'प्रदोषमग्निहोत्रं होतव्यम्, व्युष्टायां प्रातः' इति (प्रदोषं प्रदोषकाले, व्युष्टायां रात्रौ प्रातः) । तथा 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' तत्र संदेहः किं सकृत् प्रदोषे होतव्यम्, उत प्रदोषेप्रदोषे इति । तथा सकृत् व्युष्टायां प्रातः, उत व्युष्टायांव्युष्टायां इति । तथा किं सकृत् पौर्णमास्याममावास्यायां वा, उत आगतेआगते काले इति । किं प्राप्तम् ? सकृत् कृत्वा कृतार्थः शब्दो न नियमः पौनःपुन्ये इति । एवं प्राप्ते, ब्रूमः । आगमेन प्रवर्तेत । आगतेआगते काले प्रयोगः कर्तव्य इति । कुतः ? तेषामौत्पत्तिकत्वात् । उत्पद्यमानं कर्म कालसंयुक्तमेवोत्पद्यते । तदुक्तम्, 'निमित्तार्थाः कालश्रुतयः'

इति । निमित्ते च संप्राप्ते नैमित्तिकोऽर्थः कर्तव्यो भवति । तस्मादागतेआगते काले प्रयोगः कर्तव्यः ।

**तथाहि लिङ्गदर्शनम् । २९ ॥**

भाष्यम्-- 'अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इति (लिङ्गम्) आगतेअगते काले प्रयोगं दर्शयति ।

सोम-- सूत्रार्थस्तु-- तेषां कालानामौत्पत्तिकत्वात् कर्मोत्पत्तिनिमित्तत्वात् कालस्य पुनःपुनरागमेन कर्माणि प्रवर्तेरन् इति ।

वि— 'सकृत्कृतिरुतावृत्तिर्दर्शादेः, शास्त्रसार्थतः । सकृत् स्यात्, कालसंयुक्तजीवनावृत्तितोऽन्तिमः ॥'

भाट्ट— कालशास्त्रेण निमित्तशास्त्रस्य संकोचेऽपि यदा कालावच्छिन्नस्य निमित्तस्य पुनःसंनिपातः, तत्र नैमित्तिकावृत्तिः, इतरथा स्वोत्पत्तौ अवश्यानुष्ठापकत्वरूपनिमित्तत्वानुपपत्तेः । अत एव यत्र तस्मिन्नेव निमित्ते कालमात्रस्यावृत्तिः, तत्र न नैमित्तिकावृत्तिः, यथा एकस्मिन्नेव वसन्ते पर्वावृत्तौ । अत्र च पूर्वपक्षस्य अतितुच्छत्वात् सुहृद् भूत्वोपदेशः इति मन्तव्यम् ।

मण्डन-- 'दर्शादिकाले च पुनःपुनः स्यात् ।'

शंकर— 'जीवनेजीवने कर्म ।'

* 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र जीवनं सायंप्रातःपौर्णमास्यादिकालावच्छिन्नं निमित्तं इति 'तेषामौत्पत्तिकत्वात्' इत्यधिकरणे स्पष्टीभविष्यति । कु. २।४।१।२.

* तेषामौत्पत्तिकत्वाधिकरणन्यायस्तु 'निमित्तावृत्तौ नैमित्तिकानामपि आवृत्तिः' इति । शा.

* तेषाम् (त्रयोदशानामतिरात्राणां मध्ये) 'चत्वारः अषोडशिकाः प्रथमाः' । अयं कर्मतो व्यवस्थारूपः प्रतिषेधः । बाल. पृ. ३४–३५.

**⌛ तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् । १०।२।१३।४२ ॥**

'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति श्रुतम् । तेषां सत्रकर्तृणामुदवसानीयकर्तृणां वा उदवसानीयस्य प्रयोगः सहप्रयोगः स्यात्, संहत्य संभूय प्रयोगः स्यात्, 'यजेरन्' इति बहुवचनात् । द्वियज्ञवत् यथा 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्विवचनात् द्वाभ्यां संहत्य कुलाययज्ञः क्रियते तद्वत् । द्वयोः यज्ञः द्वियज्ञः । तस्मात् पृष्ठशमनीयः सर्वैः संभूय कर्तव्य इति पूर्वः पक्षः ।

**एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् । ४४ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । उदवसानीयं सोमं न संहत्य प्रयुञ्जीरन् किन्तु एकैकशः । अविप्रतिषेधात् । उदवसानेन हि पुरुषा लक्ष्यन्ते ये सत्रादुदवस्यन्ति । तत्र च एकोऽपि उदवसाता भवति । ये चोदवसानलक्षिताः तेषां यागः, इति एकैकस्यापि यागो विहितो भवति । न च केनचित् प्रतिषिध्यते । प्रकृतेश्च प्रकृतिभूतस्य ज्योतिष्टोमस्य च एकेनैव कर्त्रा संयोगात् एककर्तृकत्वात् विकृतिभूतस्य उदवसानीयस्यापि एककर्तृकत्वनिश्चयात् । तस्मादुदवसानीयः सोमः एकैकेनैव कर्तव्यः न सर्वैः न द्व्यादिभिर्वा संहत्य इति सिद्धान्तः । ४२ सूत्रं पूर्वपक्षः, ४४ सूत्रं सिद्धान्तः । ४३ सूत्रेण तु अन्तरागार्भिणी इति ज्ञेयम् । के.

* **तेषां यतो विशेषः स्यात् । ३।८।१०।२२ ॥** न च आत्मनैवात्मानं (मैत्रावरुणः) नियोक्तुमर्हति इति परेण विनियोक्तव्यः । स च 'तेषां यतो०' इत्येवं विज्ञायते । वा. ३।३।७।१४ पृ. ८४७,

* सोमयागेष्वपि 'प्रैषेषु पराधिकारात्' इत्येवं निवर्तमानः (यजेतिशब्दः) 'तेषां यतो०' इत्येवं मैत्रावरुणस्यैव । ३।७।२१।४४.

**⌛ तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् । ६।२।६।२२ ॥**

'गुरुरनुगन्तव्यः अभिवादयितव्यश्च' 'वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्च' इत्यादयः स्मार्ताः पदार्थाः प्रत्युपस्थितनियमाश्च आचाराः इत्येतानि तस्मिन् पुरुषसामान्ये शिष्यमाणानि विधीयमानानि, जननेन जन्मनैव निमित्तेन प्रवर्तेरन् । तत्र जातमात्रस्याधिकारः, न तु उपनयनप्रतीक्षा । उपनयात् प्रागपि एते पदार्था अनुष्ठेयाः

इति पूर्वः पक्षः । तुशब्दः पक्षान्तरव्यावृत्त्यर्थः । तस्मिन् मन्वादिग्रन्थे इति तु सुबोधिनी ।

अपिवा वेदतुल्यत्वादुपायेन प्रवर्तेरन् । २३ ॥

पूर्वपक्षं सूत्रेण प्राप्तं अपिवा इतिशब्देन निरस्यन् सिद्धान्तमाह । उपायेन उपनयनेन सह एते धर्माः प्रवर्तेरन्, वेदतुल्यत्वात् विधायिकायाः स्मृतेः । वैदिकाश्च पदार्था उपनयनोत्तरकाला भवन्ति ! स्मार्ताश्चैते वैदिका एव । तस्मात् उपनीतस्यैते धर्माः, नानुपनीतस्य । के.

तस्मिन् पेषणमनर्थलोपात् स्यात् । १०। १।१२।५२ ॥

तस्मिन् पूर्वसूत्रोक्ते सौर्ये चरौ पेषणं स्यात् । अनर्थलोपात् अर्थलोपाभावात् देवतासंप्रदानात्मकप्रयोजनलोपाभावात्, पेषणे कृतेऽपि देवतायै दातुं शक्यत्वात् । इति पूर्वः पक्षः ।

अक्रिया वाऽपूपहेतुत्वात् । ५३ ॥

सौर्ये चरौ पेषणस्य अक्रिया न क्रिया न कर्तव्यता । पेषणस्य अपूपहेतुत्वात् । अपूपे पुरोडाशे कर्तव्ये तस्य हेतुः पेषणम् । चरौ तु न स्यात् । अन्तरूष्मपक्वविशदतण्डुलरूपो हि चरुः । पेषणे कृते तु विशदता न स्यात्, खलतिः स्यात् । तस्मात् चरौ कर्तव्ये न पेषणमिति सिद्धान्तः । के.

तस्मिन् विदिते सर्वं विदितं भवतीति न्यायः । अयं श्रीमद्वल्लभाचार्यैः श्रीमद्भागवतस्य सुबोधिनीटीकायामुदाहृतः । अयमर्थः–'विदुरो मैत्रेयसमीपे गत्वा स्वस्य सर्वज्ञतासिद्ध्यै बहु पृष्टवान् । तत्र, तस्मिन्विदिते सर्वं विदितं भवतीति न्यायेन भगवच्चरित्रे ज्ञाते सर्वं ज्ञातं भवति ' इत्युक्तमिति । साहस्री. ५८९.

तस्मिम् संस्कारकर्म शिष्टत्वात् । १२।४।९। २८ ॥

तस्मिन् पूर्वसूत्रोक्ते ज्वलतो वृक्षाग्रात् भ्राष्ट्रात् चणकादिभर्जनपात्रात् सुतप्तान्, प्रादाव्यात् दावाग्नेर्वा आहृत्य उखायां स्थापिते अग्नौ संस्कारकर्म आधानादयः संस्काराः कर्तव्याः । यतः सर्वकर्मार्थाः संस्काराः शिष्टाः विहिताः, इदानीं च उख्ये एवाग्नौ सर्वकर्माणि क्रियन्ते । तस्मात् उख्ये आधानिकाः संस्काराः कर्तव्याः इति पूर्वः पक्षः ।

स्थानात्तु परिलुप्येरन् । २९ ॥

आधानसंस्कृतस्य नित्यस्याग्नेः स्थाने अयमसंस्कृतः उख्योऽग्निः श्रुतः । एतस्मात् स्थानात् उख्येऽग्नौ संस्काराः परिलुप्येरन् । न कर्तव्याः । इति सिद्धान्तः । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । के.

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् । ८ । ४।४।१० ॥

दर्विहोमः सोमविकारो वा अपूर्वो वेति विचारे पूर्वपक्षमाह । तस्मिन् दर्विहोमे सोमः प्रवर्तेत सौमिको विध्यन्तः स्यात् । अव्यक्तत्वात् । अव्यक्तचोदनः सोमः, ' भिन्ने जुहोति ' इत्यादिर्दर्विहोमोऽपि अव्यक्तचोदनः । चोदनासामान्यात् सौमिको विध्यन्तः । अव्यक्तत्वं च विधिवाक्ये द्रव्यदेवताराहित्यम् ।

न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात्, तन्त्रे तेन विप्रतिषेधात् । ११ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । न दर्विहोमे सौमिको विध्यन्तः । 'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा ' इति स्वाहाकारेण संयोगात् । सौमिके तु तन्त्रे वषट्कारस्य निर्देशात् । सोमे हि वषट्कारो भवति, दर्विहोमे तु स्वाहाकारो विद्यते । एवं सति सौमिके तन्त्रे स्वीकृते तेन वषट्कारेण स्वाहाकारस्य विप्रतिषेधात् विप्रतिषेधप्रसङ्गात् न सौमिको विध्यन्तो दर्विहोमे । किन्तु अपूर्वोऽयम् । ' तत्रैतेन विप्रतिषेधात् ' इति कुतूहले पाठः । एतेन स्वाहाकारेण वषट्कारस्य विप्रतिषेधात् न तत्र सौमिको विध्यन्त इति तत्रार्थः ।

शब्दान्तरत्वात् । १२ ॥

दर्विहोमः अपूर्व एव न सोमविकार इति सिद्धान्ते हेत्वन्तरमाह । शब्दोऽत्र यजतिशब्दः सोमगतः । शब्दान्तरं अन्यः शब्दः जुहोतिः । यजतिचोदनः सोमः, जुहोतिचोदनो दर्विहोमः । तस्मात् अपूर्वो दर्विहोमः ।

लिङ्गदर्शनाच्च । १३ ॥

दर्विहोमे न सौमिको विध्यन्तः, किन्तु अपूर्वत्वमित्यत्र लिङ्गस्य दर्शनं भवति । औदुम्बरीहोमे स्वाहाकारं

विधाय आज्यविधिपरे वाक्ये 'घृतेन द्यावापृथिवी आपृणेथामिति अन्तरा कर्णौ जुहोति आ मूलादन्ववस्रावयति, भूमिगते स्वाहा करोति' इति । सौमिको यदि विध्यन्तो वषट्कारस्ततो भवेत्, न स्वाहाकारः । तस्मादपूर्वत्वम् । चशब्दः पूर्वहेतुसमुच्चयार्थः । औदुम्बरीशाखायाः कर्णयोर्मध्ये आज्यं होतव्यम् । हुतमाज्यं यथा शाखाद्वारा भूमौ गतं स्यात्, तथा भूयो होतव्यम् । भूमिगते चाज्ये सति स्वाहाकारः पठनीयः, न तु प्रागेव होमकाले इति श्रुत्यर्थः ।

**उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं, तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् । १४ ॥**

दर्विहोमे सोमविध्यन्तो नास्तीत्यत्र सिद्धान्तिना लिङ्गदर्शनमुक्तम्, तत्परिहरति पूर्वपक्षी । तुशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । स्वाहाकारः उत्तरार्थः वषट्कारशून्यौदुम्बरीहोमादिप्रदानार्थः विकृत्यर्थः । यथा साप्तदश्यमनारभ्याधीतं सामिधेनीसाप्तदश्यं प्रकृतिं गच्छति । तत्र प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृतिषु गतम् । तथैव 'स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति अनारभ्याधीतः स्वाहाकारः दर्शपूर्णमासौ सोमं च प्रकृतिं निविविक्षुः वषट्कारेणोपरुद्धः तद्वर्जं सोमवर्जं अन्यानि प्रदानानि उपसंक्रामति । तत्र एवं सति औदुम्बरीहोमादौ सौमिकविध्यन्तस्य प्रवृत्तिः अविप्रतिषिद्धा न विरुद्धा । पुनःशब्दः अनर्थकोऽत्र इति भाष्यम् । लिङ्गदर्शनात् पशुवत् । यथा श्रुतसामिधेनीसाप्तदश्ये पशौ प्रयाजादिलिङ्गदर्शनात् दर्शपूर्णमासधर्मप्रवृत्तिः न विरुद्धा, साप्तदश्यस्य वाचनिकत्वात् । तद्वत् औदुम्बरीहोमे वाचनिकत्वात् स्वाहाकारं प्रति लिङ्गदर्शनात् न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते ।

**अनुत्तरार्थो वाऽर्थवत्त्वादनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् । १५ ॥**

दर्विहोमे सोमविध्यन्तः, स्वाहाकारस्तु उत्तरार्थः इति पूर्वपक्षी यदाह तन्नेत्याह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । स्वाहाकारः अनुत्तरार्थः न उत्तरार्थः न वषट्कारशून्यप्रदानार्थः । प्रकृतावेव नारिष्ठहोमेषु पार्वणहोमयोश्च अर्थवत्त्वात् सफलत्वात् स्वाहाकारस्य । यदि प्रकृतौ स्वाहाकारः सार्थको न स्यात् तदा तेन अनर्थकत्वात् निरवकाशत्वेन बलवत्त्वात् प्राकृतस्य सौमिकस्य वषट्कारस्य सावकाशस्य उपरोधः स्यात् बाधः स्यात् । परन्तु न स्वाहाकारस्य आनर्थक्यम् । तस्मान्नोत्तरार्थः । अनुत्तरार्थत्वाच्च दर्विहोमानां सोमपूर्वत्वाभावे 'भूमिगते स्वाहा करोति' इति लिङ्गं भवत्येव ।

**न प्रकृतावपीति चेत् । १६ ॥**

पूर्वपक्षी आह । प्रकृतावपि दर्शपूर्णमासयोरपि विकृताविव नारिष्ठहोमादौ निवेशो न संभवति । तत्रापि अविशेषेण विहितो वषट्कार एव प्राप्नोति । स्वाहाकारः पाठप्राप्तः वषट्कारस्तु विहितः । विधिश्च पाठात् प्रबलः । तस्मात् स्वाहाकार उत्तरार्थ एव भवति विकृत्यर्थः ।

**उक्तं समवाये पारदौर्बल्यम् । १७ ॥**

तत्राह सिद्धान्ती । स्वाहाकारस्य नारिष्ठहोमादौ वषट्कारेण न बाधः । अत्र हि वाक्यप्रकरणयोः संनिपातः । प्रकरणेन नारिष्ठहोमेषु वषट्कारः प्राप्तः, नारिष्ठहोममन्त्रैः एकवाक्यत्वात् स्वाहाकारो वाक्येन प्राप्तः । एवं वाक्यप्रकरणयोः संनिपाते प्राप्ते उक्तं समवाये पारदौर्बल्यं श्रुतिलिङ्गसूत्रे तृतीयाध्याये । वाक्यं प्रकरणात् बलीय इति तत्रोक्तम् । तस्मात् स्वाहाकारस्य प्रकृतौ निवेशात् स न विकृत्यर्थः । ततश्च दर्विहोमो न सोमविकृतिः ।

**तच्चोदना वेष्टेः प्रवृत्तत्वात् तद् विधिः स्यात् । १८ ॥**

दर्विहोमेषु नारिष्ठहोमविध्यन्तः अस्तु इति पक्षान्तरमाह । वाशब्दः सोमविध्यन्तपक्षं अपूर्वत्वपक्षं च व्यावर्तयति । इष्टेः दर्शपूर्णमासयोः संबन्धिनी तच्चोदना जुहोतिचोदना नारिष्ठचोदना, सर्वेष्टिषु सर्वपशुबन्धेषु च प्रवृत्तत्वात् तत् तत्र वास्तुहोमे विधिः स्यात्, विधीयते इति विधिः, विधीयमाना स्यात् विहिता स्यात् । वास्तुहोमे दर्शपूर्णमासगतनारिष्ठचोदना प्रवर्तेत अन्यत्र प्रवृत्तत्वादित्यर्थः ।

**शब्दसामर्थ्याच्च । १९ ॥**

दर्विहोमेषु नारिष्ठहोमविध्यन्तः स्यात् इति पक्षान्तरे हेत्वन्तरमाह । चकारः समुच्चये । शब्दस्य सामर्थ्ये

चोदनासामान्यम् । 'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इति जुहोतिचोदना वास्तुहोमे, 'नारिष्ठान् जुहोति' इति जुहोतिचोदना नारिष्ठेषु । इति चोदनासामान्यरूपात् शब्दसामर्थ्यात् नारिष्ठधर्मप्राप्तिः दर्विहोमेषु ।

**लिङ्गदर्शनाच्च । २० ॥**

दर्विहोमेषु नारिष्ठविध्यन्तः स्यात् इति पक्षे हेत्वन्तरमाह । चकारः समुच्चये । नारिष्ठहोमप्रकृतिकत्वं दर्विहोमानामित्यत्र लिङ्गं दृश्यते । अग्निहोत्रे श्रूयते 'यदि कीटोऽवपद्येत अन्तःपरिधि निनयेत्' इति । तथा चयने श्रूयते 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति । परिधयो वेदिश्च अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गम् । यदि नारिष्ठधर्माः दर्विहोमेषु प्रवर्तेरन् ततः एतत् लिङ्गदर्शनमुपपद्येत । तस्मात् नारिष्ठविध्यन्तो दर्विहोमेषु स्यात् ।

**तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् । २१ ॥**

दर्विहोमेषु नारिष्ठविध्यन्तः इति पक्षान्तरं सूत्रैः प्राप्तं परिहरति । तत्रेति बुद्धिस्थाः त्र्यम्बकाः प्रतिनिर्दिश्यन्ते । तत्र त्र्यम्बकेषु नारिष्ठधर्माणां इध्माबर्हिःप्रयाजादीनां अभावः अप्रतिष्ठितत्वस्य हेतुत्वेन उपदिश्यते, 'अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः, नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीरन्वाह' इति । यदि च नारिष्ठहोमाः प्रवर्तेरन् ततः इध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात् तत्रायं तदभावः असत्त्वात् हेतुत्वेन न युज्येत । त्र्यम्बकाश्च दर्विहोमाः । तस्मात् अभावस्य हेतुत्वात् गुणार्थे नारिष्ठहोमार्थे नारिष्ठधर्मप्राप्त्यर्थं यदुक्तं लिङ्गदर्शनम्, तत् अदर्शनं स्यात् । अयुक्तं दर्शनं अदर्शनम् । असिद्धं वा दर्शनं अदर्शनम् । 'यदि कीटोऽवपद्येत अन्तःपरिधि निनयेत्' इति अग्निहोत्रे परिधिः, 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति सावित्रहोमे वेदिः इति दर्विहोमे नारिष्ठधर्मप्राप्तौ लिङ्गमुक्तं तन्न युज्यते इत्यर्थः । तस्मात् नारिष्ठहोमविध्यन्तो दर्विहोमेषु नास्ति ।

**विधिरिति चेत् । २२ ॥**

अग्निहोत्रादौ अन्तःपरिधिनिनयनादि यत् लिङ्गदर्शनमुक्तं तन्नासिद्धम् । त्र्यम्बकेषु इध्माबर्हिःप्रयाजादीनां यः प्रतिषेधः सः नारिष्ठहोमप्रकृतिकत्वात् त्र्यम्बकेषु प्राप्तानां इध्मादीनां प्रतिषेधको विधिः स्यात् । प्रतिषेधश्च प्राप्तिं दर्शयन् नारिष्ठविकृतित्वमेव त्र्यम्बकानां साधयति । तस्मात् दर्विहोमेषु नारिष्ठधर्मप्राप्तौ यत् लिङ्गमुक्तम् 'यदि कीटोऽवपद्येत' 'अन्तःपरिधि निनयेत्' 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इत्यादि, तत् युक्तमेव ।

**न वाक्यशेषत्वाद्, गुणार्थे च समाधानं, नानात्वे नोपपद्यते । २३ ॥**

त्र्यम्बकेषु 'नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते' इत्यादिः नारिष्ठहोमविकृतित्वेन प्राप्तानामिध्माबर्हिरादीनां प्रतिषेधको विधिरिति शङ्कां तृतीयपक्षोक्तां परिहरति । न प्रतिषेधको विधिर्युज्यते, वाक्यशेषत्वात् । 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इत्यस्य विधेः 'अप्रतिष्ठिता वै त्र्यम्बका नेध्माबर्हिः संनह्यते' इत्यादिवाक्यं वाक्यशेषः अर्थवादः । त्र्यम्बकेषु उत्पन्नस्य दोषस्य परिहारार्था 'आदित्यं घृते चरुम्' इति अदितीष्टिः इति विज्ञायते । एवं अदितिचरोः गुणार्थे स्तुत्यर्थे इध्माबर्हिरादिवाक्ये सति उत्पन्नदोषस्य समाधानं निरासः उपपद्यते । नानात्वे वाक्यभेदे स्वीकृते तु नोपपद्यते प्रतिषेधवाक्यम् । तस्मात् इध्माबर्हिरादिप्रतिषेधवाक्यस्य अदितिचरुवाक्येन एकवाक्यतैव स्वीकार्या । तस्मात् नासौ विधिः । सर्वथाऽपि दर्विहोमेषु नारिष्ठविध्यन्तो नोपपद्यते ।

सुबोधिन्यां तु– न विधिः, किन्तु आदित्ययागस्तावकवाक्यशेषत्वात् अर्थवादत्वात् । गुणार्थे उक्तवाक्यस्य गुणविध्यर्थत्वे तत्पक्षदूषकं समाधानं नानात्वेन नानावाक्यत्वेन वक्तुमुपपद्यते शक्यते । यदि इध्माबर्हिषोः अभावरूपगुणविध्यर्थमेव इदं वाक्यमिति वदेत्, तर्हि इध्माबर्हिर्निषेधकवाक्यमेकम्, 'न प्रयाजाः' इत्येकम्, 'नानुयाजाः' इत्येकम्, 'आदित्यं चरुं निर्वपेत्' इत्येकं इति नानावाक्यानि स्युः । इति व्याख्यातम् ।

कुतूहले तु 'न वाक्यशेषत्वाद् गुणार्थेऽर्थसमापनं नानार्थे नोपपद्यते' इति सूत्रपाठः । व्याख्या च–– 'नेध्माबर्हिः' इत्यादि न प्रतिषेधविधिपरम्, आदित्यचरुविधेर्वाक्यशेषत्वात् । अतो गुणार्थे नारिष्ठहोमार्थे चोदकप्राप्तेध्माबर्हिरादौ प्रतिषेधविधौ इति यावत् । अर्थ-

समापनं नेध्माबर्हिरिति वाक्यार्थपर्यवसानं नोपपद्यते । तथात्वे च नानार्थे आदित्यचरुस्तुतौ प्रतिषेधविधौ च अर्थसमापनं स्यात्, तच्च नोपपद्यते अनेकार्थतादोषात् इति ।

येषां वाऽपरयोर्होमस्तेषां स्याद्विरोधात् । २४ ॥

दर्विहोमेषु कस्य विध्यन्तः इति विचारे चतुर्थं पञ्चमं च पक्षमाह । वाशब्दः पक्षत्रयं व्यावर्तयति । न सोमविध्यन्तः नापूर्वत्वं न नारिष्ठहोमविध्यन्तः किन्तु येषां यागानां अपरयोः अग्न्योः गार्हपत्यदक्षिणाग्न्योः होमः, तेषां यागानां पत्नीसंयाजानां पिष्टलेपफलीकरणहोमयोर्वा विध्यन्तः स्यात् दर्विहोमेषु । अविरोधात् नारिष्ठहोमप्रवृत्तौ यो विरोधः उक्तः, स नास्ति । अपरयोर्होमाश्च जुहोतिचोदना एव । तस्मात् संपत्नीयहोमः प्रकृतिर्दर्विहोमानाम् ।

तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन् । २५ ॥

दर्विहोमे संपत्नीयहोमविध्यन्तः इत्युक्तं चतुर्थं पक्षं प्रतिषेधति । न संपत्नीयविध्यन्तः संभवति । कस्मात् तत्र दर्विहोमे क्वचित् औषधानि चोद्यन्ते । त्र्यम्बकेषु तावत् पुरोडाशाः, करम्भपात्राणि तण्डुलाः इत्येवमादीनि । तानि स्थानेन गम्येरन् आज्यस्थानापत्त्या आज्यधर्माः प्राप्येरन्, ते च न शक्यास्तत्रानुष्ठातुम् । याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारश्च स्वाहाकारेण । तस्मान्न संपत्नीयविध्यन्तः । 'तत्स्थानेन' इति कुतूहलपाठेऽपि आज्यस्थानापत्त्या इत्येवार्थः ।

लिङ्गाद्वा शेषहोमयोः । २६ ॥

'येषां वाऽपरयोर्होमः०' (८।४।४।२४) इत्यत्र द्वौ पक्षावुक्तौ । तत्र चतुर्थः पक्षः 'तत्रौषधानि०' इति पूर्वाव्यवहितेन सूत्रेण परिहृतः । इदानीं पञ्चमं पक्षं स्वातन्त्र्येण उपक्षिपति । शेषहोमयोः दाक्षिणाग्निकयोः पिष्टलेपफलीकरणहोमयोः प्रवृत्तिः स्यात् दर्विहोमेषु । लिङ्गात् औषधसामान्यरूपात् प्रकृतिलिङ्गात्, विरोधस्य चाभावात् । तस्मात् शेषहोमविध्यन्तो दर्विहोमेषु । वाशब्दस्य शेषहोमयोर्वा इत्यन्वयः । तेन च चतुर्थपक्षनिरासः ।

प्रतिपत्ती तु तौ भवतस्तस्मादतद्विकारत्वम् । २७ ॥

दर्विहोमेषु शेषहोमविध्यन्तः स्यात् इति पञ्चमं पक्षं प्राप्तं निरस्यति । तुशब्देन पक्षव्यावर्तनम् । तौ पिष्टलेपफलीकरणहोमौ शेषहोमौ प्रतिपत्ती भवतः प्रतिपत्तिकर्मरूपौ प्रज्ञायेते । दर्विहोमास्तु प्रधानकर्माणि । यद्यपि औषधधर्माः शक्याः कर्तुम्, तथापि प्रतिपत्तित्वात् अप्रयोजकास्ते निर्वपणादीनाम् । तस्मान्न शेषहोमविध्यन्तः । एवं च न सोमविध्यन्तः, न नारिष्ठहोमविध्यन्तः, न संपत्नीयहोमविध्यन्तः, नापि शेषहोमविध्यन्तः किन्तु दर्विहोमा अपूर्वा इति सिद्धान्तः ।

संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत, विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्, वचनादतिदेशः स्यात् । २८ ॥

दर्विहोमेषु अपूर्वत्वपक्षः सिद्धान्तितः । तत्र सामान्यतो न्यायं प्रतिपादयन् उपसंहरति । विरोधिनां प्रवृत्तिसाधकानां लिङ्गानां संनिपाते समवाये सति नारिष्ठधर्मादीनां अप्रवृत्तिः न प्रवृत्तिः प्रतीयेत । विध्युत्पत्तिव्यवस्थानात् । विधीनामुत्पत्तिः पाठः । स च व्यवस्थितः । केचित् दर्शपूर्णमासयोः पठ्यन्ते केचित् सोमे । तादृशस्य व्यवस्थितस्य अर्थस्य अपरिणेयत्वात् । यत्र पठिताः ततोऽन्यत्र परिणेतुं न शक्यन्ते, प्रकरणबाधप्रसङ्गात् । एवं विध्युत्पत्तिव्यवस्थानात् अर्थस्य अपरिणेयत्वात् विरोधिनामप्रवृत्तिः प्रतीयेत । क्वचित् तु वचनात् अतिदेशः स्यात् दर्विहोमानाम् । यथा राष्ट्रभृतामुद्वाहकर्मसु । वचनाभावे तु अपूर्वत्वमेव दर्विहोमानाम् । इति सिद्धान्तः । के.

* 'तेष्वदर्शनात् विरोधस्य' तेषु लौकिकेषु पदार्थेषु विरोधस्य अदर्शनात् (वैदिकी पदार्थप्रसिद्धिः) 'लोकसिद्धिं व्यतिक्रम्य साऽऽत्मानं नैव विन्दति'। वा. १।३।४।९ पृ. २२२. * तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥ तेषु आचारेषु स्मृतिमूलश्रुत्यनुमानात् प्राक् विरोधस्य अदर्शनात् प्रतिष्ठितेषु बाधासंभवात् आचाराणां बलीयस्त्वमेव तावद्युक्तम् । तदनङ्गीकरणे परं समा (तुल्या) विप्रति-

पत्तिः ( विकल्पः ) स्मृत्याचारयोः स्यात्, न तु आचारस्य दौर्बल्यम् । सु. पृ. २१२.

**तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥**

'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति' इति तत्रतत्र श्रुतम् । तत्र यवशब्दं केचित् दीर्घशूकेषु सक्तुषु प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ काके । वेतसशब्दं केचित् वञ्जुलके प्रयुञ्जते, केचित् जम्ब्वाम् । तत्र अनुष्ठाने निश्चितं किं ग्राह्यमिति विचारे पूर्वपक्षमाह । तेषु यवादिशब्दार्थेषु उभयत्र प्रयोगस्य प्रामाणिकत्वेन विरोधस्य अदर्शनात् समैव विप्रतिपत्तिः विकल्पः स्यात् । विकल्पेन उभावपि अर्थौ ग्राह्यौ ।

**शास्त्रस्था वा, तन्निमित्तत्वात् । ९ ॥**

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । शास्त्रस्था शास्त्रे वर्तमाना या विशिष्टा प्रतिपत्तिः प्रतीतिः सैव स्वीकार्या स्यात् । तन्निमित्तत्वात् वैदिकशब्दार्थज्ञानस्य निमित्तं यस्मात् वेद एव । तन्निमित्तत्वात् वेदनिमित्तकत्वात् वैदिकशब्दार्थज्ञानस्य । वेदश्च वारुणप्राघासिकयवमयकरम्भपात्रवाक्यशेषत्वेन उपलब्धः 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति दीर्घशूकान् यवान् दर्शयति । तस्मात् यवा दीर्घशूका एव । 'तस्माद् वराहं गावोऽनुधावन्ति' इति सूकरे वराहशब्दं दर्शयति । न किल कृष्णशकुनौ गवामनुधावनं संभवति इति । 'अप्सुजो वेतसः' इति वेतसं वञ्जुलं दर्शयति । जम्बूस्तु स्थले गिरिनदीषु वा । तस्मात् न विकल्पः । अथवा ये शास्त्रस्थाः तेषां प्रतिपत्तिः प्रमाणम् । के शास्त्रस्थाः ? शिष्टाः । श्रुतिस्मृत्यर्थावधारणे शिष्टाः निमित्तम् । अत्र पक्षे शास्त्रस्थाः इति पुंलिङ्ग बहुवचनान्तं पदम् । पूर्वत्र तु स्त्रीलिङ्गमेकवचनं इति भेदः, शेषं समानम् । के.

**तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥**

'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति' इति यववराहवेतसशब्दान् समामनन्ति । तत्र केचित् दीर्घशूके यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ ( काके ) । वेतसशब्दं केचित् वञ्जुले, केचित् जम्ब्वाम् । तत्र उभयथा शब्दार्थावगामत् विकल्पः इति । अत्र संगतिलोभात् प्रभाकरेण भाष्यकारीयो विकल्पशब्दः अनध्यवसायपरो व्याख्यातः । एवं हि मन्यते, निरपेक्षशास्त्रद्वयविहितयोर्हि व्रीहियवयोर्विकल्पो भवति । इह तु 'यवमयश्चरुर्भवति' इत्येकमिदं वाक्यं न अनावृत्तं दीर्घशूकप्रियङ्गुरूपोभयार्थविधायकं संभवति । आवृत्तौ च वाक्यभेदापत्तिः । न चैकस्य मुख्यत्वम्, अपरस्य गौणत्वमिति निर्धारयितुं शक्यते, विनिगमनाप्रमाणाभावात् । न च वाक्यशेषो विनिगमनाप्रमाणम्, 'यवमयश्चरुर्भवति' इत्यत्र वाक्यशेषस्य अश्रवणात् । किन्तु भाष्यकारमते वारुणप्राघासिकयवमयकरम्भपात्रविधिशेषोऽयं अर्थवादः । वार्तिककारमते तु यवमतीभिरद्भिः औदुम्बर्याः प्रोक्षणे विधीयमाने 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति । तेन यस्मिन्नेव अयं श्रूयते, तस्मिन्नेव यागे वाक्यशेषोऽयं यवशब्दस्य दीर्घशूकपरत्वे विनिगमनाप्रमाणम्, न तु अन्यत्रापि । इत्यतः अत्र अनध्यवसायात् अप्रामाण्यमिति । ( प्राभाकरव्याख्यानं दूषयति–) तदयुक्तम् । वक्ष्यमाणपूर्वपक्षन्यायेन विकल्पेनैव प्रामाण्योपपत्तौ अप्रामाण्यापादकस्य अनध्यवसायस्य असंभवात् । इति यत्किञ्चिदेतत् । इति यथाभाष्यमेव तावदधिकरणं प्रस्तूयते ।

श्रुतिविरोधाविरोधयोः स्मृतीनामप्रामाण्यं प्रामाण्यं च निरूप्य इदानीं देशभेदेन आर्यम्लेच्छयोः नानाऽर्थविषयकैकशब्दप्रयोगरूपाचारविप्रतिपत्तौ कथमिति निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यववराहवेतसशब्देषु देशभेदेन नानाऽर्थप्रसिद्धेषु उक्तन्यायेन विनिगमनाप्रमाणाभावात् विकल्प एवेति । न च यवादिपदावृत्तिरूपवाक्यभेदप्रसङ्गात् न विकल्पः संभवति इति वक्तव्यम् । अगत्या वाक्यभेदस्यापि अध्ययनविध्यनुमतत्वात् । यथा 'यस्य हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिसंख्याय यजेत' इति प्रतिनिमित्तं आज्यविध्यावृत्ति-

रूपवाक्यभेदः अध्ययनविध्यनुमत एव । तदुक्तम् 'गौणे लाक्षणिके वाऽपि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥' इति ( वा. पृ. २२३ ) । अतो विकल्पेनैव पूर्वपक्षो युक्त इति । एवं प्राप्ते, अभिधीयते ।

शास्त्रस्था वा, तन्निमित्तत्वात् । ९ ॥

अयमभिप्रायः । भवेत् अष्टदोषदुष्टोऽपि विकल्पः, यदि उभयाभिधानं भवेत् । इह पुनः अन्यतराभिधानेनैव अन्यतरस्य सादृश्यात् गौण्याश्रयणेन प्रतीत्युपपत्तौ नोभयाभिधानम्, शब्द- ( शक्ति इति पाठः )द्वय-कल्पनाप्रमाणाभावात् । अस्तिच अन्यतराभिधाने सति अन्यत्र गौणत्वनिमित्तम् । यतः सदृशास्तम्बाः प्रियङ्गवो दीर्घशूकाश्च । न च अन्यतराभिधाने विनिगमनाप्रमाणं नास्ति, वाक्यशेषस्यैव विनिगमनाप्रमाणत्वात् । ननु वाक्यशेषो यत्र श्रूयते, तत्रैव विनिगमनाप्रमाणं इत्युक्तम् । सत्यम् । यत्र अक्षादिपदस्येव निरूपितैव अनेकत्र शक्तिः, तत्रैव । इह वाक्ये कुत्र अस्य तात्पर्यमिति संदेहे यत्रैव वाक्यशेषः श्रूयते, तत्रैव विनिगमनाप्रमाणं भवति । इह पुनः शक्तिकल्पनाऽवसरे एकत्र शक्तिकल्पनेनैव अन्यत्र प्रतीतिप्रयोगयोः उपपत्तौ शक्तिकल्पनानिर्णायकत्वमेव वाक्यशेषस्य, इति नानुपपन्नम् । तथा 'वराहं गावोऽनुधावन्ति' इत्यर्थवादात् वराहशब्दस्य पशुविशेषाभिधाने । एवम् 'अप्सुजो वेतसः' इत्यर्थवादात् वेतसशब्दस्य वृक्षविशेषाभिधाने निर्णायकत्वमिति ।

प्रयोजनम्— यदि पूर्वः पक्षः, तदा विकल्पेन अनुष्ठानम् । अथ सिद्धान्तः, तदा दीर्घशूकादीनामेवेति । सूत्रं तु- शास्त्रस्था प्रसिद्धिर्बलीयसी अनादिशास्त्रनिमित्तत्वात् इति ।

( अथ वार्तिककारमतेन- ) तदेतत् यथाभाष्यमधिकरणं वार्तिककारपादा नानुमन्यन्ते । यववराहवेतसशब्देषु सर्वदेशेषु अभिधानविप्रतिपत्त्यनुपलम्भात् । तदुक्तम् 'नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः । जम्बूं न वेतसं प्राहुर्वराहं नैव वायसम् ॥' इति ( वा. पृ. २१८ ) । ( नैव वायसं इत्यत्र नापि वायसं इति मूले पाठः ) । किञ्च 'संदिग्धेषु वाक्यशेषान्निर्णयः' इत्यनेनैव लभ्यमानत्वात् अनुपपन्न एवायं विचारः । तदुक्तम् 'संदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् । वक्ष्यत्येव न तेनापि पृथक् कार्या विचारणा ॥' इति ( वा. पृ. २१८ ) । अथोच्येत, न वयमुदाहरणभेदात् अधिकरणभेदं ब्रूमः, किन्तु प्रतिपाद्यभेदादेव । तथाहि, 'अक्ताः शर्कराः' इत्यत्र किं अञ्जनसाधनमुपादेयं इत्युपपादनगतस्य संदेहस्य 'तेजो वै घृतम्' इत्यर्थवादबलेन निर्णयः क्रियमाणः तद्वाक्यगताक्तपदस्यैव क्रियते, न तु वाक्यान्तरगतस्य अक्तपदस्य । तेन उपादानसंदेहे समभिव्याहृतविध्युद्देशगतसंदेहनिर्णायकत्वमेव वाक्यशेषस्य, इति तदधिकरणप्रतिपाद्यम् । इह पुनः 'किमत्र यवशब्दस्याभिधेयम्' इत्यभिधानसंदेहे वाक्यशेषात् निर्णयः क्रियमाणः यावद्वाक्यगतयवशब्दगोचरामेव अभिधानशक्तिं व्यवस्थापयति, इति प्रतिपाद्यभेदात् अधिकरणभेदो युक्त एवेति । तदयुक्तम् । न्यायतुल्यत्वात् । तत्र उपादानसंदेहनिर्णये खलु अयं न्यायः 'विधिस्तुत्योः समानविषयत्वात् स्तुत्यस्यैव विधेयत्वम्' इति । तथा अभिधानसंदेहेऽपि दीर्घशूकस्तुतिदर्शनात् दीर्घशूकस्यैव विधेयत्वम् । तच्च अशाब्दस्य न संभवति इति अनधिगतमुख्यभूतार्थान्तरस्य शब्दस्य वाचकशक्तिमेव अवलम्ब्यावतिष्ठते । सर्वस्यैव संशयस्य एकतरपक्षानुग्राहिनिमित्तदर्शनेनैव निवर्तनीयत्वात् । न च उदाहरणभेदेन किञ्चिद्वैलक्षण्ये सति अधिकरणभेदो भवति, तथा सति 'यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणाविभक्तत्वात्' इत्यत्रापि फलयागयोः पुरुषार्थत्वप्रतिपादने अवान्तरहेतुवैलक्षण्यात् अधिकरणभेदप्रसङ्गः । स्वर्गस्य हि पुरुषार्थत्वं स्वभावादेव, यागस्य तु तत्साधनत्वेन । अथ तत्र एकन्यायविषयत्वम्, तदा इहापि उपादानसंदेहे स्तुतिसंबन्धमात्रादेव घृतादीनां विधेयत्वनिर्णयः । अभिधानसंदेहे तु त्रिकालनिरस्तमुख्यभूतार्थान्तरादर्शनानुगृहीतादेव स्तुतिसंबन्धात् अभिधेयं निश्चित्य विधेयनिर्णयः । इति यत्किञ्चिदेतत् इति । तदुक्तम् 'तथापि न्यायतुल्यत्वाद् यथा घृतपरिग्रहः । वाक्यशेषात् तथैव स्याद् यवाद्यर्थविनिर्णयः ॥' इति ( वा. पृ. २१९ ) । न च एवं

प्रियङ्गावपि प्रयोगदर्शनात् अर्थापत्त्या तत्रापि शक्तिः कल्पनीया इति वक्तव्यम् । यतः तत्सिद्धिन्यायेनैव (१।४।१२।२३-१) गौणत्वाश्रयणेनैव प्रियङ्गौ प्रयोगस्य अन्यथासिद्धत्वेन अर्थापत्तेः परिक्षयादिति । तौता.

* तस्यै शृतं इति मन्त्रे 'तस्मै शृतं' इत्यादिः ऊहः न कर्तव्यः साद्यस्क्रे त्रिवत्ससाण्डमन्त्रे । भा. ९।१।१५। ४२-४४ वर्णकं २.

⌛ तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् । ६।१।६।२४ ॥

स्त्रीपुंसयोः कर्मणि सहाधिकारः इत्यवगतम् । तत्र यावत् यागे समन्त्रकं कर्म याजमानं नाम, तत् सर्वं पत्न्याः न भवति । न तत्राधिकारः पत्न्याः । किन्तु आशीः आशीर्वाचका मन्त्राः ( वार्तिके तु आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते इत्युक्तम् ) 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः, ब्रह्मचर्यं च, यच्च 'पत्नीं संनह्यति' 'पत्नीं वाचयति' इत्यादि पत्नीमधिकृत्य यावदुक्तम्, तत् सर्वं पत्न्या कर्तव्यम्, नेतरत् । पत्न्याः यजमानेन अतुल्यत्वात् । अतुल्या हि स्त्री पुंसा । यजमानः पुमान् विद्वांश्च । पत्नी स्त्री विद्यारहिता च । तस्मात् तस्याः पत्न्याः यावदुक्तं आशीः ब्रह्मचर्यं च, तत्रैवाधिकारः । इति सिद्धान्तः । के.

⌛ तासामग्निः प्रकृतितः प्रयाजवत् स्यात् । ३।६।६।१६ ॥

पवमानेष्ट्यर्थः अग्निः किमाधानपवमानेष्टिसंस्कृतः स्यात्, केवलाधानसंस्कृतो वा इति संदेहे पूर्वः पक्षः । एकादशसूत्रस्थस्य इष्टिपदार्थस्य दर्शकं तासामिति सर्वनाम। तासां पवमानेष्टीनामधिकरणं योऽग्निः, स प्रकृतितः स्यात् । दर्शपूर्णमासरूपप्रकृतौ तावत् अग्निः केवलेन आधानेन पवमानेष्टिभिश्च संस्कृत एव भवति । विकृतिश्च प्रकृतिवत् भवति इति, प्रकृतौ यादृशोऽग्निः, तादृश एव प्रकृतितः प्राप्तोऽग्निः तासामिष्टीनां स्यात् । प्रयाजवत्, यथा प्रकृतौ प्रयाजा भवन्ति इति पवमानेष्टिष्वपि प्रकृतिवद्भावात् प्रयाजाः भवन्ति, तद्वत् अग्निरपि इति । प्रयाजा इव प्रयाजवत् प्रथमान्तात् वतिरत्र ।

न वा तासां तदर्थत्वात् । १७ ॥

आधानस्थपवमानेष्टीनामग्निः पवमानेष्टिसंस्कृतः स्यात् इतिपूर्वपक्षस्य निराकरणार्थो वाशब्दः । न पवमानेष्टीनामग्निः पवमानेष्टिसंस्कृतो भवति, किन्तु केवलाधानसंस्कृत एवाग्निः तासाम् । कुतः ? तासां पवमानेष्टीनां तदर्थत्वात् अग्न्यर्थत्वात् अग्निसंस्कारार्थत्वात् । पवमानेष्ट्यर्थं पवमानेष्टिकरणे तु अनवस्था स्यात् । तस्मात् पवमानेष्टीनामग्निः केवलाधानसंस्कृत एव स्यात् इति सिद्धान्तः । के.

* 'तस्यां तु स्यात् प्रयाजवत्' इत्येतदधिकरणन्यायेन पवमानहविःसंस्कृताग्निसाध्यत्वं तासां ( पवमानेष्टीनां ) अस्ति नास्ति इति विचारः । वा. ३।६।६।१६.

⌛ तस्यां तु स्यात् प्रयाजवत् । १०।१।४।६ ॥

तस्यामारम्भणीयायां आरम्भणीया भवितुमर्हति । तुशब्दस्य असंशयमित्यर्थः । आरम्भणीयायां यथा प्रयाजा भवन्ति तद्वत् । आरम्भणीयाऽर्थे आरम्भणीया स्यात् । यथाशक्ति आवृत्तिः इति नानवस्था । इति पूर्वः पक्षः ।

न वाऽङ्गभूतत्वात् । ७ ॥

न वा इति पूर्वपक्षः प्रतिषिध्यते । न स्यात् आरम्भणीयाऽर्थे आरम्भणीया । अङ्गभूतत्वात् दर्शपूर्णमासयोरङ्गभूता हि सा । अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिः ( दर्शपूर्णमासप्रयोगात् बहिर्भूतेयमारम्भणीया इति स्थितिः ) । तस्मात् आरम्भणीयाऽर्थे नारम्भणीया इति सिद्धान्तः ।

एकवाक्यत्वाच्च । ८ ॥

दर्शपूर्णमासयोरङ्गत्वेन विहितारम्भाङ्गत्वेन विधायकमेकमेव वाक्यम् 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इति । न द्वितीयमस्ति । तस्मात् आरम्भणीयाऽर्थे आरम्भणीया न कर्तव्या इति सिद्धान्तः । के.

⌛ तदन्तमपकर्षे स्यात् इत्यनेन न्यायेन प्रयाजापकर्षे आघारादीनां यथा अपकर्षः, ( अनेन न्यायाक्षरार्थः उक्तः । तदन्तं प्रयाजान्तम् । ) तथा अभिषेकापकर्षे विदेवनादीनामपकर्षः इति पूर्वः पक्षः । रत्न. ५।२।१०।२१.

* तदन्तानां प्रयाजान्तानां सामिधेन्याघारसहितानामपकर्षः अग्नीषोमीये पशौ । (एवं अनुयाजानां स्वोत्तरसूक्तवाकादिसहितानामुत्कर्षः सवनीये पशौ)। भा. ५।१।१२।२३-२४.

⌛ तदन्तापकर्षन्यायः। तदादितदन्तन्याय एवायम् । ५।१।१२।२३-२४.

* अध्वरकल्पायाम् 'पुरा वाचः प्रवदितोर्निर्वपेत्' अत्र सर्वनिर्वापापकर्षे तदन्तापकर्षन्यायेन निर्वापान्तपदार्थानां सर्वप्रयोगीयाणां तन्त्रेण करणम्, इति प्राप्ते...। भाट्ट. ११।२।३. * 'दीक्षासु यूपं छिनत्ति' इत्यपकृष्यमाणं अग्नीषोमीयादीन् अपकर्षति तदन्तापकर्षन्यायात् इति प्राप्ते । बिन्दु. ५।१।१४. * राजसूये अभिषेचनीयदशपेयौ । तत्र अभिषेचनीयसोमक्रयकाले दशपेयसोमक्रयः प्रतिकृष्यते । स च प्रतिकृष्यमाणः तदन्तापकर्षन्यायात् ततः प्राचोऽपि पदार्थानपकर्षति इति आरम्भस्तावत् उभयोः समानतन्त्रः, इत्यादि प्राप्ते । भाट्ट. ११।२।१३. * तदन्तत्वतदादित्वनियामकः पूर्वोत्तरपदार्थयोः क्रम एव। तेन ज्योतिष्टोमे अग्नीषोमीयपशौ प्रयाजान्तानामपकर्षः, सवनीये च अनुयाजान्तानामुत्कर्षः । सोम. ५।१।१२.

⌛ तदभावो नाडीषु तच्छ्रुतेरात्मनि च । (३।२।२।७ ब्र.) इति न्यायेन समर्थ्यमाना प्रत्यगात्मनो विशुद्धिः । (तदभावः तयोः जाग्रत्स्वप्नयोरभावः नाडीषु चकारात् पुरीतति आत्मनि च जीवे संपन्ने भवति । कुतः? तच्छ्रुतेः 'आसु तदा नाडीषु सृप्तो भवति' 'पुरीतति शेते' 'य एषोऽन्तर्हृदय आकाशः, तस्मिन् शेते' इति श्रुतिभ्यः इति अक्षरार्थः।) सं. शारीरके रामतीर्थः अध्यायः ३ श्लो. १२०.

⌛ तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायः । यथा सर्वेषां ब्रह्मादिदेवानामीश्वरांशत्वात् तदभिन्नत्वे अन्योन्यमप्यभेद इति भावः । साहस्री. ७१.

⌛ तदभ्यासः समासु स्यात् । ९।२।४।२१ ॥ अग्निष्टोमे एकं साम तृचे प्रत्यृचं परिसमाप्तं गेयं इत्यवगतम् । अथ समानच्छन्दस्के एव तृचे गेयम्, अनियमो वेति विचारे सिद्धान्तमाह । तदभ्यासः प्रत्यृचं तस्य साम्नः अभ्यासः समासु समानच्छन्दस्कासु तिसृषु ऋक्षु कर्तव्यः स्यात्, न समासु विषमासु वा अनियमेन । तृचे इति हि त्रित्वसंख्याव्यवहारः । संख्याव्यवहारश्च समाने कस्मिंश्चिदाश्रीयमाणे भवति । तस्मात् समानच्छन्दस्के तृचे अभ्यासः ।

लिङ्गदर्शनाच्च । २२ ॥

अग्निष्टोमे प्रत्यृचं परिसमाप्य गेयं साम समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गेयं इत्यत्र लिङ्गस्य दर्शनं भवति 'स्थाल्यां सक्थि अवधीयते इत्याहुः, यद् बृहत् गायत्रीषु क्रियते' इति । 'त्वामिद्धि हवामहे' इति एकत्रिंशदक्षरायामृचि उत्पन्नं बृहत् साम गायत्रीषु चतुर्विंशत्यक्षरासु गातव्यं इति यत्, तत् स्थाल्यां अल्पपरिमाणायां सक्थि ऊरुः अधिकपरिमाणः पाकाद्यर्थं अवहितः स्यात् तद्वत् भवेत् । नहि अल्पे महान् अवस्थातुं शक्नोति इति हि तत्रोक्तम् । तस्मात् विषमच्छन्दस्कासु साम न गेयमिति सिद्धं भवति । के.

⌛ तदभ्यासः समासु स्यात् । ९।२।४।२१ ॥

अथ अत्रैव 'तदभ्यासः' इत्यादिभिश्चतुर्भिः सूत्रैर्वर्णकान्तरम् । भाष्यीयं वर्णकान्तरं तु 'त्रैशोकाधिकरणम्' इत्यत्र द्रष्टव्यम् । द्वादशाहे चतुर्थेऽहनि त्रैशोकं नाम साम 'विश्वाः पृतना अभिभूतरं नरम्' इत्येतस्यां अतिजगत्यामुत्पन्नम् । उत्तरे द्वे ऋचौ तु 'नेमिं नमन्ति चक्षसा' इति 'समीं रेभासो अस्वरन्' इति च बृहत्यौ । अयं तृचो विषमच्छन्दस्को भवति । तत्र विचार्यते किमन्ये द्वे अतिजगत्यौ कुतश्चिदुपादाय समास्वेव त्रैशोकं गातव्यम्, किंवा विषमास्वेवेति । तत्र पूर्वपक्षमाह । तदभ्यासः तस्य त्रैशोकसाम्नः अभ्यासः समासु स्यात् । विश्वाः पृतना इत्येका स्वीया अतिजगती, अन्ये च द्वे अतिजगत्यावेव दाशतयीभ्य आगमय्य तासु तिसृषु समासु त्रैशोकं गातव्यमिति ।

लिङ्गदर्शनाच्च । २२ ॥

'अतिजगतीषु स्तुवन्ति' इति बहुवचनरूपस्य लिङ्गस्य दर्शनात् समास्वेव । इति पूर्वः पक्षः ।

नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत । २३ ॥

तुशब्देन पूर्वपक्षं निरस्य सिद्धान्तमाह । उत्तराग्रन्थे पाठनिमित्तात् आनन्तर्यात् बृहत्योरेव उत्तरात्वं स्यात्, तच्च श्रौतपाठनिमित्तेन नैमित्तिकम् । तदेव प्रतीयेत । नात्र द्वे अतिजगत्यौ कुतश्चित् आगमयितव्ये, पाठश्रुतेर्बलीयस्त्वात् । तस्मात् त्रैशोकस्य विषमास्वेव गानम् ।

ऐकार्थ्याच्च तदभ्यासः । २४ ॥

ननु यदि त्रैशोकं विषमच्छन्दके तृचे गीयेत, तदा तृचे इति संख्यावाचकः शब्दः अनुपपन्नः स्यात् इति चेन्न । ऐकार्थ्यात् एकदेवताकत्वरूपात् एकार्थकत्वात् छन्दोभेदेऽपि तृचशब्दस्योपपत्तिः । ननु तथापि 'अतिजगतीषु स्तुवन्ति' इति अतिजगतीशब्दस्य बहुवचनं नोपपद्यते इति चेत्, तत्राह तदभ्यासः इति । 'एकविंशः षोडशी' इति षोडशिनि सर्वाण्येव स्तोत्राणि एकविंशानि भवन्ति, तत्र त्रैशोकेऽपि सामनि सप्तकृत्वः अभ्यस्यमाने योनिभूता एकाऽपि सती अतीजगती सप्तसंख्यामापद्यते । एवं सति अतिजगतीषु इति बहुवचनमुपपद्यते एव । तस्मात् अतिजगत्योः अन्यतो नागमः । किन्तु त्रैशोकं विषमास्वेव गेयमिति सिद्धान्तः । के.

**तदर्थशास्त्रात् । १।२।४।३१ ॥**

अथेदानीं किं विवक्षितवचना मन्त्राः, उत अविवक्षितवचना इति किमर्थप्रकाशनेन यागे उपकुर्वन्ति, उत उच्चारणमात्रेणेति । अत्र प्रभाकरेण संगतिलोभात् इत्थमुपवर्णितमधिकरणम्—'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यत्र 'उरु प्रथा उरु प्रथस्व' इति मन्त्रस्य यदि अर्थो विवक्षितः, तदा तत्सामर्थ्यादेव लिङ्गात् पुरोडाशप्रथने तस्य विनियोगसिद्धेः 'पुरोडाशं प्रथयति' इति तदर्थशास्त्रमविवक्षितार्थं स्यात् । अथ तदर्थशास्त्रं विवक्षितार्थम्, तदा मन्त्रस्य अविवक्षितार्थता, इति परस्परव्याघातात् अप्रामाण्यं चोदनायाः । इति पूर्वः पक्षः । सिद्धान्तस्तु, किञ्चित्करस्य किञ्चित्कार्ये किञ्चित्-क्रियाद्वारेण विनियोगो भवति । यथा अवघातस्य किञ्चित्करस्य किञ्चित्कार्ये व्रीहौ द्वितीयाऽभिधेयफलभागितारूपक्रियाद्वारेण । तेन यत्र एतत् त्रितयं श्रुतितोऽवगम्यते, तत्र श्रुतित एव विनियोगावगमो भवति । इह पुनः 'इति पुरोडाशं प्रथयति' इति श्रुतौ इतिकरणेन किञ्चित्करो मन्त्रः प्रतीयते । पुरोडाशं प्रथयेत् इति पुरोडाशप्रथनं किञ्चित्कार्ये प्रकाशनं च किञ्चित्-क्रियाविशेषः श्रुतेः । प्रतीयते तु मन्त्रस्य अभिधानसामर्थ्यरूपात् लिङ्गात् अभिधायकस्य मन्त्रस्य किञ्चित्करता । अभिधेयस्य च प्रथनस्य किञ्चित्कार्यता, अभिधानस्य च प्रकाशनरूपस्य किञ्चित्क्रियात्वमिति । तेन मन्त्रलिङ्गादेव त्रितयोपस्थितेः मन्त्रलिङ्गमेव पुरोडाशप्रथने मन्त्रविनियोजकम् । तथा च सति 'पुरोडाशं प्रथयति' इति श्रुतिः अनुवादिकैव । यत्र तु श्रुत्यैव त्रितयोपस्थितिः यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति ऐन्द्रीमन्त्रस्य किञ्चित्कार्यता, उपपूर्वस्य तिष्ठतेः प्रकाशनार्थत्वात् प्रकाशनस्य किञ्चित्क्रियात्वमिति, तत्र श्रुतिरेव विनियोजिका । न च इह मन्त्रलिङ्गस्य विनियोजकत्वात् श्रुतेर्वैयर्थ्यम्, अन्वितकार्यप्रतिपादनेनैव प्रयोजनवत्त्वात् । नहि सर्वत्रैव अन्वितकार्यप्रतिपादनात् अन्यत् प्रयोजनमस्ति । अनुवादेऽपि तत् अव्याहतमेव इति न परस्परव्याघातात् अप्रामाण्यं चोदनाया इति ।

तदेतदसंगतम् । परस्परव्याघातहेतोः अभावेन पूर्वपक्षाभावात् । तुल्यबलयोर्हि व्याघातो भवति । मन्त्रस्य तु सामर्थ्यानुसारेण कल्पनीयः श्रुत्या विनियोगः । तदर्थशास्त्रं तु श्रुतिरूपतया स्वत एव विनियोजकम् । तदेवं प्रत्यक्षश्रुतिवशात् मन्त्रस्य अविवक्षितार्थत्वमेव । पूर्वपक्षोक्तः परस्परव्याघातस्तु कुतः? न च वाच्यम् 'यद्यपि अध्यापनविधिप्रयुक्तमध्ययनम्, तथापि नान्तरीयकतया गम्यमानस्यार्थस्यापि अन्तरङ्गतया अध्येत्रधिकारपर्यवसानार्थमपेक्षितस्य अध्ययनविधिना विवक्षितत्वात् कृत्स्नस्यैव मन्त्रस्य विवक्षितार्थत्वेन भवति व्याघातः' इति, निर्वापमन्त्रे 'देवस्य त्वा सवितुः प्रसवे' इत्यादीनामविवक्षितार्थानामपि दर्शनात् । न च तेषामर्थवादत्वम्, विध्येकवाक्यताया अभावात् । यथा च तेषामुच्चारणं हुमादिपदानां चोच्चारणं प्रयोगसमवेतार्था-

भावेन अदृष्टार्थम्, तथा तदर्थशास्त्रेण ताद्रूप्यपरिच्छेदात् अत्रापि अदृष्टार्थमेव मन्त्रोच्चारणमिति युक्तम् । भवतु वा मन्त्रस्य विवक्षितार्थत्वे तत्कारित एव मन्त्रविनियोगः, तथापि तदर्थशास्त्रस्य न अविवक्षितार्थत्वम् । यतः अर्थवादाधिकरणे एव एतन्निरूपितं यत् 'विधिप्राप्तप्राशस्त्यानुवादकस्यापि अर्थवादस्य अध्ययनविधिवशात् अनुवादकत्वेनैव विवक्षितार्थत्वम्' (इति) । अतः तुल्यन्यायतया तेनैव गतत्वात् तुल्यार्थयोः मन्त्रतदर्थशास्त्रयोः अन्यतरस्य अनुवादकत्वेन विवक्षितार्थत्वे सति यदेतत् व्याघाताभिधानम्, तत् पूर्वापरानवहितस्यैव इति यत्किञ्चित् एतत् । इति यथावार्तिकमेव इदमधिकरणं वर्णनीयम् ।

अर्थवादानां विधेयस्तुत्युपयोगद्वारेण प्रामाण्ये निरूपिते सति इदानीं मन्त्राणां विहितार्थप्रकाशनोपयोगद्वारेण प्रामाण्ये प्रतिपादयितव्ये किं विवक्षितार्था मन्त्राः, उत अविवक्षितार्था इति निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । न तावत् विहितार्थप्रकाशनेन मन्त्राणां क्रतूपयोगः संभवति, ध्यानादिभिरपि तदुपपत्तौ मन्त्रवैयर्थ्यात्, विपरीतत्वाच्च । अर्थे हि प्रथममवगते तद्वाचकशब्दस्मरणं भवति । स चेदर्थः प्रथममवगत एव, किं मन्त्रेण । न च 'मन्त्रस्मारितानुष्ठितेनैव क्रतूपकारः सिध्यति' इति नियमः संभवति, यतो विवक्षितार्थत्वे सति मन्त्राणां अवघातादिवत् नियमादृष्टकल्पनोपपत्तिः । न च एवमर्थो विवक्षितः, तदर्थशास्त्रविरोधात् । यदि हि 'उरु प्रथा उरु प्रथस्व' इति मन्त्रो विवक्षितार्थः स्यात्, तदा तदभिधानसामर्थ्यादेव पुरोडाशप्रथने विनियोगसिद्धेः 'अनेन मन्त्रेण पुरोडाशं प्रथयति' इति विनियोगश्रुतिः अनर्थिका भवेत् । तेन एतदवगम्यते 'नैव मन्त्रा विवक्षितार्थाः' इति । तदुक्तं भाष्ये ( १।२।४।३१ पृ. १४५ ) 'साक्षश्चेत् अन्येन नीयते, नूनमक्षिभ्यां न पश्यति' इति । किञ्च क्वचित् मन्त्रलिङ्गविपरीतेऽर्थे श्रुत्या विनियोगो दृश्यते यथा ऐन्द्रीमन्त्रस्य गार्हपत्ये । तदपि मन्त्रस्य विवक्षितार्थत्वे न घटेत । एवं निर्वापमन्त्रे देवस्यत्वाऽऽदिपदानां प्रयोगासमवेतार्थानां अवश्यमविवक्षितार्थत्वं वक्तव्यम् । तथा हुमादिपदानां च अर्थाभावात् अविवक्षितार्थत्वं सिद्धमेव । तेन यत्रापि अर्थोऽवगम्यते, तत्रापि अनुष्ठेयस्मृतेः अन्यतः सिद्धत्वेन उक्तत्वात् अविवक्षितार्थत्वं सिद्धमेव मन्त्राणामिति । अतः प्रकरणपठितानामनारभ्याधीतानां च मन्त्राणां यथासंभवं श्रुतिवाक्यप्रकरणादिभिर्विनियुक्तानां प्रधानविधिना स्वरूपमेव अङ्गीकृतम् । तच्च स्वरूपं अक्रियारूपत्वात् यद्यपि न इतिकर्तव्यतात्वमधिकुरुते, तथापि स्वरूपाङ्गत्वार्थं अवश्याभ्युपेतव्योच्चारणक्रियाद्वारेण कारकत्वेनैव स्वीक्रियते । उच्चारणं दृष्टासंभवात् अदृष्टार्थमेव प्रयाजादिवदिति । ननु अपेक्षितार्थावबोधार्थः अध्ययनविधिः कृत्स्नस्वाध्यायस्यैव विवक्षितार्थत्वमापादयन् मन्त्रस्य अविवक्षितार्थत्वे विरुध्येत । मैवम् । हुमादिवत् स्वाध्यायाविनाशसिद्ध्यर्थमेव अध्ययनोपपत्तेः । अथवा मन्त्रभागेऽपि अपेक्षितार्थावबोधार्थ एव अध्ययनविधिः । मुख्यार्थत्वं हि शब्दानामौत्सर्गिकम् । तदनुपपत्तौ लाक्षणिकस्यापि शाब्दत्वं भवति । तत् अत्रापि तदर्थशास्त्रादिभिः मुख्यार्थत्वानुपपत्तेः प्रतिपादकत्वेन मुख्यार्थसंबद्धं स्वरूपमेव मन्त्रा लक्षयन्ति । तच्च स्वरूपं दृष्टासंभवात् उच्चारणद्वारेण अदृष्टेन उपकारेण क्रतौ उपयुज्यते इति भवति अत्रापि अध्ययनविधेः अपेक्षितार्थावबोधपरत्वम् । ननु भिन्नयोर्हि लक्ष्यलक्षणभावो भवति यथा प्राशस्त्यार्थवादयोः । इह तु तदेव मन्त्रस्वरूपं लक्ष्यं लक्षकमिति स्वात्मनि वृत्तिविरोधात् न संभवति । मैवम् । मन्त्राणामपि उभयरूपस्वीकारात् । यथा हि अस्य प्रमाणत्वं रूपम्, तथा प्रमेयत्वमपि अस्य अस्त्येव । तेन प्रमाणत्वेन रूपेण लक्षकत्वम्, प्रमेयत्वेन च लक्ष्यत्वं इति किमनुपपन्नम् । एतेन 'शाब्दाशाब्दयोः अनन्वयात् कथमशाब्दस्य मन्त्रस्य शाब्दक्रतुभावनाऽन्वयः' इत्येतदपि प्रत्युक्तम् । एकस्यैव मन्त्रस्य प्रतिपाद्यप्रतिपादकरूपेण लक्षणया शाब्दत्वस्य उक्तत्वात् इत्येतत् तदर्थशास्त्रादिभिः अविवक्षितार्थत्वेन मन्त्राणामदृष्टार्थत्वमेव । इत्येवं प्राप्ते, अभिधीयते ।

**अविशिष्टस्तु वाक्यार्थः । ३२ ॥**

अयमभिप्रायः । भवेदेवं यदि मन्त्राणामविवक्षितार्थत्वं भवेत् । तथाहि, अध्ययनविधिना हि पृथगधीतानां

मन्त्राणां क्रतुमध्यगतं चाध्ययनं विधीयते ; न तत्र स्वरूपज्ञानार्थत्वम्, मन्त्रसमाम्नायगतेनैव पाठेन तस्य सिद्धत्वात् । तेन क्रतूपयोगज्ञापनार्थमेव तत् इति निश्चीयते । क्रतूपयोगश्च तेषां प्रयाजादिवाक्यवत् नार्थसमर्पणेन, निवृत्तव्यापाराणां तदर्थस्य विधिवाक्यादेवावगतेः । अतः स्वरूपेणैव तेषां क्रतूपयोगो वक्तव्यः । तच्च स्वरूपं स्वयमक्रियात्वात् यद्यपि नेतिकर्तव्यतारूपेण प्रकरणेन गृह्यते, तथापि कारकत्वेन रूपेण ग्रहीतुं शक्यते एव । किं कुर्वतस्तस्य कारकत्वमित्यपेक्षायाम्, 'यत् शक्नुयात्' इति दृष्टशक्त्यनुसंधाने वाक्यार्थप्रतीतिः तत्कार्यमुपलक्ष्यते । अनुष्ठेयविहितपदार्थस्मरणं च प्रयोगविधिरपेक्षते । मन्त्रवाक्यार्थश्च प्रतीतः सन् एकदेशद्वारेणापि शक्नोति तत् स्मारयितुम्, इति विहितपदार्थस्मरणफलवाक्यार्थज्ञानमेव कुर्वतां भवति प्रकरणेन कारकतया ग्रहणम् । तेन उच्चारणमेव एषां स्वरूपाभिव्यक्तये प्रयोगकाले अवश्यकरणीयम्, न तु प्रयाजादिवाक्यानामपि प्रकरणग्रहणम्, तेषां स्वरूपस्याग्रहणादिति विशेषः । यदि तु स्मृतिफलमपेक्षितं दृष्टमर्थज्ञानं नोपलभ्येत, तदा केवलादृष्टफलोच्चारणक्रिययैव अस्य कारकत्वं भवेदपि, सति तु परंपरयाऽपि दृष्टलाभे नादृष्टकल्पना उपपत्तिमती इति विवक्षितार्था एव मन्त्रा इति । न च ध्यानादिभिरपि स्मरणोपपत्तौ मन्त्रवैयर्थ्यम्, नियमादृष्टेनैव अर्थवत्त्वात् । यथा हि प्रकारान्तरेणापि वैतुष्यसिद्धौ नियमार्थः अवघातादिविधिः अर्थवान् भवति, तथा अयमपि इति नानुपपन्नम् । अतः विवक्षितार्थत्वान्मन्त्राणां न स्वाध्यायाविनाशार्थं मन्त्राध्ययनम् । नापि मुख्यार्थानुपपत्त्या लक्षणया स्वरूपपरत्वम् । किं तर्हि ? मन्त्राध्ययनं अपेक्षितवाक्यार्थावबोधार्थमेव । ननु कथं तर्हि सिद्धान्तेऽपि अशाब्दस्य मन्त्रस्य क्रतुभावनया समन्वयः ? तत्र केचित् शाब्दत्वसिद्ध्यर्थं सिद्धान्तेऽपि लक्षणया स्वरूपपरत्वं वदन्ति, तदयुक्तम् । मुख्यार्थपरित्यागेन तत्संबद्धोपपादकार्थान्तरकल्पना हि लक्षणा इति लक्षणातत्त्वम् । न चात्र पूर्वपक्षवादिमते इव सिद्धान्तेऽपि मुख्यार्थपरित्यागोऽस्ति, विवक्षितार्थत्वान्मन्त्राणाम् । किन्तु प्रयोगभावना अनुष्ठेयस्मृतिमन्तरेण अनुपपद्यमाना प्रकरणाम्नातमन्त्रार्थवत्त्वाय स्मृतिसमर्थं मन्त्रमेव स्मृतिहेतुतया अङ्गीकुरुते । तच्च मन्त्रस्य अशाब्दत्वे न संभवति इति तदर्थं श्रुतार्थापत्त्या तत्परशब्दकल्पनमेव उचितम् । विश्वजिदादौ इव उपपादकत्वेन तर्कितस्य स्वर्गस्य तत्परशब्दकल्पनेन, इति नानुपपन्नम् । न च तदर्थशास्त्रादिभिः अविवक्षितार्थत्वम्, तदर्थशास्त्रस्यैव अभावात् ; तत्र 'बर्हिर्देवसदनं दामि' इत्यादौ तावत् तत्संभावनैव न समस्ति । यत्रापि तत्संभावना समस्ति अभ्यादानमन्त्रेषु, तत्रापि न श्रुतेर्मन्त्रविनियोजकत्वम् । किं तर्हि ? सामर्थ्यतो मन्त्राः तदादाने प्राप्ताः 'तां चतुर्भिरादत्ते' इति श्रुत्या चतुःसंख्याऽपि आदाने विहिता । तयोश्च एकादानक्रियाऽन्वये सति अरुणैकहायनीन्यायेन परस्परनियमे सति 'समुच्चितैरेव चतुर्भिर्मन्त्रैः आदानं कर्तव्यम्' इति वाक्यार्थः संपद्यते । तेन चतुःसंख्याश्रवणं तत्र गुणार्थमेव । तदुक्तं सूत्रकारेण 'गुणार्थेन पुनःश्रुतिः' इति । एवम् 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादौ च मन्त्रस्य सामर्थ्यतः गर्दभरशनायामपि प्राप्तिर्भवत्येव । तथापि लिङ्गविनियोगस्य श्रुत्यनुमानेन विप्रकृष्टत्वात् 'इत्यश्वाभिधानीमादत्ते' इति प्रत्यक्षश्रुतिवशादेव मन्त्रस्य अश्वरशनायां विनियोगात् मन्त्रप्रकरणिनोः नैराकाङ्क्ष्ये ज्ञाते न लिङ्गद्वारेण सामान्यश्रुतिकल्पनम् । अतः प्रत्यक्षश्रुतिरेव मन्त्रविनियोजिकेति । किन्तु विनाऽपि विधिना प्राप्स्यतः किं विधिना इति प्रयोजनगवेषणायां लिङ्गस्य रशनामात्रविषयत्वात् गर्दभरशनायामपि मन्त्रप्रसक्तौ तन्निवृत्तिरेव प्रयोजनम् । तदुक्तं ग्रहाधिकरणे

'रूपप्रकरणद्वारा श्रुतिर्यावत् प्रकल्प्यते (यावच्च कल्प्यते इति मूले) । तावत् प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते ॥ अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः । परिसंख्या फलेनोक्ता न विशेषपुनः-श्रुतेः ॥ प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे । न गर्दभाभिधानीतः फलमन्यन्निवर्तनात् ॥' इति (वा. ३।१।७।१४ पृ. ७११) । तदुक्तं सूत्रकृता 'परिसंख्या' (इति) । 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत् प्रजया पशुभिः

## तथाऽभिघारणस्य । १०।३।१०।३८ ॥

श्यामाकाग्रयणे 'वासो दक्षिणा' व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति श्रूयते । तयोश्च वासोवत्सयोः अन्वाहार्यधर्माः कर्तव्याः, पाकस्तु न कर्तव्य इत्युक्तम् । तथा पाकवत् अभिघारणस्य अकर्तव्यता । अन्नकारितत्वात् अन्नेन कारितत्वात् अन्नप्रयुक्तत्वात् इति पूर्वसूत्रादनुवर्तनीयम् । भक्षणीयस्य स्वादुतासंपादनार्थं हि अभिघारणं भवति, वासोवत्सयोस्तु अन्नत्वमेव नास्तीति अभिघारणमपि न कर्तव्यमिति सिद्धान्तः । के.

## तथाऽभिधानेन । ३।७।४।८ ॥

अन्तरागर्भिणीरूपाधिकरणस्य पूर्वपक्षसूत्रमिदम् । पूर्वसूत्रात् संयोगात् इतिपदम्, पूर्वतरसूत्रात् प्रधानस्य इति पदं चानुवर्तते । 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्यायाम्' इति विषयवाक्यमत्र । 'पृथिवी होता' इत्यादिर्मन्त्रः चतुर्होता नाम । 'अग्निर्होता । अश्विनाऽध्वर्यू' इत्यादिर्मन्त्रः पञ्चहोता नाम । पौर्णमास्यमावास्याशब्दाभ्यां तत्तद्यागगतं प्रधानहविर्गृह्यते । चतुर्होतृमन्त्रेण पौर्णमासीगतप्रधानहविषः अभिमर्शनं हस्तेन स्पर्शनं कर्तव्यम् । पञ्चहोतृमन्त्रेण अमावास्यायागगतप्रधानहविषः अभिमर्शनं कर्तव्यमिति विषयवाक्यार्थः । इदमभिमर्शनं किं प्रधानमात्रस्य, उत अङ्गप्रधानानामिति संशये अभिमर्शनं प्रधानस्यैव नाङ्गानाम् । तथाशब्देन पूर्वसूत्रसूचिता वेदिर्दृष्टान्तिता । वेदिवत् अभिमर्शनमपि प्रधानस्यैवेत्यर्थः । कुतः ? प्रधानस्येति पदं आवर्तनीयम् । प्रधानस्य अभिधानेन पौर्णमासी अमावास्या इति प्रधानस्यैवाभिधानात् इत्यर्थः ।

## गुणाभिधानात् सर्वार्थमभिधानम् । १० ॥

अभिमर्शनं प्रधानस्यैवेति प्राप्ते सिद्धान्तयति । 'पौर्णमासीमभिमृशेत्, अमावास्यामभिमृशेत्' इति अभिधानं सर्वार्थं साङ्गप्रधानार्थम्, न प्रधानमात्रार्थम् । कुतः ? गुणाभिधानात् । 'पौर्णमासीम्, अमावास्याम्' इति द्वितीयाऽन्तेन साङ्गप्रधानानां संस्कार्यत्वमुक्त्वा अभिमृशेत् इति अभिमर्शनस्य गुणस्य अभिधानात् । तस्मात् अभिमर्शनं सर्वार्थमिति सिद्धान्तः । अत्र सप्तमनवमाभ्यां सूत्राभ्यां एकमधिकरणं तृतीयम्, अष्टमदशमाभ्यां च चतुर्थमधिकरणं इति विभागो द्रष्टव्यः । के.

## तथाऽवज्वलनम् । १०।१।१९।६० ॥

दर्भपिञ्जूलैः अवज्वलनं पुरोडाशस्य उपरिपाकार्थत्वात् क्रियते । सौर्ये चरौ तु तथा अभ्यूहवत् न कर्तव्यम् । चरौ हि उपरि पाको नावश्यकः । इति सिद्धान्तः । के.

## तथाऽवभृथः सोमात् (७।३।४।१३) इति न्यायः ।

सूत्रार्थस्तु अधुनैव भविष्यति । के. * 'तथाऽवभृथः सोमात्' इति सप्तमाधिकरणे वक्ष्यमाणसौमिकावभृथभावनाधर्मातिदेशाविरोधात् करणत्वेन वा अवभृथस्य अतिदेशायोगेऽपि स्वशब्देनोपदिष्टस्य स्वधर्मसंनिधापकत्वात् काम्यगुणाश्रयभूताग्निहोत्रादिवत् अतिदेशनिमित्तमभिप्रेत्य अवभृथनाम्नः अतिदेशकत्वोक्त्युपपत्तेः । सु. पृ. ९५५.

## तथाऽवभृथः सोमात् । ७।३।४।१३ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इति श्रूयते । अत्र दार्शपूर्णमासिके चोदकप्राप्ते अपां न्युत्सेके तुषनिष्कासविधिः, किंवा सौमिकादवभृथात् धर्मातिदेशः इति विचारे सिद्धान्तमाह । यथा षडहात् पृष्ठानामतिदेशः, तथा सोमात् अवभृथः अवभृथधर्मः वारुणप्राघासिके अवभृथे अवभृथनाम्ना अतिदिश्यते, अवभृथशब्दसामान्यात् ।

## प्रकृतेरिति चेत् । १४ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इत्यत्र प्रकृतेः दर्शपूर्णमासरूपायाः सकाशात् चोदकप्राप्ते अपां न्युत्सेके अवभृथाख्ये निष्कासतुषरूपस्य गुणस्य विधिः स्यात् इति पूर्वः पक्षः । इति चेत् ।

## न, भक्तित्वात् । १५ ॥

पूर्वपक्षिणा यदुक्तं तन्न, भक्तित्वात् । दर्शपूर्णमासयोः योऽयमपां न्युत्सेकः प्रणीतानिनयनम्, तत्र अवभृथत्वं भक्त्या उक्तम्, प्रशंसावादोऽयम् 'एष वै दर्शपूर्णमासयोरवभृथः' इति । नास्ति तु दर्शपूर्णमासयोरवभृथः । तस्मात् सौमिकादेवावभृथात् वारुणप्राघासिके अवभृथे केषांचिद्धर्माणामतिदेशः ।

लिङ्गदर्शनाच्च । १६ ॥

वरुणप्रघासगतावभृथे सौमिकावभृथात् धर्मातिदेशः इत्यत्र 'नायुर्दो जुहोति, न साम गायति, न वा गमनमन्त्रं जपति' इति केषांचित् सौमिकावभृथधर्माणां प्रतिषेधं ब्रुवन् इतरधर्माणां प्राप्तिं दर्शयति । एतस्मात् लिङ्ग-दर्शनात् अवभृथनाम्ना सौमिकादवभृथात् धर्मप्राप्तिः वारुणप्राघासिकेऽवभृथे इति सिद्धान्तः । चकारो हेतु-समुच्चयार्थः । के.

तथाऽऽज्यभागाग्निरपीति चेत् । १०।१।८। १६ ॥

दर्शपूर्णमासयोः आज्यभागाभ्यामग्नीषोमौ इज्येते । तत्र आज्यभागाग्निः आज्यभागदेवतारूपः अग्निः, तथा पूर्वाधिकरणोक्तोत्तमप्रयाजवत् संस्कारकर्म स्यात् । प्रधानाग्नेः संस्कारः आग्नेय आज्यभागः । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, व्यपदेशाद् देवताऽन्तरम् । १७ ॥

आग्नेय आज्यभागः न प्रधानाग्नेः संस्कारकर्म, किन्तु आरादुपकारकं कर्म । प्रधानाग्नेः सकाशात् आज्य-भागाग्निः देवताऽन्तरं स्यात् । व्यपदेशात् 'अग्निमग्न आवह, सोममावह, अग्निमावह' इति सोमेन व्यवहितं अग्निद्वयं व्यपदिशति । तस्मात् आग्नेय आज्यभागः आरादुपकारकः आज्यभागाग्निश्च प्रधानाग्नेर्देवताऽन्तरं इति सिद्धान्तः ।

समत्वाच्च । १८ ॥

दर्शपूर्णमासयोः अग्नीषोमौ इज्येते । तत्र सोमस्तावत् यागदेवता । अग्निरपि प्रधानाग्नेर्भिन्नः यागदेवतैव । समत्वात् यागदेवतात्वसाम्यात् । किंच आघारौ आज्य-भागौ इति आरादुपकारकाणि कर्मण्यभिहितानि । तद्वतः आग्नेय आज्यभागोऽपि आरादुपकारक एव स्यात् । आरादुपकारकत्वस्य समत्वात् । तस्मात् आज्यभागाग्निः प्रधानाग्नेर्भिन्नः आग्नेय आज्यभागश्च न संस्कारकर्म किन्तु आरादुपकारकः इति सिद्धान्तः । पूर्वसूत्रे व्यप-देशो लिङ्गमुक्तम्, अत्र सूत्रे समत्वं न्याय उक्तः । के.

* तथाऽऽह्वानमपीति चेत् (३।२।३।५) इत्यत्रा-धिकरणे इतिकरणस्य श्रुतित्वं निरस्तं शास्त्रदीपिका-यामु । बाल. पृ. ४६. * तथाऽऽह्वानमपीति चेत् । यथा ऐन्द्री अयथार्थे विनियुज्यते तथा आह्वानं हविष्कृ-न्मन्त्रोऽपि अयथाऽर्थे विनियुज्यते इति पूर्वपक्षसूत्रार्थः । तथाशब्दानुकृष्टस्य वचनात् इति तृतीयसूत्रावयवस्य श्रुतेः इत्यर्थः । सु. पृ. १०९२.

तथाऽऽह्वानमपीति चेत् । ३।२।३।५ ॥

'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति दर्शपूर्ण-मासयोः श्रूयते । अत्र हविष्कृदेहि इति अवघ्नन् हवि-ष्कृदेहि इति मन्त्रेण अवघातं कुर्वन् इत्यन्वयः, किंवा अवघ्नन् अवहननकाले हविष्कृदेहीति आह्वयति इत्य-न्वयः । शतृप्रत्ययः काललक्षणार्थः । एवं मन्त्रः हन्ति प्रति उपदिश्यते, अवघ्नन्निति कालं वा लक्षयति इति विचारे पूर्वपक्षमाह । यथा ऐन्द्री गार्हपत्यं प्रति उपदिश्यते तथा आह्वानमपि हविष्कृदेहि इति आह्वानमन्त्रोऽपि अवहननं प्रति उपदिश्यते । इति चेत् ।

न, कालविधिश्चोदितत्वात् । ६ ॥

पूर्वपक्षं निषिध्य सिद्धान्तमाह । नायं विधिः अवघाते मन्त्रविनियोजकः, किन्तु कालविधिः कालानु-वादपूर्वकः त्रिरभ्यासविधिरयम् । कालस्य मन्त्रस्य च चोदितत्वात् अर्थत एव प्राप्तत्वात् । इति कस्तूरिरङ्गा-चार्याः । न अवघाते मन्त्रविधिः, चोदितत्वात् त्रि-रभ्यासस्यैवात्र वाक्ये विधानात् । कालविधिरपि न । आह्वाने अवघातकालो न विधातव्यः अवहननकाले एव सहायाह्वानस्य अपेक्षितस्य प्राप्तत्वेन अर्थसिद्धत्वात् । इति कुतूहलम् । न अवहननार्थो मन्त्रः । नञः आवृत्त्या अवघ्नन्नित्यनेन अवहननकालं लक्षयित्वा काल-संबन्धविधिरपि न, कालसंबन्धस्य त्रिरभ्यासस्य च विधाने वाक्यभेदात् । हविष्कर्तुः अवहननकाले आह्वानस्य लोकतः चोदितत्वात् ज्ञातत्वाच्च त्रिरभ्यासमात्र-विधिः । इति सुबोधिनी ।

गुणाभावात् । ७ ॥

ननु यथा पत्नी हविः करोति, तथा अवहननक्रिया-ऽपि हविः करोति इति रूपादेव अवहनने मन्त्रे प्राप्ते केवलं त्रिरावृत्तिमेव वक्ष्यति 'हविष्कृदेहीति त्रिरवघ्नन् आह्वयति' इति वाक्यम् । इति चेन्न । एहि इति पर-

प्रेषणरूपमध्यमपुरुषस्य हविष्कृत् इतिसंबोधनस्य च अचेतने अवघाते असंभवेन मन्त्रस्य अवहनने असामर्थ्यात् । तस्मात् गुणाभावात् चेतनत्वस्य गुणस्य अवहनने अभावात् न अवहननमन्त्रोऽयम् ।

**लिङ्गाच्च । ८ ॥**

'वाग्वै हविष्कृत् वाचमेवैतदाह्वयति' इति स्त्रीलिङ्ग-शब्दवाच्यत्वात् लिङ्गादपि वाग्रूपतया हविष्कृत् स्तोतुं शक्या । तच्च मन्त्रस्य पत्न्याह्वानाङ्गत्वे घटते, न तु अवघातपरत्वे । ननु अवहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति क्रियेति । अत्र ब्रूमः । न नियोगतः अवहन्तेः स्त्रीलिङ्गः, पुंलिङ्गोऽपि अवघात इति, नपुंसकलिङ्गोऽपि कर्म इति । अपिच पत्न्याः स्वरूपेण सादृश्यमवहन्तेः पररूपेण शब्देन । तस्मात् पत्न्यां लिङ्गं अनुरूपतरं भवति । तस्मान्न अवहननमन्त्रः ।

**विधिकोपश्चोपदेशे स्यात् । ९ ॥**

'हविष्कृदेहीति त्रिरवघ्नन् आह्वयति' इत्यनेन मन्त्रस्य अवघाताङ्गतया उपदेशे सति 'अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति' 'अप हता यातुधाना इत्यवहन्ति' इति विधेः अन्यस्य विधेः कोपो विरोधः स्यात् । तत्र पक्षेऽभावात् नित्यवच्छ्रुतिरुपरुध्येत । तस्मात् अवघ्नन् इति काललक्षणार्थः, अवघातकाले हविष्कृदेहि इति मन्त्रेण पत्नीं त्रिराह्वयति इत्यर्थः । के.

**⌛ तथोत्तरस्यां ततौ तत्प्रकृतित्वात् । १०।४। १३।२५ ॥**

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति श्रूयते । तत्र सूर्यो देवता चोदनायां श्रुता । सूर्य आदित्यो भास्करः सविता दिवाकर इति सूर्याभिधानानि प्रसिद्धानि । सौर्ये चरौ च सर्वे निगदाः प्राकृताः चोदकप्राप्ताः । तेषु केन शब्देन देवतानिर्देशः कर्तव्यः इति विचारे सिद्धान्तमाह । उत्तरस्यां ततौ सौर्ये तत्प्रकृतित्वात् आग्नेयप्रकृतिकत्वात् तथा स्यात् चोदनागतसूर्यशब्दोच्चारणं स्यात् । इति सिद्धान्तः । ततिः 'तनु विस्तारे' विततिः विस्तारः विकृतिरित्यर्थः । के.

**⌛ तथोत्थानविसर्जने । ३।२।४।१० ॥**

'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' इति, 'व्रतं कृणुतेति वाचं विसृजति' इति च ज्योतिष्टोमे श्रूयते । अत्र उत्थाने वाग्विसर्जने च मन्त्रयोरुपदेशः, उत कालार्थः संयोगः इति विचारे 'अग्नीदग्नीन् विहर' इति मन्त्रेण उत्थातव्यम् । 'व्रतं कृणुत' इति मन्त्रेण वाग्विसर्गः कर्तव्यः इति पूर्वपक्षे सिद्धान्तं पूर्वाधिकरणातिदेशेनाह । यथा 'हविष्कृदेहि' इति मन्त्रस्य मुख्येऽर्थे आह्वाने विनियोगः, तथा अत्र 'अग्नीदग्नीन् विहर' इतिमन्त्रस्य मुख्ये अर्थे अग्निविहरणसंप्रैषे, 'व्रतं कृणुत' इतिमन्त्रस्य च व्रतकरणप्रैषे विनियोगः । उत्थानं च विसर्जनं च तयोः समाहारः तस्मिन् । उत्थाने उत्थानवाक्ये विसर्जने विसर्जनवाक्ये च श्रूयमाणो मन्त्रः मुख्येऽर्थे विनियुज्यते इत्यर्थः । उत्थानकाले 'अग्नीदग्नीन् विहर' इति प्रैषमाह, वाग्विसर्गकाले 'व्रतं कृणुत' इति प्रैषमाह । इति कालार्थः संयोगः इति सिद्धान्तः । के.

* तथोत्थानविसर्जने । यथा अवघातः, तथा उत्थानविसर्जने अपि पूर्वपक्षे मन्त्रप्रकाश्ये, सिद्धान्ते तु अप्रकाश्ये इत्येवमतिदेशः । नोत्थानविसर्जनाङ्गत्वेन अग्नीद्-व्रतमन्त्रो विधीयते, किन्तु अग्निविहरणे प्रेषणाङ्गत्वेन लिङ्गात् प्राप्तस्य अग्नीन्मन्त्रस्य उत्थानकालत्वम्, वाग्यमनियमसमाप्त्यङ्गत्वेन च प्राप्तस्य वाग्विसर्गस्य व्रतभक्षणप्रेषणाङ्गभूतमन्त्रोच्चारणकालत्वं विधीयते । विधिमन्त्रपाठक्रमाभ्यां च उत्थानव्रतमन्त्रयोः विशिष्टकालकत्वेन अवगतत्वरूपात् चोदितत्वात् अग्नीन्मन्त्रवाग्विसर्गलक्षकत्वशक्तिरस्ति इत्येवं सिद्धान्तसूत्रयोजना । पूर्वपक्षे श्रुत्या गौणे मन्त्रविनियोगः, सिद्धान्ते लिङ्गान्मुख्ये । सु. पृ. १०९७.

* **तथोत्पत्तिरितरेषां समत्वात् । ७।३।१२।३२ ॥** यदपि वेदविहिताग्निकार्यसर्वार्थत्वं प्रकृतिविकृत्योः, तदपि 'अग्निमुपनिधाय स्तुवते' इत्युदाहृत्य 'विशये० न वैदिक० तथोत्पत्ति०' इति निर्णीतत्वात् अविचार्यम् । वा. ३।७।१९।३९.

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् । १०।७।१८।६१ ॥**

सोमापौष्णपशौ 'औदुम्बरो यूपो भवति' इति श्रूयते। तत्र एकार्थविकारे एकार्थश्चासौ विकारश्च एकार्थविकारः, औदुम्बरस्य खादिरेण सह एकः समानोऽर्थः फलं पशुबन्धनम्, विकारश्च खादिरादिबाधकश्च औदुम्बरः। तस्मिन् एकार्थविकारे तथा पूर्वाधिकरणे यथा प्राकृतस्य द्रव्यदेवतस्य अप्रवृत्तिः, तद्वत् सोमापौष्णे औदुम्बरे प्रवृत्ते सति प्राकृतस्य खादिरादेः अप्रवृत्तिः न प्रवृत्तिः। प्रवृत्तौ हि यस्मात् विकल्पः स्यात् चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च। न चैतन्न्याय्यम्। तस्मात् प्राकृतस्य न प्रवृत्तिः। इति सिद्धान्तः।

**यावच्छ्रुतीति चेत्। ६२ ॥**

पूर्वपक्षी शङ्कते। यावच्छ्रुति स्यात्। 'औदुम्बरो यूपो भवति' इति वैकृती श्रुतिः, 'प्रकृतिवत्' इति च चोदकश्रुतिः। इति यावत्यः श्रुतयः, तावन्तो यूपाः इति अव्ययीभावः समासः। तथा च श्रुतिद्वयानुसारेण औदुम्बरखादिरयोः समुच्चयः स्यात् उभयस्मिन् सह नियुज्यतां पशुः। इति चेत्।

**न, प्रकृतावशब्दत्वात्। ६३ ॥**

सिद्धान्ती आह। नैतदेवम्। प्रकृतौ औदुम्बरस्य अशब्दत्वात्, विकृतौ च खादिरस्य अशब्दत्वात्। न समुच्चयः। अविद्यमानो विधायकः शब्दो यस्य तत् अशब्दम्, तादृशत्वात् विधायकशब्दाभावात्। तस्मात् वैकृतेन औदुम्बरेण प्राकृतस्य यूपद्रव्यस्य बाधः। के.

**तथा कामोऽर्थसंयोगात्। ३।८।५।१३ ॥**

ज्योतिष्टोमे 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति श्रूयते। पर्जन्यवर्षणेच्छायां सदोनामको मण्डपः शाला नीचैः कर्तव्या इति तत्रोक्तम्। सोऽयं वृष्टेः कामः ऋत्विजः स्यात्, कामयेत इत्यस्य कर्ता ऋत्विक् स्यात् आध्वर्यवसमाख्यानात्। अध्वर्युवेदे हि तदुक्तम्। इति उत्सूत्रे पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रमिदं अतिदेशकरम्। तथा तपोवत् कामोऽपि न ऋत्विग्गतः किन्तु याजमान एव स्यात्। कुतः? अर्थसंयोगात् अर्थस्य फलस्य यजमानेन संबन्धात्। तथा च यदि कामयेत यजमानः, ततः अध्वर्युः नीचैर्मिनुयात् इति वैयधिकरण्येनापि उक्तश्रुतौ एकवाक्यत्वम्। स्वामिनि कामयमाने यदि अध्वर्युः स्वाम्यर्थं कामयेत इति सामानाधिकरण्येनापि एकवाक्यता संभवति। तस्मात् कामोऽपि याजमान एवेति सिद्धान्तः।

अत्र सुधा— सदोमानस्य आध्वर्यवत्वेऽपि तदाश्रितगुणावच्छिन्नायाः भावनायाः स्वाम्युपकारार्थसदोमानाश्रितत्वसामर्थ्याख्यात् लिङ्गात् स्वाम्युपकारार्थत्वावगतेः तस्यैव कामित्वावगमात् समाख्यायाश्च प्रधानभूतकर्तृनियामकत्वायोगात् न भावनाकारी नियम्यते इति।

**व्यपदेशादितरेषां स्यात्। १४ ॥**

ज्योतिष्टोमे 'यदि कामयेत' इत्यादिवाक्योक्तः कामः याजमानः इति पूर्वसूत्रेण सिद्धान्ते उक्ते क्वचित् तदपवादः अनेन सूत्रेण उच्यते। 'उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' इति यजमानात् पृथक् 'आत्मने' इति पदेन ऋत्विजो व्यपदेशः। तत्र तादृशात् व्यपदेशात् इतरेषां यजमानादन्येषां ऋत्विजामेव कामः स्यात्। तादृशव्यपदेशाभावे तु याजमान एव कामः इति सिद्धान्तः। के.

* 'तथा कामः' इत्यधिकरणे अङ्गानामृत्विक्कर्तृकत्वं न चिन्तितं किन्तु तदाश्रितोपास्तीनामित्यर्थः। कल्पतरुः ३।४।१३।४४ ब्रसू. * तथाकामाधिकरणम्। आशीरधिकरणम्। काण्डाधिकरणं द्रष्टव्यम्। भा. ३।८।५।१३–१४.

**तथा च लिङ्गम्। ४।१।६।१७॥**

इदं सूत्रं पूर्वाधिकरणशेषत्वेन व्याख्याय अधिकरणान्तरत्वेनापि भाष्ये व्याख्यातम्। तत्र अधिकरणान्तरत्वेन अत्र व्याख्यायते। ग्रहैकत्वाधिकरणातिदेशोऽयम्। चशब्दः शङ्कानिरासार्थः। तथा एकत्ववत् लिङ्गमपि विवक्षितमेव। 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते' एवं ग्रीष्मे शरदि चेति तिस्रो गा विधाय वाक्यशेषे 'गर्भिण्यो भवन्ति' इत्युक्तम्। गर्भश्च स्त्रीत्वलिङ्गम्। तथा 'अश्व ऋषभो वृष्णिर्बस्तः पुरुषस्ते प्राजापत्याः'

इति विधाय वाक्यशेषे 'मुष्करा भवन्ति सेन्द्रियत्वाय' इत्युक्तम्। मुष्कश्च पुंस्त्वलिङ्गम्। ('ऊष—सुषि—मुष्क—मधो रः' पा० ५।२।१०७ मत्वर्थीयो रः। ऊषरम् इ०। 'मुष्कः अण्डः मुष्करः' इति कौमुदी। मधोः रः इति पदच्छेदः। मधुरः।) तेन तत्र स्त्रीत्वं पुंस्त्वं च विवक्षितमिति निश्चयः। के.

**तथा च सोमचमसः। १०।३।१९।६८॥**

ऋतपेये श्रूयते 'औदुम्बरः सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः' इति। अयं सोमचमसः ब्रह्मसंयोगात् ब्रह्मभागस्य निवर्तकः, न कृत्स्नक्रतुदक्षिणायाः। तथा यथा 'स्रजमुद्गात्रे' इति उद्गातृसंयोगात् स्रक् उद्गातृभागमात्रस्य निवर्तिका तद्वत्। इति पूर्वः पक्षः।

**सर्वविकारो वा, क्रत्वर्थे प्रतिषेधात् पशूनाम्। ६९॥**

ऋतपेये दक्षिणात्वेन श्रूयमाणः सोमचमसः न केवलं ब्रह्मभागस्य निवर्तकः इति वाशब्देन पूर्वपक्षं व्यावर्तयति। सोमचमसः सर्वविकारः कृत्स्नायाः क्रतुदक्षिणायाः निवर्तकः। क्रत्वर्थे दाने पशूनां प्रतिषेधात् लिङ्गात्। एवमाम्नायते 'ऋतं वै सोमः अनृतं पशवः, यत् पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा'। अत्र पशुदानमपोह्य सोमचमसो विधीयते। सोमचमसदानेन पशवो न दीयन्ते इति गम्यते। ब्रह्मदानमात्रस्य निवर्तकत्वे सति अन्येभ्यः पशवो दीयेरन् तेन अनृतं स्यात्। तस्मात् कृत्स्नायाः निवर्तकः।

**ब्रह्मदानेऽविशिष्टमिति चेत्। ७०॥**

ऋतपेये 'ऋतं वै सोमः पशवोऽनृतम्, यत् पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा' इत्यर्थवादे 'यत् ब्रह्मणे पशून् दद्यात्' इति पशूनां ब्रह्मदाने स्वीकृतेऽपि अविशिष्टं पशुप्रतिषेधानुवादः समान एव। तस्मात् ब्रह्मणे पशवो न देयाः किन्तु सोमचमस एव इति सोमचमसः ब्रह्मभागव्यावर्तकः इति स्वीकारेऽपि पशुप्रतिषेधोपपत्तेः। सोमचमसः ब्रह्मभागस्यैव निवर्तकः न तु कृत्स्नदक्षिणायाः इति चेत् पूर्वपक्षी ब्रूयात्।

**उत्सर्गस्य क्रत्वर्थत्वात्, प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात्। ७१॥**

क्रतौ माध्यंदिने सवने बर्हिषि यावदीयते सा सर्वा एका दक्षिणा। 'सोमचमसो दक्षिणा' इत्युक्तत्वात् ऋतपेये सा सर्वा दक्षिणा सोमचमस एव। तथाच उत्सर्गस्य दानस्य सोमचमसदानस्य क्रत्वर्थत्वात् सर्वक्रतुदक्षिणादानार्थत्वात् सोमचमसः कृत्स्नक्रतुदक्षिणाया निवर्तको भवति। यदि तु ब्रह्मणोऽन्येभ्यः पशवो दीयेरन् तदा 'यत् पशून् दद्यात्, सोऽनृतं कुर्यात्' इति प्रतिषिद्धस्य पशुदानस्य कर्म स्यात् तस्मात्तन्न कर्तव्यम्। किञ्च यो ब्रह्मभागो न सा दक्षिणा, किन्तु दक्षिणावयवः कश्चित्। अवयवे निविशमानो दक्षिणाशब्दो गौणः स्यात्। न च स गौणोऽर्थः दक्षिणानां प्रयोजनं स्यात्। सोमचमसस्य प्रयोजनं दक्षिणानिवृत्तिः। सर्वेषां ऋत्विजामानमनं दक्षिणानां प्रयोजनं न ब्रह्ममात्रानमनम्। तस्मात् सोमचमसः कृत्स्नक्रतुदक्षिणाया निवर्तकः न तु ब्रह्मभागमात्रस्य। इति सिद्धान्तः।

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात्। ७२॥**

पूर्वपक्षस्य प्रयोजनमाह। यदि तु सोमचमसः ब्रह्मणः भागस्यैव निवर्तकः स्यात्, तदा तदूनं तेन ब्रह्मभागेन ऊनं न्यूनं दक्षिणाद्रव्यं तद्विकारः सर्वक्रतुदक्षिणायाः विकारः बाधकः स्यात् ब्रह्मभागं वर्जयित्वा इतरेभ्य ऋत्विग्भ्यः इतरा सर्वा दक्षिणा दातव्या स्यात्। ब्रह्मणे तु सोमचमसमात्रम्।

**सर्वं वा पुरुषापनयात्, तासां क्रतुप्रधानत्वात्। ७३॥**

सिद्धान्तप्रयोजनमाह। सर्वं वा क्रतुदाक्षिण्यं सोमचमसेन निवर्त्यते, पुरुषापनयात् सर्वेभ्यः पुरुषेभ्यः दक्षिणायाः अपनयात्। कुतः? तासां दक्षिणानां सर्वेषामृत्विजां आनमनेन क्रतुप्रधानत्वात् क्रतुसाधकत्वात्। आनता हि ऋत्विजः क्रतुं साधयन्ति। तस्मात् सर्वदक्षिणास्थाने एकः सोमचमस एव देयः। सोऽपि च ब्रह्मणे एव नान्यस्मै कस्मैचन। सर्वानतिस्तु लौकिक-

दानेन यजमानेन कर्तव्या । इदं सूत्रद्वयमधिकरणान्तरत्वेनापि अग्रे व्याख्यास्यते य–अक्षरप्रकरणे । के.

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् । ४।२।१०।२५ ॥

अधिकरणातिदेशोऽयम् । 'वायव्यं श्वेतमालभेत' इत्यादौ वायव्यपश्वादिरूपेषु द्रव्येषु 'श्वेतम्' इत्यादिगुणश्रुतिः गुणस्य प्रतिपादिका श्रुतिः नियमार्था । वायव्यपशौ श्वेते श्वेतभिन्ने च गुणे प्राप्ते श्वेतश्रुतिः श्वेतं गुणं नियमयति । उत्पत्तिसंयोगात् उत्पत्तिविधावेव श्वेतगुणस्य विशेषणतया वायव्येन पशुना संबन्धात् संबद्धतया ज्ञानात् । 'उत्पद्यते कर्म अनेन इति बाहुलकात् करणे क्तिन् । तया उत्पत्त्या क्रियोत्पादकद्रव्येण गुणानां तत्परिच्छेदकतया संयोगात्' इति कुतूहलम् । श्वेतगुणः अनूद्यते इति पूर्वः पक्षः, विधिरिति सिद्धान्तः । के.

तथा निर्मन्थ्ये । १।४।९।१२ ॥

तथा प्रोक्षणीशब्दवत् निर्मन्थ्ये निर्मन्थ्यशब्देऽपि यौगिकत्वं ज्ञेयम् । निर्मथ्यते निर्मथ्य उत्पाद्यते सोऽग्निः निर्मन्थ्यः इति योगः । तथा च 'निर्मन्थ्येनेष्टकाः पचन्ति' इति निर्मन्थ्यशब्दः न संस्कारनिमित्तकः न जातिशब्दः, किन्तु यौगिक इति सिद्धान्तः । के.

तथा निर्मन्थ्ये । १।४।१०।१२ ॥

'निर्मन्थ्येनेष्टकाः पचन्ति' इति संस्कृते दर्शनात् संस्कारशब्दो निर्मन्थ्यः इति । असंस्कृतेऽपि दृश्यते 'निर्मन्थ्यमानय पक्ष्यामहे' इति । निर्मन्थनयोगात् पूर्ववत् यौगिकत्वमिति स्थितम् । अत्रायं पूर्वपक्षिणोऽभिसंधिः । निर्मन्थ्यशब्दोऽयं याज्ञिकैः संस्कृते प्रयुज्यते । न चायं संस्कारवचनः, असंस्कृतेऽपि क्वचिद्दर्शनात् । नापि यौगिकः । निर्मन्थनभवो हि निर्मन्थ्यः । स च नवनीतादावपि अविशिष्टः, तेषामपि निर्मन्थनभवत्वात् । न चात्र प्रोक्षणीतुल्यत्वम् । तत्र योगस्य घृतादिसाधारण्येऽपि ङीबन्तत्वात् प्रोक्षणीशब्दस्य स्त्रीलिङ्गनित्यबहुवचनान्ताप्शब्दसामानाधिकरण्ययोग्यतया भवतु तदर्थविषयत्वम् । इह तु तृतीयान्तस्य 'निर्मन्थ्येन' इति पदस्य अग्निनवनीतादिसाधारणत्वात् नाग्निवचनत्वनिर्णयः संभवति इति जातिवचनत्वमेव । इत्येवं प्राप्तेऽभिधीयते । भवेदेवं यदि अत्राग्निप्रतीतिरन्यतो न भवेत् । एवं हि श्रूयते 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । तेन योगस्य साधारण्येऽपि पाकसमभिव्याहारात् अत्रापि अग्निविशेषप्राप्तौ यौगिकत्वमेव । प्रयोजनं– संस्कारवचनत्वे संस्कृतेनाग्निना इष्टकाः पक्तव्याः । जातिवचनत्वे अग्निमात्रेण । यौगिकत्वे तु अचिरनिर्मथितेन । अत्र यद्यपि सूर्यकान्तादिनिवर्तकतयाऽपि निर्मन्थ्यशब्दस्यार्थवत्त्वात् नाचिरनिर्मथिताग्निलाभः, तथापि पाकाक्षेपप्राप्तेऽग्नौ मथनस्य पाकाङ्गत्वेन लोहितोष्णीषवत् विधानेन अङ्गानां मुख्यदेशकालकर्तृकत्वात् अचिरनिर्मथितप्राप्तिरिति । तदुक्तम् 'पाकेनाग्नेरुपात्तत्वात् तद्विशेषपरा (विशेषणपरा इति मूले पाठः) श्रुतिः । तच्च पाकाङ्गभूतत्वात् तद्देशादौ करिष्यते ॥' (वा. पृ. ३४५) इति । सूत्रे तु– यथा प्रोक्षणीशब्दस्य यौगिकत्वम्, तथा निर्मन्थ्येऽपीत्यर्थः । तौता.

'तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाऽङ्गता ॥' इति न्यायात् चमसैकत्वं न चमसस्याङ्गं पश्वेकत्वमिव पशोः । तेन चमसाधर्मत्वात् न चमसैकत्वं चमसस्थानापन्नेऽपि गोदोहने प्राप्नोति । बाल. पृ. १६९.

तथाप्राप्त्यनुवादः इति न्यायः ॥ (तथापदं प्राप्तिपदेन समस्तम् ।) न च यत्रतत्र स्थितस्यापि मन्त्रस्य विधिप्रापितानुष्ठेयप्रकाशकतया तदनुवादकरूपतैव तदुपसंहारत्वम्, तथात्वे 'तथाप्राप्त्यनुवादः' इति न्यायेन पुरोवादानुवादयोः पुरोवादस्य प्रबलतया उपक्रमस्य प्राबल्यमापतेत् । (अत्र यथाप्राप्त्यनुवादः इति पाठः स्यादिति भाति । के.) । पराक्रमः ४३।२.

* तथा फलाभावात् । १।२।१।३ ॥ यथाभूतं मुखशोभादि अनन्तरफलत्वेन कीर्त्यते तथाभूतस्य अभावात् ('शोभतेऽस्य मुखं य एवं वेद' इत्यस्याः श्रुतेः) आनर्थक्यं इति सूत्रयोजना । सु. पृ. १५.

तथा भक्ष–प्रैष–आच्छादन–संज्ञप्तहोम–द्वेषम् । ६।८।८।२८॥

अधिकरणातिदेशोऽयम् । यथा ज्योतिष्टोमे धनवताऽपि धनयाचना स्वीयसोमवताऽपि च सोमक्रयणं कर्तव्यम्,

तथा भक्षादिकमपि क्रत्वर्थत्वात् नियतं कर्तव्यम् । तत्र ज्योतिष्टोमे दीक्षासु 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति विशिष्टं भक्षणमुक्तम् । यस्यापि अपरं भोजनं विद्यते, सोऽपि क्रत्वर्थत्वात् पयआद्येव भक्षयेत् । तथा दर्शपूर्णमासयोः 'प्रोक्षणीरासादय इध्मा-बर्हिरुपसादय स्रुवं च स्रुचश्च समृड्ढि पत्नीं संनह्य आज्येन उदेहि' इति प्रैषम्, प्रैषार्थं जानतोऽपि कृते उच्चार्यः । वाजपेये यस्य कार्पाससूत्रमयं वासो विद्यते सोऽपि आच्छादनं दर्भमयं वासः परिदधीत । पशौ यस्य पशुः शामित्रे शब्दं न कुर्यात् चरणैर्वा न हन्यात् तस्यापि 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥' इति मन्त्रेण संज्ञप्तहोमं जुहुयात् । तथा यो न द्वेष्टि कंचन, यं च न द्वेष्टि कश्चन, सोऽपि 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति द्वेषमन्त्रं ब्रूयात् क्रत्वर्थत्वात् । इति सिद्धान्तः । भक्षश्च प्रैषश्च आच्छादनं च संज्ञप्तहोमश्च द्वेषश्च ( द्वेषमन्त्रश्च ) तेषां समाहारः । नपुंसकत्वमेकवद्भावश्च । के.

* 'तथा भक्ष०' इत्यधिकरणे मायुःकरणाद्य-भावेऽपि 'यत् पशुर्मायुरकृत०' इतिमन्त्रेण संज्ञप्तहोमः नित्य एव कार्यः इत्युक्तम् । वाजसनेयिनां तु मते पशुना मायुःकरणे एव ( दीनशब्दकरणे एव ) नैमित्तिक एव होम इति । बाल. पृ. ६५.

* तथा युक्तं चानीप्सितम् । ( पा० १।४।५० तथा ईप्सिततमवत् क्रियया युक्तं अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । 'ग्रामं गच्छन् तृणं स्पृशति' ) इति स्मृतिस्तु लाक्षणिकप्रयोगसाधुत्वान्वाख्यानार्था । अन्यथा लाघवात् 'व्याप्यं कर्म' इति स्मरणापत्तिः । सु. पृ. ६२९.

## तथा यूपस्य वेदिः । ३।७।६।१३ ॥

ज्योतिष्टोमे अग्नीषोमीये पशौ यूपो यदा निखातव्यो भवति तत्रोक्तम् 'अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि' इति । यूपावटस्य अर्धो भागः महावेद्याः अन्तर्भागे, अर्धो भागश्च बहिर्भागे यथा स्यात् तथा खातव्यः, तत्र च यूपो निखातव्यः इति वाक्यस्य यथाश्रुतोऽर्थः । तत्र किं यूपाङ्गभावेन वेदेरुपदेशोऽयं किंवा देशलक्षणार्थं उपदेशः इति विचारे पूर्वः पक्षः । यथा दीक्षादक्षिणं प्रधानस्य इति पूर्वाधिकरणे उक्तम्, तथा वेदिर्महावेदिः यूपस्य अङ्गं वेदितव्यम् । तथाच यूपाङ्गभावेन वेदे-रुपदेशोऽयमिति पूर्वः पक्षः ।

## देशमात्रं वाऽशिष्येणैकवाक्यत्वात् । १४ ॥

पूर्वपक्षं निरस्य 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति उभाभ्यामपि वाक्यांशाभ्यां मध्यदेशो लक्ष्यते नाङ्गाङ्गिभावो लक्ष्यते इति सिद्धान्तकथनार्थं सूत्रमिदम् । अत्र मात्रशब्दः अवधारणार्थः । वाशब्दः पूर्वपक्ष-व्यावृत्त्यर्थः । शासु अनुशिष्टौ इति कर्मणि यप्रत्यये शिष्यते इति शिष्यं इति शिष्यपदं निष्पन्नम् । न शिष्यं विधेयं यस्य तत् अशिष्यम् 'अर्धं बहिर्वेदि' इति वाक्यम् । तेन अशिष्येण सह 'अर्धमन्तर्वेदि' इत्यस्य एकवाक्य-त्वात् एकवाक्यत्वसंभवात् मध्यदेशविधानमेतत् इति गम्यते । अन्तर्बहिर्देशयोर्द्वयोरपि विधौ वाक्यभेदः स्यात् । संभवति चैकवाक्यत्वे वाक्यभेदस्य अन्याय्य-त्वम् । तथा च संधिदेशविधानमेतत् । अशिष्येण इति सूत्रपदं गृहीत्वा व्याख्यानमिदम् । किंवा शिष्येण इत्येवं पदच्छेदः । शिष्येण शासितव्येन विधेयेन देशेन 'अर्ध-मन्तर्वेदि, अर्धं बहिर्वेदि' इत्यस्य एकवाक्यत्वं भवति । तस्मात् देशलक्षणा इति व्याख्येयम् ।

अत्र सुधा—मातव्यदेशस्य लक्षणीयत्वात् कृत्स्नस्य च यूपस्य मातव्यत्वात् अन्तर्देशमात्रे बहिर्देशमात्रे वा कृत्स्नस्य अमेयत्वात् शब्दद्वयेन कृत्स्नमातव्यदेशस्य लक्षणा इति देशमात्रपदार्थः । पशुबन्धनकृतार्थतया अन्यार्थत्वेन अशिष्येण यूपेन सह वेद्याः, कर्त्रादिधारण-कृतार्थतया च अन्यार्थत्वेन अशिष्यया वेद्या सह यूपस्य एकवाक्योपादानावगतात् संयोगात् इतिसिद्धान्तहेतूक्त्यर्थः अशिष्येणेति सूत्रावयवः । अत्र च उत्तराधिकरण-सिद्धान्तसूत्रे वक्ष्यमाणः कृतार्थसंयोगाख्यः देशलक्षणहेतुः अत्रापि योजनीयः । 'दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत' इत्यादिषु कृतार्थसंयोगेषु कैमर्थ्यानाकाङ्क्षणेन अङ्गोपदेशा-योगात् कालोपदेशवत् अत्र देशोपलक्षणमपि युक्तम् । विधित्वस्य अनुवादत्वस्य च अनुपपत्तेः अवाच्येन 'अर्धं बहिर्वेदि' इत्यनेन एकवाक्यत्वस्य प्रतीयमानस्य अयोग-प्रसङ्गात् इति अकारप्रश्लेषेण अशिष्येण इति सूत्रावयव-

व्याख्यार्थे अथेत्यादि भाष्यम् । पक्षद्वयदोषसाम्यनिरासार्थे देशलक्षणायां शिष्येण एकवाक्यत्वात् इति अकारप्रश्लेष-शून्यसूत्रावयवव्याख्याऽर्थे 'अर्धमन्तर्वेदि' इत्यादि भाष्यं इति । के.

* 'तथा यूपस्य वेदिः' इत्यधिकरणे 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति समुदायेन देशविशेषो लक्ष्यते इति भाष्यवार्तिकादिषु ध्वनितम् । ( यूपवेदिन्यायः । ) कु. १।२।१।७.

**तथा व्रतमुपेतत्वात् । १२।१।११।२० ॥**

सोमे दीक्षणीयाऽऽदिषु दार्शपूर्णमासिकं व्रतं चोदकप्राप्तं न कर्तव्यं तथा अग्न्यन्वाधानवत् । उपेतत्वात् दीक्षार्थंमुपेतमेव । उपेतस्य अनपवृक्तस्य पुनरुपादानं न शक्यम् । तस्मान्नास्ति पृथक् व्रतं इति सिद्धान्तः ।

**विप्रतिषेधाच्च । २१ ॥**

सोमे दीक्षणीयाऽऽदिषु दार्शिकं व्रतं न कर्तव्यम् । सोमार्थस्य व्रतस्य उपेतत्वात् । पुनरुपादाने सति 'अग्ने व्रतपते व्रतं चरिष्यामि' इति चरतो वचनं विप्रतिषिद्धम् । तथा च मन्त्रविप्रतिषेधात् पुनर्व्रतं न कर्तव्यम् ।

**सत्यवदिति चेत् । २२ ॥**

पूर्वपक्षी शङ्कते । सत्यवत् यथा सत्यवचनं व्रतं पुरुषधर्मत्वात् अनुवर्तमानमपि दर्शे पुनरुपेयते तद्वत् प्रायणीयाऽऽदिषु स्यात् इति चेत् ।

**न, संयोगपृथक्त्वात् । २३ ॥**

सिद्धान्ती दृष्टान्तवैषम्यमाह— न तेनैतत् तुल्यम् । संयोगपृथक्त्वात् । तत्र पुरुषसंयोगः कर्मसंयोगश्च पृथक् भवति इति पुनरुपेयते । इह तु यत् सोमार्थं तदेव इतरत्र प्रसङ्गात् कार्यं साधयति । तस्मात् सत्यवत् इति दृष्टान्तो विषमः । ततश्च पुनर्व्रतं नानुष्ठेयं इति सिद्धान्तः । के.

**तथा स्यादध्वरकल्पायां, विशेषस्यैककालत्वात् । ११।२।४।२० ॥**

अध्वरकल्पायां नाम इष्टौ तथा अग्नीषोमीये पशौ इव अङ्गानां प्रयोगः तन्त्रेण स्यात् । विशेषस्य अङ्गविशेषस्य निर्वापस्य एककालत्वात् 'पुरा वाचः प्रवदितोः निर्वपेत्' इति एककाले श्रवणात् । तस्मात् सर्वेषामङ्गानां तन्त्रं इति पूर्वः पक्षः ।

**इष्टिरिति चैकवच्छ्रुतिः । २१ ॥**

अध्वरकल्पायां यद्यपि प्रातः मध्यंदिने सायं इति यागत्रयम्, तथापि 'सैषाऽध्वरकल्पा नामेष्टिः' इति एकवत् एकत्वेन श्रुतिः श्रवणं भवति । तत् अङ्गानां तन्त्रे उपपद्यते । तस्मात् तन्त्रम् । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**अपिवा कर्मपृथक्त्वात्, तेषां च तन्त्रविधानात्, साङ्गानामुपदेशः स्यात् । २२ ॥**

सिद्धान्तयति । अपिवाशब्देन पक्षव्यावृत्तिः । आग्नावैष्णवसारस्वतादीनां कर्मणां पृथक्त्वात्, तेषां च कर्मणां प्रातः मध्यंदिने सायं इति नानाकालेषु तन्त्रस्य अङ्गकलापस्य विधानात् साङ्गानामेव त्रयाणां यागानां उपदेशः स्यात् । तस्मान्न तन्त्रम् ।

समानानुपूर्वीकयोः षोडशद्वाविंशयोः सूत्रयोः समान एवाक्षरार्थः । विषयभेदात्तु भेदः ।

**प्रथमस्य वा कालवचनम् । २३ ॥**

यदुक्तं विशेषस्यैककालत्वात् इति तत्राह । प्रथमस्य प्रातःकालीनस्य कर्मणः यो निर्वापः, तस्यैतत् कालवचनं 'पुरा वाचः प्रवदितोर्निर्वपेत्' इति । न द्वितीयतृतीययोर्यागयोः । तस्मात् तन्त्रभेदः सिद्धान्तः ।

**फलैकत्वादिष्टिशब्दो यथाऽन्यत्र । २४ ॥**

यदुक्तं 'इष्टिरिति' इति तत्राह । इष्टिशब्दः एकवचनान्तः फलैकत्वात्, फलैकत्वेन कर्मैकत्वात् । यथा अन्यत्र सर्वपृष्ठेष्टिः मृगारेष्टिः इत्यादौ । यथा वा राजसूय इति । तस्मात् अध्वरकल्पायां प्रातरादिकालभेदेन कर्तव्यानां त्रयाणांत्रयाणामर्थे अङ्गानां भेदेनानुष्ठानम् । इति सिद्धान्तः । के.

**तथा स्वामिनः फलसमवायात्, फलस्य कर्मयोगित्वात् । ६।३।७।२१ ॥**

यथा देवताग्निशब्दक्रियाणां न प्रतिनिधिः तथा स्वामिनः यजमानस्यापि न प्रतिनिधिः । फलसमवायात् स्वामिन एव कर्मणः फलेन समवायात् संबन्धात्, फलस्य कर्मयोगित्वात् फलं कर्मणा युज्यते । यः कर्म

कुर्यात् तस्य फलम् । यदि च यजमानस्य फलसंबन्धः, तदा यजमानेनैव सर्वं याजमानं कर्तव्यम् । न प्रतिनिधिना । तस्मात् स्वामिनो न प्रतिनिधिः इति सिद्धान्तः । अत्र कुतूहलम् । वस्तुतस्तु प्रवासविधिसामर्थ्यादेव प्रवसति यजमाने भवति अन्यस्य प्रतिनिधानम् । हविस्त्यागो हि स्वाहाकारान्ते वषट्कारान्ते वा । तत्काले च हविस्त्यागो न प्रवसता यजमानेन स्वयं कर्तुं शक्यः । विदेशस्थस्य तस्य तत्कालज्ञानासंभवात् । अतः अन्येनैव कारयितव्यः । प्रतिनिधीयमानश्च यजमानाज्ञया शक्नोति हविस्त्यक्तुम् 'अग्नय इदं न मद्यजमानस्य' इति । यस्य च द्रव्यमुत्सृज्यते तस्यैव फलसंयोगः इति न प्रतिनिधीयमानस्य स्वामित्वमापाद्यम् । तदुक्तमभियुक्तैः 'संनिधौ यजमानः स्यादुद्देशत्यागकारकः । असंनिधौ तु पत्नी स्यात् पुत्रादिर्वा तदाज्ञया ॥' इति । बोधायनश्चाह 'पुत्रो वाऽन्तेवासी वा योऽलं कर्मणे स्यात् तं तत्र प्रेष्येत्' इति । अधिकरणं तु कार्यान्तरव्यापृते यजमाने वेदितव्यमिति । अत एव टुप्टीकाऽपि ( अस्मिन्नेव सूत्रे ) 'यदा द्रव्यपरित्यागं कृत्वा अन्यत्र व्यापृतो भवति, तत्र यानि क्रत्वर्थानि, तेषु अध्वर्युरेव प्रतिनिधित्वेन कर्ता ।' इति । के.

* तद्धितः देवताविधाने चतुर्थीतः प्रबलः 'देवतासंगतिः श्रुत्या तद्धितान्तात् प्रतीयते । चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः ॥' वैश्वदेवी इति हि श्रुत्यैव देवतासंबन्धः प्रतीयते, इतरत्र तु वाजिभ्यो वाजिनं इति पदद्वयसामीप्याद् गम्यते । वा. २।२।९।२३ पृ. ५३३. * तद्धितः साकाङ्क्षात् नोत्पद्यते । भा. ५।४।६।२१. * तद्धितेन चतुर्थी बाध्यते देवताविधौ, यथा वैश्वदेवी इति तद्धितेन आमिक्षाया विश्वैर्देवैः संबन्धं बोधयता वाजिभ्य इति चतुर्थी वाजिनस्य विश्वैर्देवैः संबन्धं बोधयन्ती । बाल. पृ. १४४. * 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते । देवतासंगतिस्तत्र दुर्बलं तु परंपरम् ॥' वा. २।२।९।२३ पृ. ५३३. * तद्धितेन देवताऽन्वयसंभवे तद्धितचतुर्थीमन्त्रवर्णानां देवताऽन्वयप्रमाणानां मध्ये जघन्येन मन्त्रवर्णेन देवताकल्पनं युक्तम् । सु. पृ. ४६१. * तद्धितेन देवतानिर्देशः इष्टिप्रकृतिलिङ्गम् । बाल. पृ. ११९. * तद्धितेन देवताविधिः अपूर्वविधिः । बाल. पृ. २२, * तद्धितेन द्वितीया बाध्यते । मृग्यमुदाहरणम् । पृ. १४४. * देवतातद्धितेनैव देवतोद्देशपूर्वकद्रव्यत्यागरूपोत्सर्गविधिसिद्धिः 'तद्गुणास्तु विधीयेरन्' ( १।४।६।९ ) इत्यनेन न्यायेन । सु. पृ. ९४१, * तद्धितस्य मन्त्रवर्णाद्बलीयस्त्वं ( देवताविधौ ) । पृ. ४७२, * तद्धितस्य संनिहितत्वमात्राभिधाने न शक्तिः कल्प्या, संनिहितत्वस्य प्रकृत्यर्थेन अविशेषणात्, निर्विशेषणस्य च सर्वपदार्थसाधारण्येन अनुपयोगितया अनभिधेयत्वात्, अपत्यादिविशेषणवच्च उपपदार्थविशेषणफलत्वाभावात् । पृ. ८२९.

* समर्थानां हि स उच्यते सापेक्षं चासमर्थं तस्माच्च तद्धितान्तेन निरपेक्षाग्निदेवत्येन ( आग्नेय ) द्विदेवत्यस्याभिधानम् । ( अग्नीषोमीयः ऐन्द्राग्नः ) । भा. ३।१।१५।२७. * तद्धितान्तात् देवताशब्दात् परस्य भावप्रत्ययस्य संबन्धवाचित्वम् । सु. पृ. ८२८.

* तद्धितान्तपदोपात्तविधिना देवता, द्रव्यम्, संबन्धः, भावना, यागः इति– सर्वमन्यत् अर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति । वा. १।४।६।९ पृ. ३४२.

* तद्धितार्थः । त्वतलादिभावप्रत्ययानां घटत्वं पटत्वं इत्यादौ घटत्वत्वेन घटत्वादिकमर्थः । घटत्वत्वं च घटेतरासमवेतत्वे सति घटनिष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकत्वे सति समवेतत्वम् । संसर्गः समभिव्याहारलभ्यः । सत्त्वं इत्यादौ एकदेशे लक्षणा । तत्र तदितरासमवेतत्वस्याप्रसिद्धेः । एवं प्रमेयत्वं इत्यत्रापि । एवमन्यत्राप्यूह्यम् । केचित्तु भावप्रत्ययस्य धर्मत्वेन धर्मे शक्तिः । धर्मत्वं आधेयत्वं शक्यताऽवच्छेदकम् । शक्तताऽवच्छेदकं तु त्वतल्त्वादिकम्, न भावप्रत्ययत्वम् । घटत्वं इत्यादौ घटधर्मः इति बोधः । 'पटे घटत्वं नास्ति' इत्यत्र तु नञर्थस्य घटमात्रवृत्तित्वविशिष्टभावप्रत्ययार्थे धर्मे अन्वयः, भावप्रत्ययसमभिव्याहृतनञः प्रकृत्यर्थमात्रवृत्तित्वविशिष्टप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः । एवं समासाद्युत्तरभावप्रत्ययेऽपि नीलोत्पलत्वमित्यत्र नीलोत्पलधर्मः इति बोधः । समासोत्तरभावप्रत्ययस्य प्रकृत्यर्थवृत्तित्वविशिष्टधर्मबोधकत्वव्युत्पत्त्या न रक्तोत्पले नीलो-

त्पलत्वं इति बोध इत्याहुः। अन्ये तु कृत्तद्धितसमासोत्तरभावप्रत्ययस्य पदार्थताऽवच्छेदकद्वयसामानाधिकरण्ये शक्तिः, लोके पाचकत्वं औपगवत्वं नीलोत्पलत्वं इत्यादौ, वेदे च वैश्वदेवीत्वं निषादस्थपतित्वं इत्यादौ पाककृतिपुरुषत्वयोः, उपगुसंबन्धत्वापत्यत्वयोः, नीलत्वोत्पलत्वयोः, विश्वदेवदेवताकत्वामिक्षात्वयोः, निषादत्वस्थपतित्वयोश्च सामानाधिकरण्यस्य विशेषणतया भानात् इति आहुः। अन्ये तु सामानाधिकरण्यस्य उत्तरपदार्थताऽवच्छेदकविशेषणतया भानम्। सामानाधिकरण्यमात्रे शक्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्, प्रत्ययार्थप्राधान्यनियमस्य भावप्रत्ययार्थातिरिक्तसमासाद्यतिरिक्तपरत्वात्। तेन नीलत्वसमानाधिकरणमुत्पलत्वं इति बोधः (नीलोत्पलत्वम् इत्यत्र) इत्याहुः। परे तु नीलादिपदस्य तत्समवायिनि लक्षणा, अभेदः संसर्गः, नीलत्वसमवाय्यभिन्नसमवेतोत्पलत्वं इति बोध इत्याहुः। वैश्वदेवी इत्यादितद्धितस्य देवतात्वविशिष्टे सर्वनामार्थे शक्तिः। सर्वनामार्थश्च बुद्धिस्थप्रकारविशेषावच्छिन्नं पयस्वादि। एवं च प्रातिपदिकार्थविश्वदेवानां देवतात्वे, देवतात्वस्य च निरूपकत्वेन सर्वनामार्थद्रव्यविशेषणत्वेन अन्वयः। ससंबन्धिकत्वादेकदेशान्वयेऽपि न दोषः। आमिक्षापदे तु प्रकारविशेषोपस्थापने तद्धितस्य तात्पर्यग्राहकत्वं इति प्राञ्चः। केचित्तु तद्धितस्य सर्वनामार्थे शक्तिः, देवतात्वे तु निरूढलक्षणा। कृत्प्रत्ययानां आश्रयवाचिनां कृताविव विश्वदेवप्रातिपदिकार्थस्य लक्षितदेवतात्वे अन्वयः व्युत्पत्तिवैचित्र्यात् इत्याहुः। अन्ये तु तद्धितार्थो द्रव्यविशेष एव। देवतात्वं तु प्रातिपदिकार्थतद्धितार्थयोः संसर्गः इत्याहुः। परे तु देवतात्वमेव तद्धितार्थः, सर्वनामार्थस्य व्यक्तिन्यायेन बाधः इत्याहुः। अपरे तु तद्धितेन अनिर्धारितविशेषद्रव्यसामान्यप्रतीतेः न द्रव्यविशेषवाचित्वम्, किंतु आमिक्षापदादेव विशेषनिर्णयः इत्याहुः। मणि. पृ. १६१-१६२. * तद्धितार्थेन साकाङ्क्षस्य असंबन्धः, एवं समासेऽपि। भा. ३।२।१७।४१.

* तद्धितदेवताविधिः सर्वज्येष्ठः। सर्वजघन्यश्चायं मान्त्रवर्णिकदेवताविधिः। वा. १।४।६।९ पृ. ३४१.

* तद्धितद्वितीययोर्विप्रतिपत्तौ तद्धितः समञ्जसो द्वितीया वा इति संदेहः ऐन्द्र्यधिकरणे (३।२।२।३)। सु. पृ. १०८७.

* तद्धितनिर्देशेन हि प्रातिपदिकार्थस्य संख्याविशेषाभिव्यक्तिर्भवति। तत्र प्रातिपदिकार्थानन्यथासंभवात् एकवचनान्तेन विग्रहो भवति। वा. ३।२।१५। ३७. * तद्धितनिर्देशे देवानां देवतात्वं श्रुत्या। भा. २।२।९।२३.

* तद्धितप्रत्ययावृत्तिलक्षणो वाक्यभेदः। बाल. पृ. १८१.

* तद्धितवत् समासस्य सापेक्षेषु अप्रवृत्तेः। वा. ३।२।१७।४१.

* ये हि विभक्तिवाच्या अर्था भवन्ति, तद्विभक्तिसमर्थेभ्य एव तेभ्यः तद्धितविधानं दृश्यते 'तद्वहति, तेन क्रीतं, तस्मै हितम्, तत आगतः, तस्यापत्यम्, तत्र भवः' इति। वा. २।२।४।१० पृ. ४९२.

* तद्धितश्रुतेः कारकश्रुतिर्बलीयसी इति 'ऐन्द्या गार्हपत्यम्' इत्यत्र मन्त्रस्य गार्हपत्याङ्गत्वमेव, नेन्द्राङ्गत्वम्। शेष्यनेकत्वे इदम्। कौ. ३।३।७।१४ पृ. ३५०.

* तनुशिरा उष्णिक्। पादेषु अक्षराणि ११।११।६ उदा० प्र या घोषे भृगवाणे (ऋसं. १।१२०।५)। के.

* तनूनपात्कल्पाः राजन्य–अत्रि–वध्र्यश्व–वसिष्ठ–वैश्य–शुनक–कण्व–कश्यप–संस्कृतिभिन्नाः। (एषां द्वितीयः प्रयाजः तनूनपात्। राजन्यादीनां तु नराशंसः)। भा. ६।६।१।१.

⌛ तन्तुन्यायः। अयं समुदायस्य कार्यसाधकत्वविवक्षया प्रवर्तते। यथा तन्तवः सूत्राणि बहूनि मिलितानि कार्यं साधयन्ति, तथा महान्तोऽपि मिलिताः स्वकार्यं साधयन्तीति भावः। साहस्री. ९९४.

⌛ तन्तुपटन्यायः। तार्किकमते तन्तुषु नष्टेष्वपि क्षणं पटस्तिष्ठति, तथा जीवन्मुक्तिः। अयं कारणनाशे कार्यनाशः इत्यस्यापवादः। संग्रहः.

* (तन्त्रं नाम) तन्त्रं तत्र, यत्र सकृत् कृतं सर्वेषामुपकरोति। यत्र तु अन्यार्थेन अङ्गेन अन्यस्योपकारः तत्र प्रसङ्गः। रत्न. १२।२।७।२४. * तन्त्रं

तन्यते विस्तार्यते बहूनामुपकारो येन सकृत्प्रवर्तनेन, तदिदम्। यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपस्तेषामुपकरोति। वि. ११।१।१. * तन्त्रं द्विधा भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्तौ आख्यातगुणत्वप्राधान्यापेक्षया। के. * तन्त्रं प्रसङ्गश्च। 'साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः। एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ॥' (इति भाष्योक्तलक्षणश्लोकस्यायमर्थः—) यत् अङ्गमनुष्ठीयमानं अगृह्यमाणविशेषत्वात् अनेकशेषिसाधारणम्, तत्र तन्त्रम्, यथा आग्नेयादिषु प्रयाजादेः। यत्तु अनुष्ठीयमानं परार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्योपकारकम्, तत्र परार्थोपजीवी प्रयोजकः यथा वाजिनतुषोपवापादिकं दध्यानयनकपालादेः। यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनम्, तत्र प्रसङ्गः इत्यर्थः। एवं च 'परार्थे त्वप्रयोजकः' इत्यत्र स्वविधेः प्रयोजकत्वशक्त्यभावे इत्यर्थात् लभ्यते इति बोध्यम्। सोम. १२।३।४. * तन्त्रं साधारणो धर्मग्रामः। यथा दर्शपूर्णमासयोः आज्यभागादिः पूर्वः, स्विष्टकृदादिः उत्तरः। भा. १२।१।१।१.

* तन्त्रं साधारणो धर्मग्रामः। स येषां प्रधानानां तानि तन्त्रीणि प्रधानानि। भा. १२।१।१।१.

( यत् तन्त्रेण क्रियते, यस्य वा तन्त्रं तत् चर्णक्रमेणोच्यते। तन्त्रं न इति तु ततः परं निवेक्ष्यते )।

* तन्त्रं अग्नेराधानं सर्वकर्मणि। भा. ११।३।११।२६. * तन्त्रं अङ्गानि पौर्णमास्यां त्रयाणां प्रधानानां एककालसंयोगात्। टुप्. ११।४।४।११. * तन्त्रं अभिवर्षणमन्त्रः 'उन्दतीरोजो धत्त' इति ज्योतिष्टोमे संतानेनाभिवर्षणस्थले। भा. ११।४।१७।५०, * तन्त्रं अमेध्यप्रतिमन्त्रणमन्त्रः ('अबद्धं चक्षुः' इति) ज्योतिष्टोमे एकदा अनेकामेध्यदर्शने। ११।४।१७।५०, * तन्त्रं अवघातमन्त्रस्य 'अव रक्षो दिवः सपत्नं वध्यासम्' इति दर्शपूर्णमासयोः मुसलप्रहारानेकत्वेऽपि। ११।४।१२।४२, * तन्त्रं आघारादीनामङ्गानां दर्शपूर्णमासयोः, न प्रतिप्रधानं भेदः। ११।१।१०।५४–६७, * तन्त्रं उपसत्कालीनं सुब्रह्मण्याह्वानं अहर्गणे। ११।३।१०।२१, * तन्त्रं उलूखलं राजसूये नानाबीजेष्टौ। ५।२।६।१३–१५, * तन्त्रं ऋत्विजां राजसूये एकस्मिन्। ११।४।२।४–७, * तन्त्रं कण्डूयनमन्त्रः ('कृषिषु स्यामकृषे' इति) युगपद् अनेकाङ्गकण्डूयनेऽपि। ११।४।१६।४८–४९. * तन्त्रं कर्तारः राजसूये इति भाष्यान्तरम्। सति संभवे त एव कर्तार इति वार्तिकम्। के. ११।४।२।४–७. * तन्त्रं कर्तॄणां होतृ-आग्नीध्र-ब्रह्मणाम्। विहारद्वये वरुणप्रघासेषु, अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेदः। भा. ११।२।१०।४४–४८, * तन्त्रं कुम्भीशूलवपाश्रपणीनां ऐकादशिनेषु विभिन्नदेवताकेष्वपि पशुषु सजातीयेषु। ११।४।९।३१–३६.

**⧗ तन्त्रं कुम्भीशूलवपाश्रपणीनां वाजपेयगतप्राजापत्यपश्वङ्गादिश्रपणार्थम्॥**

**पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात्। ११।४।८।३३॥**

भाष्यम्— वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्रपण्याश्च तन्त्रभावः स्यात्, विभुत्वात्। विभवत्येका कुम्भी सर्वपशूनामवदानानां श्रपणे, शूलं हृदयानाम्, वपाश्रपणी वपानाम्। तस्मात् तन्त्रं स्युः।

सोम— पाकसौकर्यसिद्धेः दृष्टार्थस्य कुम्भ्यादेर्नैतन्त्रता इत्युत्थितेः संगतिः। न चैकदेवत्यत्वेऽपि अवदानादेः क्रमानुष्ठानाय असंकरस्यापेक्षितत्वात् कथं तन्त्रत्वमिति वाच्यम्। वक्ष्यमाणरीत्या चिह्नकरणेनापि तत्सिद्धेः।

वि— 'प्राजापत्येषु कुम्भ्यादेर्भेदो नो वा, ऽङ्गभेदतः। भेदो, मैवं विशेषाङ्गश्रपणादौ प्रभुत्वतः॥'

भाट्ट— एकदेवत्येषु एकजातीयेषु च प्राजापत्यादिपशुषु प्रयोगविध्यवगतश्रपणादियौगपद्यानुरोधेन कुम्भीशूलवपाश्रपणीनां महत्परिमाणाङ्गीकारेण तन्त्रमेव श्रपणादि। नहि तेषां प्रकृतौ कश्चित् परिमाणविशेष उपात्तः, येन तल्लिप्सया कुम्भ्यादिभेदोऽङ्गीक्रियेत।

मण्डन— 'कुम्भ्येका पशुसंहतौ।'

शंकर— 'कुम्भ्यादेश्च पशुष्विदम्।' तन्त्रम्।

* तन्त्रं दीक्षा पृथक्कालत्वात् द्वादशाहे। (दीक्षावत् इति भाष्यम्)। भा. ११।३।१०।२१, * तन्त्रं देश-

कालकर्तारः दर्शपूर्णमासादिप्रधानेषु । ११।२।१।१–२, ४–७, * तन्त्रं देशकालकर्तारः दर्शपूर्णमासयोः अङ्गेषु। ११।२।२।३, ८–११, * तन्त्रं नदीतरणमन्त्रो 'देवीराप' इति ज्योतिष्टोमे अनेकस्रोतस्कनदीतरणस्थलेऽपि । ११।४।१७।५०, * तन्त्रं प्रयाणमन्त्रः 'भद्रादभि श्रेयः प्रेहि' इति एकार्थनिर्वृत्त्यर्थे। ११।४।१८।५१, * तन्त्रं (प्रयोगः) भिन्नं ब्राह्मणादिकर्तृकाया अवेष्टेः राजसूयात् । ११।४।३।९–१२, * तन्त्रं यूपः ज्योतिष्टोमे पशुत्रयार्थः । ११।३।३।३–४, * तन्त्रं यूपाहुतिः यूपैकादशिन्याम्, अन्तिकदेशस्य अविवक्षितत्वात् । ११।२।७।२६–२९, * तन्त्रं यूपसंस्काराणां पशुत्रयार्थे ज्योतिष्टोमे । ११।३।४।५–७, * तन्त्रं वरणं सर्वकर्तॄणां राजसूये । इति भाष्यमतम् । प्रतिकर्म पृथक् वरणं इति वार्तिकमतम्। ११।४।२।४–७, * तन्त्रं वसाहोमस्य एकदेवताकपशुगणे। ११।२।५।२४, * तन्त्रं वेदिप्रोक्षणमन्त्रः ('वेदिरसि बर्हिषे त्वा' इति) त्रिः प्रोक्षणेऽपि। ११।४।१५।४६–४७, * तन्त्रं शेषकार्याणां सर्वपृष्ठायाम् । ३।५।४।१६–१७, * तन्त्रं (प्रयोगः) सवनीयपशोः सवनीयपुरोडाशेषु प्रसज्यते, न तु विकल्पः। १२।२।१२।३०–३२, * तन्त्रं स्वप्नार्थमन्त्रः ('त्वमग्ने व्रतपा असि' इति) एकस्यां रात्रौ अवान्तरनिद्राभेदेऽपि । ११।४।१७।५०, * तन्त्रं स्वरुः पशुत्रयार्थे अग्निष्टोमे। ११।३।५।८–१२.

**( यत् वा यस्य वा यत्र न तन्त्रम्, तदिदानीं निवेश्यते )**

* **तन्त्रं न** अङ्गानि अनुक्तदेशकालानां प्रधानानां त्रिसंयुक्तद्वये, राजसूये। भा. ११।४।१।१–३, * तन्त्रं न अङ्गानां चातुर्मास्यगतवरुणप्रघासेषु दक्षिणोत्तरविहारयोः क्रियमाणमेषमेष्योः, किंतु पृथगनुष्ठानम् । ११।२।९।३५–४३, * तन्त्रं न अङ्गानां दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्व्याप्यप्रयोगानुरोधात् । ११।२।३।१२–१८, * तन्त्रं न अङ्गानां द्वादशाहे प्रधानैः अपृथक्कालानाम् । ११।४।६।२३–२६, * तन्त्रं न अङ्गानां प्रातरादिभेदेन क्रियमाणानां त्रयाणांत्रयाणां प्रधानानामर्थे कालभेदात् अध्वरकल्पायाम् । ११।२।४।१९–२३, * तन्त्रं न अङ्गानां राजसूये अवेष्टिषु। ११।४।३। ८–१०, * तन्त्रं न अग्निगुः वाजपेये ऋतुपशुषु प्राजापत्येषु च कालभेदात् । ११।४।२०।५४–५६, * तन्त्रं न अभिषेचनीयदशपेययोः राजसूये । ११।२।१४। ५७–६२, * तन्त्रं न अवहननमन्त्रस्य नानाबीजेष्टौ प्रतिबीजं राजसूये। ११।४।१३।४३, तन्त्रं न आग्नेयपशुद्वयप्रदानयोः । ११।१।११।६८–७१, * तन्त्रं न आज्यग्रहणमन्त्रस्य आज्यग्रहणेषु प्रतिग्रहणम्। ११।४। १४।४४–४५, * तन्त्रं न उक्षणां पञ्चशारदीये अहीने पञ्चसु संवत्सरेषु, उक्षवाक्ये कर्मशेषप्रतिषेधविधानात्। ११।२।१३।५४–५६, * तन्त्रं न उपरवमन्त्रः, किंतु प्रत्युपरवखननमावृत्तिः ज्योतिष्टोमे । ११।४।१९। ५२–५३, * तन्त्रं न ऐन्द्रवायवस्य भक्षे ज्योतिष्टोमे। ३।५।५।१८, * तन्त्रं न कपालचतुष्कस्य अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशम् । ११।४।११।३९–४१, * तन्त्रं न कर्मणां कालभेदात् । ११।२।४।२२.

**⧗ तन्त्रं न कुम्भीशूलवपाश्रपणीनां नानाजातीयेषु पशुषु पाकवैषम्यात् ॥**

**जात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् ।** ११।४।१०।४० ॥

**भाष्यम्**— ऐकादशिनेषु (पशुषु) नानाजातीयेषु कुम्भ्यादीनां भेदः स्यात् पक्तिवैषम्यात् । (अत्र पाठान्तरम्– अस्ति सौत्रामणी, तत्र आश्विनो धूम्रः, सारस्वतो मेषः, ऐन्द्र ऋषभः इत्येवंविधाः पशवः सन्ति। तेष्वपि तन्त्रभावः प्रभुत्वात् प्राप्तः अपोद्यते । सौत्रामण्यां एवंजातीयकेषु कुम्भ्यादीनां भेदः स्यात्, पक्तिवैषम्यात्– इति)। विषमा हि पक्तिः आजानां आविकानां च मांसानाम्। यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते। तत्र अवदानसंभेदो भवति । तस्मात् पात्रभेदः स्यात् ।

**वृद्धिदर्शनाच्च । ४१ ॥**

**भाष्यम्**— वृद्धिश्च सौत्रामण्यां शूलानां गोऽजाविषु दृश्यते 'शूलैश्च मासरेण च अवभृथमभ्यवयन्ति' इति। तस्मादपि भेदः ।

सोम— एकस्यामपि जातौ बाल्ययौवनस्थाविरत्व-वशेन यत्र पक्तिवैषम्यम्, तत्र कुम्भ्यादिभेद एव न्यायसाम्यादिति ध्येयम्।

वि— 'भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथवा, ऽग्रिमः। पूर्ववत्, पाकवैषम्ये साहित्यासंभवाद् भिदा॥'

भाट्ट— एकदेवत्येष्वपि यत्र पाकवैलक्षण्यापादकं जात्यन्तरम्, तत्र सहश्रपणे शीघ्रपाकिनां विलीनत्वापत्तेः, चिरपाकिनां अपक्वत्वापत्तेः, पृथगेव कुम्भी श्रपणं च। एवं हृदयशूलेऽपि। अत एव सौत्रामण्यां 'शूलैर्मांसरेण चावभृथमभ्यवयन्ति' इति लिङ्गम्। वपाश्रपणी तु एकैव। यस्या एव वपायाः पाको वृत्तः तस्या एव उद्वासनोपपत्तेः। अस्तु वा तत्रापि भेदः। तेन पृथक्-पक्वानां एकदेवतेषु सहप्रदानम्, भिन्नदेवतेषु तु भेदेन।

मण्डन— 'जातिभेदे पृथक् कुम्भी।'

शंकर— 'जातिभेदे पशोस्तद्वित्।' ११.

* तन्त्रं न निर्वापमन्त्रस्य दर्शपूर्णमासयोः प्रतिमुष्टि निर्वापे। भा. ११।४।१४।४४–४५, * तन्त्रं न पत्नीसंयाजानां चातुर्मास्यगतवरुणप्रघासेषु। ११।२।११। ४९–५०, * तन्त्रं (प्रयोगः) न पवमानहविषां त्रयाणां आधाने, ब्रह्मवर्चसकामस्य तु सहप्रयोगः। ११। ४।४।११–१४, * तन्त्रं न पुरोऽनुवाक्यायाः कृष्णग्रीवयोः प्रथमतृतीययोः। ११।४।२०।५४–५६, * तन्त्रं न प्रतिप्रस्थातृमन्त्राणां चातुर्मास्यगतवरुणप्रघासेषु अध्वर्युमन्त्रैः। १२।१।९।१८, * तन्त्रं न मनोतासूक्तस्य कृष्णग्रीवयोः। ११।४।२०।५४–५६, * तन्त्रं न राजसूयगताग्नावैष्णवादीनां पृथग्दक्षिणायुक्तानाम्। ११।४।१। १–३, * तन्त्रं न लवनमन्त्रस्य दर्शपूर्णमासयोः दर्भलवने। ११।४।१४।४४–४५, * तन्त्रं न वसाहोमानां भिन्नदेवताके पशुगणे। ११।२।६।२५, * तन्त्रं न सुब्रह्मण्याऽऽह्वानस्य सुत्याकालीनस्य अहर्गणे द्वादशाहादौ। ११।३।११।२२–३२, * तन्त्रं न स्तरणमन्त्रस्य दर्शपूर्णमासादौ वेदिस्तरणे प्रतिधातु। ११।४।१४।४४–४५, * तन्त्रं न हविष्कृदाह्वानस्य सवनीयपुरोडाशेषु ज्योतिष्टोमे। ११।४।२०।५४–५६.

* तन्त्रेण इतिकर्तव्यता भविष्यति एकस्मिन् फले चोदितानाम्। टुप्. ११।४।५।१७. * तन्त्रेण देवताहोमः स्विष्टकृदिडाभक्षणे च एकदैवत्यपशुगणे। भाट्ट. ५।२।६. * तन्त्रेण प्रयोगो दीक्षोपसदां दक्षिणैक्यात्। टुप्. ११।४।५।१८, * तन्त्रेण प्रयोगो योऽन्नाद्यं कामयमानः अवेष्टिं करिष्यति तस्य। ११।४।३।९. * तन्त्रस्य (प्रयोगस्य) पशुपुरोडाशीयस्यैव अनुनिर्वाप्येषु प्रसङ्गः अग्निचयनादौ। भा. १२।३।२।३–८.

* तन्त्रावापौ एकादशाध्यायार्थः। के.

* एकवाक्यचोदितानां एकदेशकालकर्तृकत्वे एकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ। भा. १२।१।१।१. * तन्त्रत्वे नास्ति आवृत्तिः, आवापस्तु आवृत्तिः। के.

⧗ तन्त्रन्यायः। दर्शपूर्णमासादिगताग्नेयादीनां समुच्चितानां एकः स्वर्गः फलम्॥

**प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादेककर्म्यमेकशब्दाभिसंयोगात्। ११।१।१।१॥**

भाष्यम्— दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम्। इदानीमेकादशे तन्त्रावापलक्षणं निर्वर्तयिष्यामः। तत्र यत् सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः। यस्तु आवृत्त्योपकरोति स आवापः यथा तेषामेव ब्राह्मणानामनुलेपनम्। श्लोकमपि उदाहरन्ति 'साधारणं भवेत् तन्त्रम्, परार्थे त्वप्रयोजकः। एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधौ॥' इति। साधारणं भवेत् तन्त्रं इति उक्तार्थम्। परार्थे त्वप्रयोजकः इति, यः परार्थमुत्पन्नः, तदर्थमेव च अनुष्ठीयमानः परस्य उपकरोति, स परः तस्य अप्रयोजकः, यथा पश्वालम्भो यागार्थमुत्पन्नः, तदर्थमेव च अनुष्ठीयमानः लोहितशकृत्कर्मणोरपि उपकरोति इति। एवमेव प्रसङ्गः स्यात्। अयं तु (प्रसङ्गे) विशेषः, विद्यमाने स्वके विधौ इति। यद्यपि अस्य अन्यो विधिर्विद्यते, परमविधिना तु कृतार्थत्वात् न क्रियते, यथा प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि। पश्वर्था एव तु कृताः पशुपुरोडाशस्य उपकुर्वन्ति इति न पुनः तदर्थं क्रियन्ते।

प्रकृतमिदानीमुच्यते । तन्त्रावापलक्षणं प्रतिज्ञातम् । तदुच्यते । दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि । तेषां स्वर्गः फलं श्रूयते ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । स किं तेषां तन्त्रेण भवति, उत भेदेनेति । एवं चातुर्मास्यादिष्वपि द्रष्टव्यम् । ननु च नैवात्र स्वर्गः फलं श्रूयते । स्वर्गकामपदेन तावत् पुरुषोऽभिधीयते, यजेतेत्यनेनापि यागाभिर्वृत्तिः, तयोर्वाक्येन संबन्धः । केनेदानीं फलमुच्यते । अनेनैव स्वर्गकामपदेन इत्याह । ननु पुरुषस्यायं वक्ता । न खलु कश्चित् पुरुषः स्वर्गकामो नाम अस्ति । ननु च यस्य स्वर्गे कामः, स स्वर्गकाम इति । एतदेव न जानीमः, कस्य स्वर्गे काम इति । य एव हि स्वर्गकामः स एव अस्वर्गकामो भवतीति । एवं तर्हि कालोपदेशोऽयं भवति । यदा स्वर्गकामः, तदा यजेतेति । अत्रापि न कश्चित् कालविशेषोऽस्ति, यस्मिन् नियमेन स्वर्गकामः स्यात् । सर्वेषु कालेषु सर्वे कामा अनियमेन उत्पद्यन्ते । तत्र न कश्चित् कालविशेषः अनेन शक्यते व्यपदेष्टुम् । एवं तर्हि नैवायं पुरुषोपदेशः, नापि कालोपदेशः । किं खलु ? फलकामो निमित्तम् । स्वर्गविषये कामे उत्पन्ने यजेतेति । यथा कपाले नष्टे यजेतेति । अस्य पक्षस्य सूत्रेणैव परिहार उक्तः । ' फलकामो निमित्तमिति चेत् न नित्यत्वात् ' ( ६।२।२।१०-११ ) इति । नित्यान्यग्निहोत्रादीनि कर्माणि । तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत । तत्र नित्यत्वचोदना यावज्जीविकाद्या उपरुध्येरन् । लिङ्गानि च, ' अप वा एष स्वर्गाल्लोकाच्च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत् ' इत्येवमादीनि । परिशेषात् फलसंयोगः एवायम् । कथं पुनरनेन शक्यते फलं विधातुम् । तदुच्यते । स्वर्गकामो यजेतेति, यदि वा स्वर्गकामो यागाय उपदिश्यते, यथा लोहितोष्णीषाः प्रचरन्ति । यदि वा यागः स्वर्गकामाय यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकामः कर्मणे उपदिश्यते, उपदिष्टोऽपि न प्रवर्तेत । को हि परार्थे प्रयासमातिष्ठेत् । तथा कर्मचोदना अनर्थिकैव भवति । अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति, तं पुरुषः स्वार्थेन करोतीति । तथा कर्मचोदना अर्थवती भवति । अपिच यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः । तस्मात् यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्य अनेक उपकारः पशुपुत्रग्रामान्नाद्यादिलाभः । स यदि पुत्रान्नाद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दः अविवक्षितार्थः पुरुषमात्रवचनो भवति । तथा च आनर्थक्यमेव । अनन्तरेणापि हि तद्वचनं पुरुषमात्रं आख्यातादेव गम्यते । तस्मात् यागात् स्वर्गो भवतीति ।

तत्र अनेककर्मसंनिपाते दर्शपूर्णमासादिषु भवति संशयः । किं तन्त्रं एषां फलम्, उत भेदेनेति । किं प्राप्तम् ? भेदेनेति । किं कारणम् ? इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिः चोदनाभिः पृथग्भूतानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति । तत्संनिधौ स्वर्गादि फलं श्रूयमाणं भेदेन आकाङ्क्षितत्वात् भेदेनैव संबध्यते । तस्मात् प्रतिप्रधानं फलभेदः इत्येवं प्राप्तम् । एवं प्राप्ते, इदमारभ्यते । प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् । पृथग्भूतानामपि एतेषां आग्नेयादीनां ततः स्यात् ऐककर्म्यम् । कुतः ? प्रयोजनाभिसंबन्धात् । प्रयोजनं फलम् । तत् प्रति एतेषां समेतानां संबन्धात् संयोगात् इत्यर्थः । ऐककर्म्ये इति, कर्मशब्देन अत्र फलमुच्यते क्रियते इति । तत् येषामेकं तानि एककर्माणि, तेषां भावः ऐककर्म्यम्, एकफलमित्यर्थः । कथं पुनर्ज्ञायते समेतानामाग्नेयादीनां फलेन योगः इति, एकशब्दाभिसंयोगात् । य एषां समुदितानां एकः शब्दो वाचकः, तेन एतानि अभिधाय फलसंबन्धः कृतः ' दर्शपूर्णमासाभ्यां स्वर्गकामः ' इति । अतः समुदितेभ्यः फलं गम्यते, न भेदेन । यथा ' ग्रामेण उदपानः खेयः ' ' ग्रामेण तडागः खेयः ' इति ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैः एकः खन्यते, न प्रतिपुरुषं कूपभेदः, एवमिहापि ।

टुप्— दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ । तत्र अभ्युच्चयो नाम न किञ्चित् वस्तुस्वरूपं ( शास्त्रप्रमेयम् ) विद्यते । किंतु उपहोमैः अनूयाजा न बाध्यन्ते इति बाधाभावमात्रं अभ्युच्चयः इत्युच्यते । अस्मिंश्च दशमे

चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानां इयत्ता चिन्तिता। इह तु (इदानीम्) एकादशे इयत्ताविशेषश्चिन्त्यते। यत्र त्रयो यागाः (प्रधानभूताः) श्रूयन्ते, तत्र सेयमियत्ता किं तन्त्रेण (भवति), उत आवृत्त्या इति। ननु दशमानन्तरं अङ्गानां तन्त्रावापचिन्ता युक्ता, तेषां (एव दशमे) इयत्ताऽवधारणात्। प्रथमे अधिकरणे फलं चिन्त्यते, तच्च इयत्ता न भवति। तस्मात् तस्य दशमेन नास्ति संबन्धः। (तथाहि,) किं एकैकस्य फलं उत संहतानाम्, इति कीदृशः दशमसंबन्धः (स्यात्)। उच्यते। यदि समुदितानामेकं फलम्, ततः तन्त्रावापचिन्ता घटते। अथ एकैकस्य फलम्, ततः तन्त्रं नास्त्येव (क्रत्वन्तरवत् भेद एव स्यात्) तस्मात् (उपोद्घातरूपं) प्रथमाधिकरणमारभ्यते तन्त्रावापसिद्धये। द्वितीयादीन्यपि (तत्–) प्रसङ्गेन (आरभ्यन्ते) किं संहतानि अङ्गानि एकं क्रतूपकारं कुर्वन्ति, उत निरपेक्षाणि इति। अथवा तन्त्रावापसामान्येन प्रथममधिकरणं चिन्त्यते। (भाष्यकारेण सौत्रं विचारमुपन्यस्य चोदितं ननु नैवात्र स्वर्गः फलं श्रूयते इति, तस्यार्थमाह–) 'यजेत' इत्यनेन आक्षिप्तः कर्ता, स विशेष्यते स्वर्गकामशब्देन (पुरुषवचनेन), यथा 'राजा राजसूयेन यजेत' इति (राजा इति विशेषणम्)। विशेषणं च (कामः राजत्ववत्) कर्माङ्गं भवति इति। (उत्तरभाष्यस्यार्थमाह–) एवं च (कर्तृविशेषणत्वे अभ्युपगम्यमाने) यदि स्वर्गं (एव कश्चित्) नित्यं कामयते, नान्यानि ब्रह्मवर्चसादीनि, तथा सति असाधारणत्वात् विशेषणमवकल्पते (स्वर्गमेव यः कामयते इति)। न च ईदृशः कश्चिदस्ति। यदि वा (कश्चित्) स्वर्गं न कदाचित् कामयते, तथापि तं (अस्वर्गकामं) अपेक्ष्य विशेषणं घटते स्वर्गकाम एव यः इति। किंतु ईदृशोऽपि नास्ति, यो न कदाचित् स्वर्गं कामयते। अथोच्येत, (स एव) यस्यां वेलायां स्वर्गकामः (स्वर्गमेव कामयते) तस्यां वेलायां दर्शपूर्णमासादीनि करिष्यति (तेन कालद्वारेण विशेषणत्वं युज्यते)। एतदपि न घटते। यावत् (पुरुषः) साङ्गं प्रधानं निर्वर्तयति, तावत् अनेके कामा उत्पद्यन्ते (दीर्घकाले)। यदि च शुद्धमेव स्वर्गं कामयेत, तथा (सति भवन्मते) यथाश्रुतौ दर्शपूर्णमासौ कृतौ स्याताम्, नेतरथा। न च ईदृशः कश्चित् विद्यते (यो यावत्प्रयोगं स्वर्गमेव कामयते)। तस्मात् कालद्वारेण विशेषणं न घटते।

(भाष्यकारेण 'फलकामो निमित्तं भवतु इत्याशङ्क्य नित्यानित्यसंयोगविरोधात् परिहारोऽभिहितः, तमाक्षिपति–) योऽयं नित्यानित्यविरोधः उक्तः, स नोपपद्यते। कथम्? यस्यापि (मते) स्वर्गकामशब्देन फलमभिधीयते, तस्यापि नित्यानित्यविरोधो भवत्येव। (तथाहि,) दर्शपूर्णमासौ यावज्जीवं कर्तव्यौ ज्ञातौ, पुनः कामेन कर्तव्यौ इति (विरोधात्) न कश्चित् निमित्तेन (फलस्य) विशेषोऽस्ति। न च ईदृशो नित्यानित्यविरोधो भवति। (कथम्?) आग्नेयादय उत्पन्नाः, तेषामुत्पत्तिवचने न नित्यत्वमवगम्यते, न काम्यत्वम्। ते तु (स्वरूपमात्रेण) विपरिवर्तमानाः एकेन वाक्येन यावज्जीवं प्रति विधीयन्ते, अपरेण स्वर्गम्। न च यावज्जीव–स्वर्गकामचोदनयोः परस्परापेक्षा विद्यते। येन ये एव यावज्जीविके (प्रयोगे) कर्तव्याः, ते एव काम्येऽपि कर्तव्या इति (अवगमात् विरोधः स्यात्)। तस्मात् काम्यनित्याभ्याम् (अन्योन्यमनपेक्षमाणाभ्याम्) उत्पत्तिः अपेक्षितव्या (इत्यविरोधः। तस्मात् अयुक्तमिदं नैमित्तिकत्वनिराकरणम्)। तेन तर्हि अन्यथा (नैमित्तिकत्वनिराकरणं) वर्ण्यते। स्वर्गकामशब्देन निमित्तं नाभिधीयते। सप्तम्यन्तेन निमित्तमुच्यते यथा 'भिन्ने जुहोति' इति, यद्वृत्तेन वा 'यस्योभयम्' इति। न चायं सप्तम्यन्तः, न च यद्वृत्तेन युक्तः। तस्मात् (निमित्तानभिधायित्वात्) अनेन स्वर्गं कामयमानः पुरुषः अभिधीयते। (तत्रापि पूर्वोक्तेन न्यायेन पुरुषपरत्वानुपपत्तेः विशेषणपरत्वमेव)। स च पुरुषः किं साध्यत्वेन स्वर्गं कामयते, उत साधनत्वेन इति। द्विप्रकाराऽपि कामना अस्ति। यदि अयं साधनत्वेन स्वर्गमिच्छति, तथा सति (पूर्वोक्तेन न्यायेन विशेषणपरत्वे स्थिते स्वर्गकामाधिकरणपूर्वपक्षन्यायात्) प्रीतिविशिष्टेन द्रव्येण यागः साधनीयः (भवति) तदा च

**न, वाक्यशेषत्वाद् गुणार्थे च समाधानं ननात्वे नोपपद्यते । २३ ॥**

भाष्यम्—नायं विधिर्युज्यते । किं कारणम् ? अन्योऽत्र विधिराम्नातः 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इति, तस्य वाक्यशेषोऽयम् । कथं ज्ञायते ? तेन आकाङ्क्षितत्वात् । 'अप्रतिष्ठिता वै त्र्यम्बकाः' इति दोषमनुकीर्त्य इदं श्रूयते 'आदित्यं (अदितिदेवताकम्) घृते चरुं निर्वपेत् पुनरेत्य गृहेषु' इति 'इयं वा अदितिः, इयं प्रतिष्ठा, यदादित्यः अस्यामेव प्रतितिष्ठति' इति । तदेतत् तस्य दोषस्य परिहारार्थमिति विज्ञायते, अतस्तेन सह एकवाक्यतां याति । तन्मध्ये च ये इध्माद्यभाववचनाः, तेऽपि तच्छेषा एव समुच्चारणात् न्याय्याः । ते यदि विधयः कल्पेरन् पृथक् वाक्यानि भवेयुः, तत्र एकवाक्यत्वं बाध्येत । व्यवहितकल्पना च स्यात् । न च एषां विधायकत्वम्, अनुवादसरूपत्वात् । तस्मान्न विधयः । अथ कोऽत्र विशेषः, यत् 'समाने लिङ्गत्वे अन्तःपरिधिदर्शनं असाधकम्, इतरत् साधकम्' इति । विशेषं उपरिष्टात् वक्ष्यामः । (एवं दर्विहोमानां नारिष्ठहोमा न प्रकृतिरित्युक्तम्) ।

**येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात् । २४ ॥**

भाष्यम्— येषां वा यागानां अपरयोः अग्न्योः होमः, तेषां प्रवृत्तिः स्यात् पत्नीसंयाजानामित्यर्थः । कुतः ? अविरोधात् । तत्र विरोधो नास्ति, यो नारिष्ठहोमानां प्रवृत्तौ उक्तः 'तत्राभावस्य हेतुत्वात्' इति । तेषां हि इध्माबर्हिः सामिधेन्यश्च नैवाङ्गम् । तदभावदर्शनं तत्र न विरुध्यते । प्रवृत्तिधर्माणस्तेऽपि जुहोतिचोदनाश्च 'सह पत्न्या जुहोति' इति । तस्मात् तेषां प्रवृत्तिः ।

**तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन् । २५ ॥**

भाष्यम्— नैतत् युक्तम् । किं कारणम् ? यतः तत्र औषधानि चोद्यन्ते दर्विहोमे, यथा त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुलाः इत्येवमादीनि । तानि स्थानेन गम्येरन् । आज्यस्थानापरया आज्यधर्माः प्राप्येरन् । ते न शक्याः तत्रानुष्ठातुम् । अनुष्ठीयमाना वा अप्राकृतकार्याः स्युः, तत्र चोदको बाध्येत । तस्मात् न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति । याज्याऽनुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारः स्वाहाकारेण । (सूत्रद्वयेन पत्नीसंयाजप्रकृतित्वं निरस्तम् । )

**लिङ्गाद् वा शेषहोमयोः । २६ ॥**

भाष्यम्— पिष्टलेपफलीकरणहोमयोर्वा प्रवृत्तिः स्यात् (दर्विहोमेषु) । कुतः ? लिङ्गात् औषधसामान्यात् । यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तो धर्माणामानर्थक्यम्, तदत्र नास्ति । तत्र औषधधर्मा निर्वपणादयः शक्याः कर्तुम् । तस्मात् तयोः प्रवृत्तिरिति ।

**प्रतिपत्ती तु तौ भवतस्तस्मादतद्विकारत्वम् । २७ ॥**

भाष्यम्— न तु एतदेवम् । कुतः ? यतः प्रतिपत्तिकर्मणी एतौ होमौ, दर्विहोमाश्च प्रधानकर्माणि, तेषां दूरतो भेदः । सामान्यतश्च (सादृश्येन च) धर्मप्राप्तिरिष्यते । यच्चोक्तम् 'औषधधर्माः शक्यास्तत्र कर्तुम्' इति, प्रतिपत्तित्वात् अप्रयोजकावेव निर्वपणादीनां धर्माणाम् । अतः तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम् । नापि प्रयोजनवत् । तस्मात् एतदप्ययुक्तम् । एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते ; तस्मादपूर्वाः ।

**संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत, विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद् , वचनादतिदेशः स्यात् । २८ ॥**

भाष्यम्— अथ कस्मात् उभयपक्षसाधनानामपि लिङ्गानां भावे अप्रवृत्तिरेव प्रतीयते, न पुनः प्रवृत्तिरिति । उच्यते । संनिपाते विरोधिनामेतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुं न न्याय्या । कुतः ? विध्युत्पत्तिव्यवस्थानात् । विधीनामुत्पत्तिः पाठः, स च व्यवस्थितः, केचित् दर्शपूर्णमासयोः पठ्यन्ते केचित् सोमे । तेषां अर्थस्य अपरिणेयत्वम् । यत्र पठिताः, ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते । तस्मात् अप्रवृत्तिः प्रतीयेत । तत्राह, किमेष एवोत्सर्गः, सर्वत्र अप्राप्तिरिति । एवं खलु प्राप्ते, उच्यते । वचनात् अतिदेशः स्यात् । यथा राष्ट्रभृतां उद्वाहकर्मसु । असति एवंविधे वचने अपूर्वा इति । अथ ये लिङ्गे अपदिष्टे 'यदि

कीटोऽवपद्येत, अन्तःपरिधि निनयेत्' 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति, तयोः कः समाधिः ? उच्यते। अन्यायपूर्वकत्वात् लक्षणया वादः स विज्ञायते। अन्तःपरिधिदेशो अन्तर्वेदिदेशो इति। परिधीनां वेदेश्च तत्राभावात्। 'यथा रजनी मे कण्डूयति, तिलको मे स्पन्दते' इति रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तारः इति।

सोम— प्रासङ्गिकं परिसमाप्य अपवादविचारः प्रस्तूयते।

वि— 'दर्विहोमे सोमधर्मा अपूर्वत्वमुता, ऽग्रिमः। अव्यक्तेर्, यज्यभावाच्च स्वाहोक्त्यादेरपूर्वता ॥'

भाट्ट— तेषु अव्यक्तत्वसामान्येन सोमयागविकारत्वं अव्यक्तत्वं च उत्पत्तिवाक्ये देवताऽभावरूपम्, न तु स्वाङ्गतया देवताशून्यत्वम्, तथात्वे सिद्धान्ते दर्विहोमेषु देवताऽभावप्रसङ्गात्। अत एव उपांशुयाजविकारत्वमपि शक्यं वक्तुम्। अथवा होमत्वसामान्याधिक्यात् नारिष्ठहोमविकारत्वम्। अत एव अग्निहोत्रे 'यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्' इति परिधिदर्शनम्। परिधेर्हि अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गत्वमपि सुलभमेव। तथा अग्नौ 'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति वेदिदर्शनं न नारिष्ठहोमविकारत्वसाधकम्। यत्तु मूले पत्नीसंयाजविकारत्वं शङ्कितम्, तत् तेषां यागत्वादुपेक्षितम्। यदि परमुपांशुयाजसाधारण्येन, तदा अस्तु पिष्टलेपफलीकरणहोमयोर्वा विकाराः। सर्वथा नापूर्वा दर्विहोमाः। इति प्राप्ते, द्रव्यदेवताऽऽदिसंनिपत्योपकारकाङ्क्षासामग्रीसाकल्यरूपकृत्स्नविधानत्वेन यावदुक्तेतिकर्तव्यतयैव निराकाङ्क्षत्वात्, सादृश्यस्य च विनिगमनाविरहेण अनियामकत्वात् अपूर्वा एव दर्विहोमाः, न प्रकृतिपूर्वाः। यत्तु परिधिवेदिदर्शनम्, तत् देशोपलक्षणतया अपि उपपन्नम्। एवं त्र्यम्बकहोमेषु औचित्येन 'नात्रेध्माबर्हिः संनह्यते न प्रयाजानूयाजा इज्यन्ते न सामिधेनीरन्वाह' इति स्तुतिरपि उपपद्यते। अतिदेशपक्षे स्वतन्त्रपर्युदासकल्पने विध्यन्तरैकवाक्यताभङ्गापत्तेः। सोमयागाद्यविकारत्वे इदमपरं लिङ्गं औदुम्बरीहोमे 'घृतेन द्यावापृथिवी आपृणेथां इति अन्तरा कर्णौ जुहोति, भूमिगते आज्ये स्वाहाकारः' इति। सोमयागादिविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत, तत्र स्वाहाकारस्यापि विधिः अपूर्वविधिः स्यात्। अस्मन्मते तु 'स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वा' इत्यनारभ्याधीतवाक्येन विहितयोः स्वाहाकारवषट्कारयोः विकल्पेन प्रदानमात्रे प्राप्तौ 'याज्याया अधि वषट्करोति' इति वचनेन याज्यावत् कर्मणि वषट्कारनियमात्, तद्रहिते परिशेषादेव स्वाहाकारप्राप्तेः, तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानात् लाघवम्। न चैवं परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ 'अग्निर्ज्योतिः' इत्यादौ क्वचित् पुनः स्वाहाकारपाठवैयर्थ्यम्, तस्य मन्त्रत्वसिद्ध्यर्थत्वेन सार्थक्यात्। यदि तु अतिदेशपक्षेऽपि औपदेशिकमन्त्राम्नानादेव याज्याराहित्यात् वषट्कारप्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्तिरुद्भाव्येत, ततो नेदं लिङ्गमिति ध्येयम्। अतः सिद्धं दर्विहोमा अपूर्वा इति। २.

मण्डन— 'दर्विहोमास्त्वपूर्वकाः।' 'वाक्याद् धर्मातिदेशः स्यात्।' ५.

शंकर— 'नातिदेशो दर्विहोमेषु। असौ वचनतः क्वचित्।' ५.

* दर्विहोमा नारिष्ठादयः गृहमेधीयादिं च। बाल. पृ. ८५. * दर्विहोमा बहवो यत्र क्रमेण क्रियन्ते, तत्र प्रथमहोमाव्यवहितपूर्वकाले गृहीतस्य गृह्यमाणविशेषत्वात् तदर्थतैव। इति प्रत्याहुति सकृत् ग्रहणम्। संकर्ष. २।४।७. * दर्विहोमा राजसूये 'वल्मीकवपायां होमः' इत्यादयः। तेऽपि राजसूये प्रधानमेव। वि. ४।४।१. * दर्विहोमाः स्वाहाकारेण संयुक्ताः पृथिव्यै स्वाहा इत्यादयः। भा. ८।४।४।११. * दर्विहोमेभ्यः प्राक् प्रत्याहुति एकैकसमिदाधानं नियतम्। संकर्ष. २।४।८. * दर्विहोमाणां सर्वेषां अपूर्वत्वेन प्राकृतधर्माग्राहित्वम्। सु. पृ. ११८२. * दर्विहोमाणां सौमिकानां द्रव्यं आज्यम्, न तु सोमः। संकर्ष. ३।२।२०. * दर्विहोमे कस्मिंश्चित् स्वाहाकारपुनःश्रवणं अनारभ्याधीतस्वाहाकारानुपसंहारकम्। भा. १०।८।१०।२०-२२. * दर्विहोमेष्वेव चतुरवत्तं जुहोतीति विधिः। (इदं हविष एव चतुरवत्तत्वम्)। संकर्ष. २।२।५.

ऽ दर्विहोमेषु कचित् स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारश्रवणेन नोपसंहारः ॥

मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात् । १०।८।१०।२० ॥

भाष्यम्—दर्विहोमं प्रकृत्य श्रूयते 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति। अस्ति च अनारभ्य वचनम् 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। तत्र संदेहः किं तस्य अयं वाक्यशेषः स्वाहाकारेण अन्नं प्रदीयते देवेभ्यः इति एतस्मिन् दर्विहोमे पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा इति, उत नायं वाक्यशेषः, येष्वपि प्रदानेषु स्वाहाकारो नाम्नातः, तेष्वपि स्वाहाकार इति। किं प्राप्तम्? अनन्तरवृत्तेन अधिकरणेन वाक्यशेष इति। एवं प्राप्ते, ब्रूमः। मन्त्रेषु वाक्यशेषत्वं न स्यात्। नहि विधायकाविधायकवाक्ययोः एकवाक्यत्वं भवति। विधायकं ब्राह्मणं अविधायको मन्त्रः। अपि च अनन्तराधिकरणे न क्रतुसंबन्धोऽस्ति, इह तु संबन्धो गम्यते। 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। प्रदानं हि अत्र प्रधानकर्म। अपिच गुणोपदेशो भवति तस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा' इत्येवं समुच्चारणं भवति, न स्वाहा पृथिव्यै इति। तस्मात् अन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्ति इति।

टुप्— (पूर्वन्यायसंभवाशङ्कया कस्यचित् इहापि उपसंहारबुद्धिः स्यात्, सा व्यावर्त्यते) अनारभ्य (प्रदानसंयोगेन) स्वाहाकारवषट्कारौ श्रूयेते। सः अनारभ्यवादः मन्त्रेण न शक्यो विशेष्टुम्। मन्त्रस्य (प्रमाणान्तरप्राप्तमर्थं) प्रकाशयितुमेव सामर्थ्यम्, न (अनारभ्यवादं) विशेष्टुम्, अविधायकत्वात् (नहि विधायकाविधायकयोर्विशेषणविशेष्यता घटते। ननु पशुविधेः छागमन्त्रस्य च सा इष्टैव, अत आह–) न चात्र 'छागो वा मन्त्रवर्णात्' इति न्यायः। तत्र यावत् अग्नीषोमीयापूर्वम्, तावन्मन्त्रः प्रयोक्तव्यः 'अग्नीषोमीयं पशुमालभते' इति न (कश्चित् पशु–) जातिविशेषः श्रूयते, तत्रार्थात् (पशुजातिविशेषो) ग्रहीतव्यः। स यदि अनियमेन गृह्यते (ततः यद्यपि) चोदना न विरुध्यते, (यत्तु नित्यवच्छ्रुतम्) मन्त्राम्नानं (तत्) पाक्षिकं स्यात्। तस्मात् यैषा (अनियमेन) पशुचोदना, सा मन्त्रवर्णालोचनेन जातिविशेषपरैव कल्प्यते। एवं तत्र छागनियमो न विशेषणविशेष्यतया (कथम्,) न च मन्त्रविध्योर्विशेषणविशेष्यता (प्राप्तप्रकाशकत्वात् मन्त्राणामित्युक्तम्)। अपि च (भवतु वा विशेषणविशेष्यता तथापि अत्र नास्ति उपसंहारः–) 'पृथिव्यै स्वाहा' इति न स्वाहाकारपरं इदमाम्नानम्। (किन्तु) पृथिव्यै इति (अनेन) देवतोच्यते, तस्याश्च संप्रदानत्वात् स्वाहाकारो वा वषट्कारो वा प्राप्नोति, तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम्। वषट्कारनिवृत्तिपरत्वाच्च वाक्यस्य उपसंहाराभावात् अन्येषु (क्रतुषु) स्वाहाकारो न भवति इत्याशङ्कैव नास्ति। 'स्वाहा पृथिव्यै' इति यदि एवं श्रूयेत तथा सति स्वाहाकारस्य प्राथम्यात् (उद्देश्यलक्षणाऽऽपत्तेः) योऽसौ (अनारभ्यवादेन विहितः) स्वाहाकारः, स अनूद्य अस्मिन् प्रदानविशेषे नियम्येत इति शङ्क्येत अस्मिंश्च पक्षे नान्येषु स्यात्। न तु ईदृशमिदं वाक्यमिति।

अनाम्नाते च दर्शनात्। २१ ॥

भाष्यम्— यत्रापि दर्विहोमे नाम्नायते स्वाहाकारः, तत्रापि कचित् दृश्यते, 'घृतेन द्यावापृथिवी आ पृणेथां इत्यौदुम्बर्या विशाखे जुहोति, आऽन्तादन्ववस्रावयति भूमिप्राप्ते स्वाहा करोति' इति प्राप्तं स्वाहाकारं दर्शयति।

प्रतिषेधाच्च। २२ ॥

भाष्यम्— कचिच्च प्रतिषेधो भवति 'न स्वाहेति वचनं करोति, मन्त्रं च नाह' इति। प्राप्तिपूर्वकः प्रतिषेधो भवति। इत्यवाक्यशेषता अध्यवसीयते।

सोम—सूत्रार्थस्तु— मन्त्रेषु पृथिव्यादिदेवतालक्षणगुणोपदेशात् स्वाहाशब्दोपसंहारार्थत्वं न अनारभ्यविधिशेषत्वात् स्यात् इति।

वि— 'स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वा, ऽग्रिमः। पूर्वन्यायात्, न तन्मन्त्रे स्वाहाकाराविधित्वतः॥ विधित्वेऽपि नियम्यः स्यान्न व्यत्यासवषट्कृती। होमान्तरे वषट्कारस्वाहाकारविकल्पनम्॥'

भाट्ट— अनारभ्य 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति श्रुतम्। तेन च वाक्यभेदमङ्गीकृत्य स्वाहाकारवषट्कारयोः देवकर्माङ्गत्वेन विधिः विकल्पश्च न्यायादेव प्राप्तः अनूद्यते। पुनश्च केषुचित् दर्विहोमेषु 'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा' इति स्वाहाकारः श्रुतः। सोऽपि पूर्वन्यायेन उपसंहारार्थः। इति प्राप्ते, विधायकमन्त्रयोः स्वरूपेण उपसंहारायोगात् मन्त्रकल्प्यस्वाहाकारविधिना उपसंहारो वाच्यः। तस्य च वषट्कारव्यावृत्तिफलकस्वाहाशब्दनियमप्रयोजनकत्वसंभवे अनुपस्थितशेष्यन्तरपरिसंख्यारूपोपसंहारप्रयोजनकत्वानुपपत्तेः नात्रोपसंहारः, अपितु स्वाहाकारशब्दनियमः एव इति प्राञ्चः। वस्तुतस्तु 'याज्याया अधि वषट् करोति' इति वचनेन वषट्कारस्य याज्योत्तरकालत्वविधानात् यत्र याज्यामात्रकरणको यागः, तत्र वषट्कार एव नियतः। यत्र तु याज्याभिन्नमन्त्रकरणकत्वम्, तत्र परिशेषात् स्वाहाकार एव इति व्यवस्थितविकल्प एव तयोः। एवं च 'पृथिव्यै स्वाहा' इत्यादौ स्वाहाकारपाठो मन्त्रत्वसिद्ध्यर्थः। अत एव यत्र स्वाहाकारो न पठितः, तत्र उक्तविधितः स्वाहाकारविधानेऽपि न तस्य मन्त्रत्वम्, तद्भ्रेषे मन्त्रभ्रेषप्रायश्चित्तं वा, न तु तत्र स्वाहाकारस्यैवाभावः। अत एव औदुम्बरीहोमादौ मन्त्रे तत्पाठाभावेऽपि 'मन्त्रेण औदुम्बरीकर्णे होमं कृत्वा भूमिगते स्वाहाकारः' इति स्वाहाकारानुवादेन कालविधिः स्वाहाकारप्राप्तौ उपपद्यते। क्वचिच्च होमविशेषे 'न स्वाहा करोति' इति तत्पर्युदासोऽपि उपपद्यते। अतो नात्रोपसंहारः। सूत्राण्यपि अस्मिन्नेवार्थे योजनीयानि।

मण्डन— 'दर्विहोमेऽखिले स्वाहा।' ११.

शंकर— 'स्वाहाकारः सर्वहोमे।' १२.

* दर्विहोमेषु 'चतुर्गृहीतं जुहोति' इत्यत्र प्रथमं गृहीतेनापि होमसंभवात् प्रथमोपस्थितन्यायेनैव (३।४।१६) संख्या नियम्यते। संकर्ष. २।४।६.

## ⌛ दर्विहोमेषु प्रतिहोमं समिधमाधायैव होमः॥

दर्विहोमेभ्यः पूर्वमग्निसमिन्धनस्य आवश्यकत्वेऽपि न तत्र समित्प्रक्षेपनियमः। सामिधेनीष्विव नियामकाभावात्। इति प्राप्ते, अग्निहोत्रप्रकरणे 'यदेकां समिधमाधाय द्वे आहुती जुहोति' इति विधाय 'कस्यां समिधि द्वितीयामाहुतिं जुहोति' इति प्रश्नस्वरूपेण प्रत्याहुति एकैकसमिदाधानस्य आवश्यकताप्रापणात् नानियमः। अनियमेन प्राप्तस्यार्थस्य अर्थवादादिना नियमनस्य बहुशो दृष्टत्वात्। अन्यथा 'स्रुवेणावद्यति' इत्यादौ शेषिनियमो न स्यात्। अत एव एतस्य अग्निहोत्रप्रकरणस्थत्वाद् अर्थवादत्वाच्च न नियामकतेति केषांचिन्मतं भाष्ये एव निरस्तम्। संकर्ष. २।४।८.

* दर्विहोमेषु 'भिन्ने जुहोति' इत्यादिजुहोतिचोदनाविहितेषु अविहितेतिकर्तव्यताकेष्वपि प्रकृतिविशेषानिर्धारणात् नियतविध्यन्तातिदेशानुपपत्तेः अनियमसर्वातिदेशयोश्च अष्टमाद्ये निराकृतत्वात् अपूर्वत्वेन अष्टमान्ते वक्ष्यमाणेषु यावच्छ्रुतस्य द्रव्यदेवतादेः इतिकर्तव्यताजातस्य संनिपत्योपकारित्वेन नियमापूर्वद्वारा करणापूर्वोत्पत्तिमात्रे पर्यवसायितया अन्यत्रावधारितस्यापि अगत्या आरादुपकारकाङ्क्षाध्यकरणानुग्रहसाधनत्वमपि कल्पितम्। सु. पृ. ३५–३६.

## ⌛ दर्विहोमेषु वचनाभावे सकृत् गृहीतमेव नियतम्॥

दर्विहोमेषु 'चतुर्गृहीतं जुहोति' इत्यादि नियमानुपलम्भात् अनियतसंख्याकगृहीते प्राप्ते प्रथमं गृहीतेनापि होमसंभवात् प्रथमोपस्थितन्यायेनैव संख्या नियम्यते। अत एव 'चतुरुन्नयति, द्विर्जुहोति' इति विधाय 'अथ कथं द्वे आहुती भवतः' इत्यादिनोन्नयनचतुष्के होमचतुष्कस्य आवश्यकता ध्वनितोपपद्यते। संकर्ष. २।४।६.

* दर्विहोमेषु सर्वेषु 'उपांशु यजुषा' इत्यर्थवत्। वा. ३।३।२।९ पृ. ८१३. * दर्विहोमेषु सर्वेषु स्वाहाकारो भवति। भा. १०।८।१०।२०–२२. * दर्विहोमेषु स्वरूपनिष्पादनातिरिक्तः तथा व्यापारो न श्रूयते, नापि अतिदेशेन तत् प्राप्यते। यागीयानां धर्माणां तावन्नातिदेशः, यागत्वेन होमत्वेन च वैलक्षण्यात्। नापि होमीयानाम्, कस्य होमस्य धर्मः कस्मिन् होमे प्रवर्तते इति विशेषनिर्णये प्रमाणाभावात्। (अग्निहोत्र–त्रैयम्बक–नारिष्ठानां धर्मवत्त्वाविशेषत्वादिति भावः) अतो धर्मप्राप्त्यभावात् 'दर्विहोमैः इष्टं भावयेत् कथम्' इत्यु-

त्पन्नाऽपि आकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति । मीन्या. पृ. १९२–९३.

दर्विहोमन्यायः । दर्विहोमशब्दस्य कर्मनामधेयत्वम् ॥

दर्विहोमो यज्ञाभिधानं, होमसंयोगात् । ८।४।१।१॥

भाष्यम्— 'यदेकया जुहुयात्, दर्विहोमं कुर्यात्' इति श्रूयते । अस्मिन् दर्विहोमशब्दे भवति संशयः । किं गुणविधिः उत कर्मनामधेयमिति । किं प्राप्तम् ? दर्विहोमो यज्ञाभिधानम्, कर्मनामधेयमित्यर्थः । कुतः ? होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपसर्जनम्, होमश्च कर्म । अथवा जुहुयादिति कर्मोच्यते । तेन समुच्चितः, यदेकया जुहुयादिति । तस्मात् कर्मनामधेयम् । स्थितं तावत् ततोऽर्थान्तरं प्रक्रियते ।

द्रव्योपदेशाद्वा गुणाभिधानं स्यात् । ५ ॥

भाष्यम्— स्थितादुत्तरमुच्यते । यदुक्तं कर्मनामधेयं दर्विहोम इति, तन्न । किं तर्हि ? गुणाभिधानं स्यात् । गुणविधिरित्यर्थः । कुतः ? द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते, दर्व्या होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः । तस्मात् गुणविधिः ।

न, लौकिकानामाचारग्रहणाच्छब्दवतां चान्यार्थविधानात् । ६ ॥

भाष्यम्— नायं गुणविधिर्युज्यते । किं कारणम् ? लौकिकानां तावदाचारगृहीता दर्विः 'न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति । सा न विधातव्या । श्रौतानामपि अन्यानि होमार्थानि पात्राणि आम्नातानि । 'स्रुवेण जुहोति' 'चमसेन जुहोति' इति । तैः सह दर्वीविकल्पः स्यात् । स चान्याय्यः । यत्कारणं स्रुवादीनां विधायकः शब्दोऽस्ति, 'स्रुवेण जुहोति' इति, न तु दर्वेः । तत्र हि आनुमानिको विधिशब्दः ।

दर्शनाच्चान्यपात्रस्य । ७ ॥

भाष्यम्—अन्यच्च पात्रं दर्विहोमे दृश्यते । 'भूतेभ्यस्त्वेत्यपूर्वां स्रुचमुद्गृह्णाति' इति । तस्मान्न गुणविधिः ।

तथाऽग्निहविषोः । ८ ॥

भाष्यम्— अथोच्येत अग्निहविषोः कार्ये दर्विर्भविष्यति । दर्वौ होमो दर्विहोमः, दर्वेर्वा होमो दर्विहोम इति । तत्र ब्रूमः । तथाऽग्निहविषोरपि । यथा पात्रकार्ये दर्विर्न युज्यते, तथा अग्निहविषोः कार्येऽपि । तत्रापि आहवनीयः आधारत्वेन विहितः 'यदाहवनीये जुहोति' इति, अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मादग्निहविषोरपि कार्ये न दर्वेर्निवेशः ।

उक्तश्चार्थेऽसंबन्धः । ९ ॥

भाष्यम्— उक्तं चास्माभिः अग्नेः कार्ये अन्यत् द्रव्यमसमर्थम् । दहनपचनप्रकाशनकर्म अग्नेः । न चैतत् कार्ये अन्यत् द्रव्यं शक्नोति कर्तुमिति । तस्मात् न अग्निकार्ये दर्वेरुपदेशः । अतो न गुणविधिः । कर्मनामधेयमेव दर्विहोमशब्दः इति ।

सोम—अत्र प्राभाकरैः करिष्यमाणातिदेशापवादार्थतया गुणविध्यादिविचारः इत्युक्तम्, तदयुक्तम् । अर्थवादगतस्य दर्विहोमशब्दस्य आतिदेशिकत्वाप्रसङ्गेन अपवादार्थत्वाभावात् । तस्मात् प्रसङ्ग एवात्र संगतिः । सूत्रार्थस्तु— दर्विहोमशब्दः यज्ञाभिधानं कर्मनामधेयम्, होमसंयोगादिति ।

वि—'दर्विहोमो गुणो नाम वा, गुणो दधिहोमवत् ।
गुणासंभवतो लोकवेदयोर्नाम तद् भवेत् ॥'

भाट्ट— तदेवं सिद्धेऽतिदेशे दर्वीहोमेषु तदपवादं वक्तुं दर्वीहोमशब्दार्थो निरूप्यते । तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यम्, सोमादिवत् विधिवाक्ये श्रवणाभावेन विधायकत्वशङ्काऽनुपपत्तेः । न च वास्तुहोमीयगुणविध्यर्थवादे 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इत्यत्र श्रुतस्य दर्विहोमपदस्य घृतादिपदवत् पदान्तरकल्पनया विधायकत्वसंभवः, 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोति' इति ऋग्द्वयरूपगुणविधेर्द्रव्यापेक्षाभावात् । न च सिद्धवन्निर्देशान्यथाऽनुपपत्त्या 'उपरि हि देवेभ्यो धारयति' इतिवत् वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायकत्वम् । वास्तुहोमे तावत् स्रुचः प्रत्यक्षशिष्टत्वेन विधातुमशक्यत्वात्, होमान्तरेष्वपि स्मार्तेषु 'न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति स्मार्तवचनेनैव तत्प्राप्तेः,

श्रौतेष्वपि 'स्रुवेण जुहोति, चमसेन जुहोति, जुह्वा जुहोति' इत्यादिना तत्रतत्र तत्तत्पात्रान्तरसद्भावाच्च। अतश्च तत्प्रख्यन्यायेन गुणविधित्वानुपपत्तेः दर्विशब्दं पात्रान्तरस्य उपलक्षणमङ्गीकृत्य एकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम्।

मण्डन—'दर्विहोमपदं नाम।'

शंकर—'दर्विहोमे च नामता।'

* यदि केनचिदुपदेशेन वा अतिदेशेन वा (प्रमाणम्) न लभामहे, ततो **दर्विहोमन्यायेन** (८।४।१।१,५–९) विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः। **वा. १।२।१।७ पृ. ११५.**

* **दर्विहोमशब्दः** कर्मनामधेयम्। स्थालीपाकः, अष्टकाः, अग्निहोत्रम्, नारिष्ठहोमाः इत्यादयो लौकिका वैदिकाश्च होमा दर्विहोमाः। एवं जयाः, अभ्यातानाः, राष्ट्रभृतश्च दर्विहोमा एव। **वि. ८।४।१,४.**

**दर्विहोमशब्दः स्मार्तानां श्रौतानां च कर्मणां नामधेयम्॥**

**स लौकिकानां स्यात्, कर्तुस्तदाख्यत्वात्। ८।४। २।२॥**

**भाष्यम्**— यदा कर्मनामधेयम्, तदा चिन्त्यते किं लौकिकानां स्मार्तानां कर्मणामष्टकादीनां नामधेयं दर्विहोमशब्दः, उत सर्वेषामेव लौकिकानां वैदिकानां चेति। किं प्राप्तम्? स लौकिकानां स्यात्। स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात्। कुतः? कर्तुस्तदाख्यत्वात्। तेषां कर्ता, तेन दर्विहोमशब्देन समाख्यायते। 'शिनीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मणः' इति। यश्च यत् करोति, स तेन आख्यायते। यथा लावकः पावक इति। यदि चाष्टकादीनां नामधेयमेतत्, ततस्तेषां कर्मणां कर्ता दार्विहोमिकसमाख्यामर्हतीति। तस्माल्लौकिकानां नामधेयम्।

**सर्वेषां वा, दर्शनाद् वास्तुहोमे। ३॥**

**भाष्यम्**— सर्वेषां लौकिकानां वैदिकानां च नामधेयमेतत्। न लौकिकानामेव। कस्मात्? दर्शनात् वास्तुहोमे। वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति। 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्। पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवतत्वाय' इति। ननु विपरीतमेतद्दर्शनम्, यदेकया जुहुयाद्दर्विहोमं कुर्यात्, अदर्विहोमं सन्तमित्यापद्यते। यदि दर्विहोम एवासौ, तत एकया द्वाभ्यां च हूयमानो दर्विहोम एव भवति। तत्रैतद्दर्शनं नोपपद्यते। यदेकया जुहुयाद्दर्विहोमं कुर्यादिति। **अत्रोच्यते**। यदि लौकिकानामेव नामधेयम्, न वैदिकानाम्, तत एकयाऽपि हूयमानोऽसौ नैव दर्विहोमो भवति अलौकिकत्वात्, तत्रैतद्वचनं नोपपद्यते यदेकया जुहुयाद्दर्विहोमं कुर्यादिति। तस्मात् ज्ञापकमेवेदं वैदिकानां दर्विहोमत्वे। एवमपि ज्ञापकमुक्तम्, कुतः प्राप्तिः? उच्यते। होमशब्दस्य सामान्याभिधायित्वात् प्राप्तिः। तस्माल्लौकिकवैदिकानां नामधेयमेतत्।

वि— 'लौकिकस्योत सर्वस्य नामा, ऽऽद्योऽम्बष्ठवाक्यतः।, निमित्तसाम्याद् वेदेऽपि तदुक्तेः सर्व-नाम तत्॥'

भाट्ट— ('अधिकरणत्रयार्थः प्रथमाधिकरणे एव भाट्टदीपिकायां निवेशितः। तत्रत्यं प्रकृतद्वितीयाधिकरणोपयुक्तं पृथक् कृत्वा अस्माभिरत्र निवेश्यते।) तत्रापि यथैव स्मार्तानां पार्वणस्थालीपाकादीनां कर्तरि दार्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयम्, तथैव वास्तुहोमे प्रयोगात् श्रौतानामपि। न च वास्तुहोमस्य एकया ऋचा करणे दर्विहोमत्वप्रसक्त्यभिधानात् वस्तुतो दर्विहोमत्वाभावप्रतीतेः अस्य प्रयोगस्य विरुद्धत्वमिति वाच्यम्। दर्विहोमपदस्य स्मार्तमात्रनामत्वे वास्तुहोमे एकया ऋचा क्रियमाणेऽपि दर्विहोमत्वानापत्तेः अस्यार्थवादस्य ज्ञापकविधया श्रौतेष्वपि होमेषु दर्विहोमपदप्रवृत्तिसाधकत्वात्। अतः सर्वनामधेयम्।

मण्डन— 'लौकिके वैदिके च तत्।' तत् दर्विहोमपदम्।

शंकर— 'नामैतद् वैदिकानामपि।'

**दर्विहोमशब्दः होमानामेव नामधेयम्, न यागानाम्॥**

**जुहोतिचोदनानां वा, तत्संयोगात्। ८।४।३।४॥**

**भाष्यम्**— लौकिकानां वैदिकानां च नामधेयं

दर्विहोमशब्द इति स्थितम् । इदानीं चिन्त्यते किं यजतिचोदनानां जुहोतिचोदनानां च सर्वेषां नामधेयम्, उत जुहोतिचोदनानामेवेति । अविशेषात् सर्वेषाम् । इति प्राप्ते, उच्यते । जुहोतीनां नामधेयं न यजतीनाम् । कुतः ? तत्संयोगात् होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ।

वि—'यजतेरपि नाम स्याज्जुहोतेरेव वा, ऽग्रिमः । अविशेषेण, मुख्यत्वाज्जुहोतेर्लक्षणाऽन्यथा ॥'

भाट्ट— तत्रापि होमपदश्रवणात् होमानामेव, न तु यागानाम् । न च यागस्थलेऽपि 'चतुरवत्तं जुहोति' इत्यनेन होमविधानात् तन्नामत्वोपपत्तिः, तत्रत्यजुहोतिना प्रक्षेपमात्रस्यैव प्रतिपत्तिरूपस्य लक्षणया विधेयत्वेन तस्य मुख्यहोमत्वाभावात् । अतो होमनामधेयमेवेदम् । इदं च सिद्धमेवोत्तरविवक्षार्थं प्राप्यते ।

मण्डन— 'जुहोतेरेव नामैतत् ।'

शंकर—'अत्र स्याद् होमनामता ।'

* दर्शः । चन्द्रमसः अदर्शनात् शक्यते दर्श इति वक्तुं विपर्ययहेतुत्वेन । वा. २।२।३।३ पृ. ४८१. * दर्शो न पौर्णमासीविकारः न वा पौर्णमासी दर्शविकारः । वि. ५।१।१६, * दर्शः पूर्वयोर्दधिपयसोर्नाशे पयोन्तरेण दध्यन्तरेण चानुष्ठेयः । ६।४।१०.

## दर्शस्याङ्गं हविरार्तिनिमित्तकः पञ्चशरावयागः ॥

**स प्रत्यामनेत्, स्थानात् । ६।४।१०।३०॥**

भाष्यम्— स एष नैमित्तिको यागः, किममावास्यां प्रत्यामनेत्, नेति । किं प्राप्तम् ? स प्रत्यामनेत् । स एष यागः अमावास्यां प्रत्याम्नातुमर्हति । कुतः ? स्थानात् । यागे विनष्टे याग एष श्रूयमाणो यदि न नष्टस्याङ्गम्, ततोऽर्थवान् भवति । अथाङ्गम्, निष्प्रयोजनस्यार्थे क्रियमाणं निष्प्रयोजनमेव भवितुमर्हति । विगुणं च निष्प्रयोजनमेव । विनष्टमामावास्यं इति प्रत्यक्षम् । इदमपि कर्तव्यमिति शाब्दम् । यत् विनष्टम्, तत् निष्फलमिति न कर्तव्यम् । इदं च कर्तव्यमिति प्रत्याम्नायोऽवगम्यते ।

टुप्— अमावास्याऽभावः द्रव्याभावात् । ततः किम् ? आह, कर्माभावेन (अकर्तव्यतात्मा–) प्रतिषेधो लक्ष्यते, प्रतिषेधेन स्वकार्यम् (लक्ष्यते) । पञ्चशरावोऽपि दर्शाभावे विधीयमानः प्रयोजनाभिलाषी । तस्मात् (साकाङ्क्षत्वात्) अभावेन यत् (प्रयोजनं दर्शसाध्यम्) लक्ष्यते, तत् साधयन् एकवाक्यतां दर्शेन याति, फलसाधनस्य नाङ्गं भवति । अयथाश्रुतकरणे फलवत्त्वाभावः । फलवत्त्वाभावात् (पञ्चशरावस्यापि) तदङ्गत्वाभावः, अफलसाधनस्य यत् अङ्गम्, तत् अनर्थकं (स्यात्) ।

**अङ्गविधिर्वा, निमित्तसंयोगात् । ३१ ॥**

भाष्यम्— अङ्गं वा एतत् विधीयते । हविषः आर्तौ निमित्ते यागः श्रूयते । तत्र त्रयमापतति, यद्वा निमित्ते स्वतन्त्रं कल्प्यं फलम्, यद्वा अमावास्यायाः यत् कार्यं तदस्य, यद्वा तस्याङ्गमिति । स्वातन्त्र्यं तावत् न, कल्प्यत्वात् फलस्य । नामावास्यायाः कार्ये । किं कारणम् ? अश्रवणात् । नैवं श्रूयते, तस्याः कार्ये वर्तते इति । कर्तव्योपदेशेनापि नान्यतमाध्यवसानम् । त्रिष्वपि पक्षेषु विवक्षितेषु कर्तव्योपदेशः अवकल्पते । ननु एवमभिसंबन्धो भविष्यति 'यस्योभयं हविः आर्तिमार्छेत्, स एतेन यागेन साधयेत्, यत् साधयितुकामः । किं चासौ साधयितुकामः ? यत् अमावास्यायाः फलम्' इति । अत्रोच्यते । फलपदेन संबन्धाभावात् संबन्धस्य विधायकं वाक्यम् । श्रुत्या च यागकर्तव्यता विधीयते, सा च वाक्यात् बलीयसी । तस्मान्न तत्कार्ये वर्तते इति । किं तर्हि प्रयोजनम् ? तस्या अमावास्यायाः अङ्गम् । ननु एतदपि नास्ति 'तस्या अङ्गम्' इति, तत्रोच्यते । तत्संबन्धेन समाम्नानात् तत्प्रयोगवचनेन गृह्यते 'दर्शपूर्णमासाभ्यां फलं साधयेत् सर्वैरङ्गैः सह, अस्यां च आर्तौ एष यागः इतिकर्तव्यता' इति । तस्मादेवमवगम्यते 'विनष्टे हविषि आमावास्यं यन्न शक्नोति स्वकार्यं कर्तुम्, तत् अनया इतिकर्तव्यतया सहितं शक्नोति' इति । तस्मात् निमित्ते कर्म अङ्गमिति ।

टुप्— आरब्धं कर्म (येन केनापि द्रव्येण) अवश्यं समापनीयम् । तस्मात् दर्शकर्मणो नास्त्यभावः ।

तद्भावात् ( दर्शस्य भावात् ) तत्कार्यस्य लक्षकं नास्ति । न ( च ) दर्शे प्रतिषिध्य पञ्चशरावो विधीयते । यथा गिरापदं प्रतिषिध्य इरापदम् ( विधीयते ) । तत्र इरापदस्य गिरापदं कार्ये लक्षयति प्रतिषिध्यमानम्, एवमिह नास्ति ( प्रतिषेधो, येन कार्यं लक्षयेत् ) । तस्मात् पञ्चशरावविधावपि कार्यापत्तेरभावात् दर्शस्थानापत्तिर्नास्ति । यथाश्रुताकरणात् ( यथाश्रुतेन द्रव्येण अकरणात् दर्शस्य यः— ) दोष उपजायते, तन्निर्घातापेक्षायां विधीयमानम् ( कर्म ) तद्दोषप्रतिसमाधानार्थत्वेन ( दर्शेन— ) एकवाक्यतां याति । ( तस्मात् अङ्गमिति सिद्धम् ) ।

शा— पञ्चशरावयागः अमावास्यायाः प्रत्याम्नायः स्यात् । '**स्यादेवं यद्यमावास्या निवृत्ता, न तु सा तथा । पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात् ॥**'

**सोम—** प्रासङ्गिकी **संगतिः** । 'अथोत्तरस्मै हविषे वत्सानपाकुर्यात्' इति वचनेन पुनःप्रयोगस्य पक्षद्वयेऽपि आवश्यकतया पुनःप्रयोगाप्रयोगाभ्यां अनुष्ठानविशेषाभावेऽपि पूर्वपक्षे दर्शस्थानापत्त्या तद्धर्मनियमः, न तु सिद्धान्ते । तथा पञ्चशरावयागभ्रेषे पूर्वपक्षे प्रधानभ्रेषप्रायश्चित्तम्, इत्येवं विशेषो बोध्यः ।

**वि—** 'दर्शे प्रत्याम्नाय एतदङ्गं वा, हविरार्तितः । दर्शयागे निवृत्तेऽस्य प्रत्याम्नायतया विधिः ॥, पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात् । अनिवृत्तेस्तदङ्गं स्यादार्तिवैगुण्यहानये ॥'

**भाट्ट—** तदिदं कर्मान्तरं द्रव्यनाशप्रयुक्तवैगुण्यपरिहारार्थत्वेन सांनाय्याङ्गतया विधीयते, न तु तत्फलार्थे तत्स्थाने तत्फलस्य पापक्षयादेः शिष्टविगर्हणनिमित्तकस्य वा सांनाय्ययागेनैव सिद्धेः साधनान्तरानपेक्षत्वात् । नहि द्रव्यनाशे यागलोपः, द्रव्यान्तरोत्पत्त्या आज्येन वा तत्समापनोपपत्तेः । न च स्वर्गादिरूपस्य फलस्य वैगुण्ये सति अनुत्पत्तेः, तस्य साधनापेक्षायां यागस्य विधानम् । इति वाच्यम् । तथात्वे तत्कामनाऽभावे तदनुष्ठाने निमित्तश्रुतेः संकोचापत्तेः । अतः अपेक्षितवैगुण्यसमाधानार्थत्वेनैव अस्य विधानम् । अपेक्षा च सांनाय्ययागस्यैवेति तस्यैव विशिष्योपस्थितत्वात् तद्वाचकपदकल्पनया वाक्यात् तदङ्गत्वमेव, न तु प्रकरणात् सर्वाङ्गत्वम्, अनुष्ठानसादेश्यात् दर्शमात्राङ्गत्वं वा । अत एव नाशे निमित्ते प्रयोगान्तःपात्येव इदमङ्गम्, न तु क्षामनिमित्तकपुनःप्रयोगवत् प्रयोगबहिर्भूतम् ।

**मण्डन—** 'दर्शस्य नैमित्तिकमङ्गमेषः । ' पञ्चशरावयागः ।

**शंकर—** सा च क्रिया स्याद् दर्शाङ्गम् । '

* दर्शस्य द्व्यहकालत्वं पर्वणि अग्न्यन्वाधानम्, इध्मस्य बर्हिषश्च संपादनम्, प्रतिपदि इष्टिः इति । विकृतिषु तु सद्यस्कालत्वम् । **वि.** ५।४।७, * दर्शस्य पिण्डपितृयज्ञो नाङ्गम्, किन्तु पुरुषार्थं कर्मान्तरम् । तस्य च कालः अपराह्णः 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति वचनात् । ४।४।८, * दर्शस्य पूर्णमासस्य च एकस्मिन् प्रयोगे प्रयाजाद्यङ्गानां सकृदनुष्ठानम् । फलभूमाधिकरणम् । ११।१।७, * दर्शस्य पूर्णमासस्य च सङ्घभेदेन प्रयोगभेदे अङ्गानामावृत्तिः । इष्टिराजसूयाधिकरणम् । ११।२।३. * दर्शे अभ्युदितेष्टौ नैमित्तिको देवताऽपनयः । **भा.** ६।५।११–९.

**⧗ दर्शे आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा सांनाय्यस्य तत् कर्तव्यम् । मुख्यक्रमः प्रवृत्तिक्रमात् बलीयान् ॥**

**अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् । ५।४।२।२ ॥**

**भाष्यम्—** स्तो दर्शपूर्णमासौ । तत्र पूर्वं दध्नो धर्माः समाम्नाताः पश्चादाग्नेयस्य । प्रदानं च आग्नेयस्य पूर्वम् । तत्र संदेहः किं प्रावृत्तिकेन क्रमेण पूर्वं दध्नः अवदानाभिघारणासादनानि, उत मुख्यक्रमेण पूर्वमाग्नेयस्येति । किं प्राप्तम् ? अनियम इति । एवं प्राप्ते, ब्रूमः । अवदानादिषु प्रावृत्तिकेन पूर्वं दध्नः इति । कुतः ? एवं अनुज्ञातेभ्यो व्यवधायकेभ्यो नाभ्यधिकः अन्यो वा व्यवधायकः कल्पितो भविष्यति । दर्शयति च 'दध्नः पूर्वमवदेयम्' इति ।

टुप्—अवदानाभिघारणासादनेषु ( आनुपूर्व्यं प्रवृत्त्या स्यात् ) ( सूत्रभाष्ययोः अवदानाभिघारणग्रहणं प्रधान-

चतुरवत्तावयवभूतावदानाभिघारणविषयं मा, विज्ञायि इत्याह— ) स्विष्टकृदवदानं प्रयाजशेषाभिघारणं बर्हिषि हवींष्यासादयति इत्युदाहरणानि । ( तत्र ) प्रावृत्तिक-मुख्यक्रमयोः कतरो बलीयान् इति विचारः । ( पूर्व-पक्षमाह— ) तत्र दध्नः प्रथमं धर्माः प्रक्रान्ताः । यदि तथैव प्रवृत्त्या तस्य आसादनादीनि प्रथमं क्रियन्ते, ततो भवति अङ्गानां प्रधानासत्तिः ( प्रधानप्रयोगविहिताङ्गानां परस्परप्रत्यासत्तिरित्यर्थः ) इतरथा ( मुख्यक्रमेण क्रिय-माणे सति ) अन्यस्य ( आग्नेयस्य ) प्रथमं क्रियेरन्, तत्र ( दधिधर्माणां पूर्वं प्रक्रान्तानां पश्चात् क्रियमाणानां मिथः अत्यन्तम्— ) व्यवधानात् प्रधानप्रत्यासत्तिर्बाध्येत ( परस्परप्रत्यासत्तिरित्यर्थः । तदेव दर्शयति ) प्रयोगवचनेन साहित्यात् ( अमावास्यागतत्रिकस्यापि साहित्यात् अनुप-पत्त्या ) यावद्भिः क्षणैर्व्यवधानमनुज्ञातम्, तावद्भ्यः अधिकैरपि कृतं स्यात् ( तच्चायुक्तम् । तस्मात् दध्नः प्रथमं कार्याणि ) ।

**यथाप्रदानं वा, तदर्थत्वात् । ३ ॥**

**भाष्यम्**— यथाप्रदानं वा कर्तव्यानि । यस्य प्रदानं पूर्वम्, तस्यावदानानि पूर्वम्, पश्चादाग्नेयस्य । कुतः ? प्रदानचोदनागृहीतत्वात् अवदानादीनाम् । प्रदानोपक्रमा एते, न पृथक्पदार्था इत्युक्तम् ( ५।२।४।६ ) । अभि-घारणमवदानं च तस्य प्रदानचिकीर्षयैव क्रियते । आसा-दनमपि प्रदानार्थमेव आसन्नकरणम् । एवं दृष्टार्थता भवति तस्मात् मुख्यक्रमेणाङ्गानां प्रयोग इति । यत्तु दध्नः पूर्वं प्रवृत्तिरिति । अर्थात् पूर्वं प्रवृत्तिः, न पाठात् । प्रावृत्तिकाच्च मुख्यक्रमो बलीयान् । मुख्यक्रमे गृह्यमाणे प्रथम एकः पदार्थो विप्रकृष्टकालः स्यात् । प्रावृत्तिके पुन-र्गृह्यमाणे सर्वेषां विप्रकर्षः । तस्मात् मुख्यक्रमो बलीया-निति । अथ यल्लिङ्गमुक्तम्, दध्नः पूर्वमवदेयमिति । अत्रोच्यते । श्रुताभिप्रायमेतद्भविष्यति । तस्माददोषः ।

**टुप्**— ( सत्यम् ) दध्नः पाठात् ( पूर्वेद्युः केचन धर्माः ) पूर्वं क्रियन्ते, अपरेद्युः पाठक्रमादेव आग्नेयस्य ( निर्वापादयः ) पूर्वं ( भवन्ति ) । एतावति विषये मुख्यप्रावृत्तिकौ नावतरतः, पाठक्रमस्य प्रत्यक्षत्वात् । वेद्यासादने तु नास्ति पाठः कस्य पूर्वमासादनमिति । तत्र यदि दध्नः पूर्वं प्रवृत्ताः इति कृत्वा तस्यैव आसा-दनं ( प्रथमम् ) क्रियते, तथा सति प्रधानक्रमेण आग्नेयस्य ( पूर्वमासादनं ) कृत्वा ( पश्चात् ) अन्येषां कर्तव्यम्, इति ( एतत् ) नानुगृह्येत । कुतः ( पुनर्मुख्य-क्रमः ? अत आह— ) पाठाद्धि प्रथममाग्नेयः, ततो दधि, ततः पयः इति ( हेतोः । यद्यपि ) एकैकमेव एषां ( आग्नेयादीनां प्रधानानां स्वीयां ) इतिकर्तव्यतां संनि-हितामभिलषति ( तथापि ) सहत्वयोगात् द्विक्षणव्यवहितं (आसादनाद्यङ्गं) एकैकं प्रधानमभिलषति । (ततः किम् ? तदाह— ) प्रत्यक्षपाठात् ( एव आग्नेयादीनामवगतः क्रमः । तेषां च एकैकस्य स्वीया धर्माः क्षणद्वयव्यवहिताः कर्तव्याः इति ) पूर्वं पूर्वस्य धर्माः ( कर्तव्याः ) ततो द्वितीय-तृतीययोः । तत्र यदि दध्नः पूर्वं क्रियेरन्, तथा सति पूर्वमासादनमनुभवितव्यम्, इति यः अवगतः प्रधानेन अङ्गानां क्रमः, स बाध्येत । ( भाष्यमनूद्य आक्षिपति— ) **प्रदानोपक्रमा एते न पृथक् पदार्थाः इत्युक्तम् ।** अग्रन्थोऽयम् । ( अग्रन्थत्वे हेतुस्तु वार्तिके नोक्तः । स तु तन्त्ररत्ने इत्थम्— नहि एतेषां पृथक्पदार्थत्वं क्वचिद-प्युक्तम् । अथ प्रदानाभिघारणाभिप्रायमिदं भाष्यम्, तदयुक्तम् । तस्य अनुदाहरणत्वात् । न च तदेवोदाहरण-मिति शक्यं वक्तुम् । पूर्वमेव अवदानादेः प्रदानान्तस्य एकपदार्थत्वप्रसाधनात् । ... तस्मात् स्विष्टकृदवदान-विषयमेव यथाकथञ्चित् भाष्यं व्याख्येयम् ) ।

**लिङ्गदर्शनाच्च । ४ ॥**

**भाष्यम्**— लिङ्गमपि एतस्मिन्नर्थे भवति । 'स वै ध्रुवामेव अग्र अभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति । तस्मादपि मुख्यक्रमेण नियम इति ।

**टुप्**— ( लिङ्गदर्शनाच्च इति सूत्रार्थमाह— ) लिङ्ग-दर्शनं च इममेव न्यायं दर्शयति 'यस्य पूर्वमवदानम्, तस्य पूर्वमभिघारणम्' हेतुवन्निगदेनार्थवादेन । अतः तुल्यन्यायत्वात् इतरेष्वपि तथैव भवितुमर्हति । ( तस्मा-न्मुख्यक्रमेण नियमः इति ) ।

**सोम**— मुख्यार्थपाठानां मुख्यत्वात् तद्बलाबलचिन्ता-ऽनन्तरं जघन्यप्रमाणानां बलाबलचिन्तनात् संगतिः ।

वि—' अवदानादि सांनाय्ये पूर्वमाग्नेयकेऽथवा ।, धर्मप्रवृत्तिक्रमतः सांनाय्ये पूर्वतोचिता ॥, प्रदानं पूर्वमाग्नेयेऽवदानं च तयोचितम् । अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबलित्वतः ॥ ' ननु अवदानादिः प्रदानान्तः एकः पदार्थः इत्युक्तम्, तत्र कुतः क्रमविचारः ? एवं तर्हि कृत्वाचिन्ता अस्तु । अथवा स्विष्टकृदवदानादिविषया इयं चिन्ता अस्तु ।

भाट्ट— एवं मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधः । यथा दध्नः पाठादर्थाच्च पूर्वे धर्मा दोहनादयः, पश्चादाग्नेयस्य निर्वापादयः । तत्प्रवृत्तिक्रमेण च हविरासादनप्रयाजशेषाभिघारणस्विष्टकृदवदानादीन्यपि कर्तव्यत्वेन प्राप्तानि मुख्यक्रमात् प्रथममाग्नेयस्य कार्याणि, पश्चाद्दध्नः । प्रधानानां हि पाठादेव प्रथममाग्नेयस्य, पश्चात् सांनाय्यस्यानुष्ठानम् । यद्यपि च आसादनादीनां याज्याऽनुवाक्याप्रवृत्तिक्रमात् तादृशानुष्ठानमपि प्रसज्यते इति भूतभाविप्रवृत्तिक्रमाभ्यासनियमप्रसक्तौ मुख्यक्रमस्य नियामकत्वमात्रमिति नेदं विरोधोदाहरणं संभवति, तथापि अन्यदेतादृशोदाहरणं मृग्यम् । दूषकताबीजं तु मुख्यक्रमे प्रधानप्रत्यासत्त्यनुग्रहः । प्रवृत्तिक्रमे तु अङ्गानां परस्परप्रत्यासत्तिः । अतस्तस्य बाधः । अत्र न प्रधानावदानमुदाहरणम्, तस्य प्रदानेनैकपदार्थत्वस्य स्थापितत्वात् ।

मण्डन—' ग्राह्यं मुख्यम्, न प्रवृत्तिर्विरोधे । '

शंकर—' प्रवृत्तेर्मुख्यतस्तथा । ' बाधः ।

* दर्शे आग्नेयसांनाय्ययोः क्रमः मुख्यक्रमेण । रत्न. ५।१।१।१. * दर्शे आतञ्चनं दध्नो द्व्यहकालीनत्वेन पूर्वेद्युरित्यर्थसिद्धम् । वि. ६।५।१. * दर्शे इन्द्राग्नी-इन्द्र-महेन्द्राः पुरुषभेदेन व्यवस्थिताः । मीन्या. * दर्शे दोहः दध्यर्थः, दध्नो द्व्यहकालसाध्यत्वेन पूर्वेद्युरित्यर्थसिद्धम् । वि. ६।५।१, * दर्शे दोहः नित्याग्निहोत्रादौ यज्ञोपवीतिना कार्यः । प्रेताग्निहोत्रे तु प्राचीनावीतिना कार्यः । ३।४।२,४, * दर्शे दोहौ द्वौ पूर्वेद्युः सायम्, स दध्यर्थः । यागदिने प्रातश्च, स पयोऽर्थ एव । ३।६।८, * दर्शे दोह्योः एकस्य द्वयोर्वा नाशे ऐन्द्रः पञ्चशराव ओदनः प्रायश्चित्तम् । ६।४।६। तच्च कर्मान्तरम् । ६।४।९। तच्च दर्शाङ्गम्, न तु दर्शस्य प्रतिनिधिः। ६।४।१०, * दर्शे निर्वापः व्रीहीणाम्, पूर्वेद्युर्विकल्पितः । ६।५।१. * दर्शे पूर्णमासे च पार्वणहोमस्य अन्यतरस्यैवानुष्ठानम् । भा. ९।२।१९।५६–५७. * दर्शे पूर्वेद्युर्वेदिः, यागदिने निर्वापादिअभिवासनान्तम् । नात्रापकर्षो नाम । वि. ५।१।१६. * दर्शे प्रधानाङ्गयोः कालभेदः ( कियांश्चित् ) ' पूर्वेद्युरमावास्यायां वेदिं करोति' इति वचनात् । भा. ११।३।१।१. * दर्शे ' प्राचीमाहरेत् ' इति वृक्षस्य प्राग्गता शाखा लक्ष्यते । शाखावादः । वि. ४।२।२.

⌛ दर्शे वत्सापाकरणकालेन व्रतसंयोगः असंनयत्पक्षेऽपि ॥

कालश्चेत् संनयत्पक्षे तल्लिङ्गसंयोगात् । ६।४।१३।४१ ॥

भाष्यम्— कालार्थः संयोग इत्येतत् समधिगतम् । इदानीं संदेहः किं संनयत्पक्षे एव कालः, उत असंनयतोऽपीति । किं प्राप्तम् ? संनयत्पक्षे । कुतः ? एवं श्रूयते ' पुरा वत्सानामपाकर्तोः ' इति । न चासंनयतो वत्सापाकरणमस्ति । तस्मात् संनयत्पक्षे एष कालः । अपाकरणं लिङ्गमिति ।

कालार्थत्वाद् वोभयोः प्रतीयेत । ४२ ॥

भाष्यम्—वाशब्दः पक्षं व्यावर्तयति । न संनयत्पक्षे एव । असंनयतोऽपि एष कालः स्यात् । कुतः ? कालार्थत्वात् । न वत्सापाकरणेन व्रते किञ्चित् प्रयोजनमस्ति । कालेन तु प्रयोजनम् । येन च तत्र प्रयोजनम्, स लक्ष्यते । कथं पुनर्वत्सापाकरणं कालार्थमिति ? परार्थत्वात् । पयसे हि ते अपाक्रियन्ते । तथाहि दृष्टार्थता भवति । इतरथा अदृष्टार्थता स्यात् । तस्मान्नोपादेयत्वेन वत्सापाकरणं श्रूयते इति । यत्तूक्तं तल्लिङ्गसंयोगात् संनयत्पक्षे एवेति । तन्न । असंनयतोऽपि कालाहानात् । यस्यापि न सांनाय्यम्, तस्यापि वत्सापाकरणमेव न स्यात्, न तु वत्सापाकरणकालोऽपि । कालेन च नः प्रयोजनम्, न वत्सापाकरणेन । यथा शङ्खवेलायामागन्तव्यमिति । यस्मिन्नपि ग्रामे शङ्खो नाध्मायते तस्मिन्नपि शङ्खाध्मानकालोऽस्तीति, नागमनं परिहास्यते ।

एवमिहापि असत्यपि वत्सापाकरणे, तत्काले विद्यमाने, व्रतं तस्मिन् काले न परिहास्यते इति ।

सोम--सूत्रे तल्लिङ्गसंयोगात् तस्य कालस्य यत् लिङ्गं चिह्नम्, तत्संयोगादित्यर्थः ।

वि--' सांनाय्यिनः स कालः स्यादितरस्यापि वा, ऽग्रिमः । वत्सत्त्वात् लक्ष्यकालो ह्यन्यस्याप्यस्त्यतोऽन्तिमः ॥ '

भाट्ट--यद्यपि वत्सापाकरणं कालोपलक्षणं न तु स्वयमङ्गम्, परार्थत्वात् । तथापि तदभावे कालस्यैव ज्ञातुमशक्यत्वात् सांनाय्ययाजिन एव वत्सापाकरणसत्वात् व्रतम् । अत एव एकपुरोडाशायामग्नीषोमीयाभावेऽपि आग्नेयसत्त्वात् कालोपलक्षणसत्त्वेन उपांशुयाजेऽपि न क्षतिः । इति प्राप्ते, ' शङ्खवेलायामागन्तव्यम् ' इत्यादौ उपलक्षणापायेऽपि उपलक्ष्यानपायात् वत्सापाकरणाभावेऽपि अन्वाधानपश्चाद्भावरूपतत्कालानपायात् सांनाय्याभावेऽपि कर्तव्यमेव व्रतम् ।

मण्डन--' असंनयत्स्वप्ययमेव कालः । '

शंकर--' असांनाय्येऽप्यसौ भवेत् । '

* दर्शे वेद्याः पूर्वेद्युरपकर्षेऽपि हविरभिवासनान्तस्य नापकर्षः । वेदिकरणन्यायः । भा. ५।१।१६।२९, * दर्शे शाखा छेदनाहरणपरिवासनानां प्रयोजिका । उपवेषाधिकरणम् । ४।२।३।८-९. * दर्शे ' शाखया वत्सानपाकरोति ' । वि. ४।२।२, * दर्शे शाखाऽऽहरणं दोहधर्मः उभयदोहार्थः । ३।६।८.

⌛ दर्शे शाखाऽऽहरणादयो धर्माः दोहद्वयार्था एव, न केवलं सायंदोहार्थाः ॥

**दोहयोः कालभेदादसंयुक्तं शृतं स्यात् । ३।६।८। २८ ॥**

भाष्यम्-- अस्ति सायंदोहः, तथाऽस्ति प्रातर्दोहः । सन्ति तु दोहधर्माः शाखाहरणम्, गवां प्रस्थापनम्, प्रस्नावनम्, गोदोहनमित्येवमादयः । ते किं सायंदोहार्थाः उत उभयार्था इति । किं तावत् प्राप्तम् ? दोहयोस्तयोः, असंयुक्तं धर्मैः शृतं भवेत् । कस्मात् ? सायंदोहस्य हि क्रमे औपवसथ्येऽहनि शाखाहरणादीन् समामनन्ति । तस्मिन्नेवाहनि सायंदोहः । तस्मात् क्रमात् सायंदोहार्था इति दोहधर्मा ।

वा-- एवं क्रमस्याविरोधं दर्शयित्वा इदानीं विरोधं दर्शयति । शाखाहरणादीनामौपवसथ्ये देशसामान्यात् अवान्तरप्रकरणाद्वा दध्यर्थत्वं प्राप्नोति ।

**प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् । २९ ॥**

भाष्यम्-- प्रकरणं हि साधारणम् । यथैव दध्न एवं पयसः । क्रमाच्च प्रकरणं बलवत्तरम् । तस्मादुभयार्था दोहधर्माः । अपि च, न सायंदोहस्य पूर्वेद्युराम्नानम् । क तर्हि ? उत्तरेद्युः । कथम् ? एवमामनन्ति, ' ऐन्द्रं दध्यमावास्यायाम् ' ' ऐन्द्रं पयोऽमावास्यायाम् ' इति । अमावास्यायां हि उभयं साङ्गं चोद्यते । स एष सायंदोहः अर्थात् पूर्वेद्युरनुष्ठीयते । स्वभाव एष दध्नः, यत् पूर्वेद्युरुपक्रान्तं अपरेद्युरभिनिर्वर्तते । तस्मात् सायंदोहस्य क्रमे आम्नाता इत्येतदेव तावन्नास्ति । अत उभयार्था दोहधर्मा इति ।

वा-- प्रधानं धर्मदेशे क्रियमाणं क्रमं प्रतिपद्यते । पठ्यमानं च अवान्तरप्रकरणम् । दधियागस्तु अमावास्यायां पठ्यते क्रियते च । तस्मात्तुल्यं पयसा । दधित्वसिद्ध्यर्थास्तु केचित् तस्य धर्माः पूर्वेद्युः क्रियन्ते । न च ते शाखाऽऽहरणादीनां ग्राहकाः ' गुणानां च परार्थत्वादसंबन्धः ' इति स्थितत्वात् । तस्मादुभयसंयुक्तस्य शाखाहरणादेर्वचनात् पूर्वेद्युःकरणं न दध्यर्थत्वात् इत्यदोषः ।

सोम-- प्रयोजनम्-- पूर्वपक्षे प्रातर्दोहार्थं वत्सापाकरणं शाखयैव कर्तव्यं इति नियमाभावः । तथा सायंदोहनिर्वृत्त्यनन्तरं शाखानाशे प्रातर्दोहार्थं न शाखान्तरं संपाद्यम्, सिद्धान्ते तु तदुभयविपर्ययः इति । सूत्रार्थस्तु-- दोहयोः कालभेदात् सायंदोहस्यैव स्थानम्, न प्रातर्दोहस्य । तेन शृतं पयोधर्मैः असंयुक्तं स्यादिति ।

वि--' शाखाछेदादयो दोहे धर्माः सायं व्यवस्थिताः । प्रातश्च सन्ति वा, सायं स्थानात् ते पूर्ववत् स्थिताः ॥, आनर्थक्यप्रतिहतिः पूर्ववन्नेह विद्यते । बलिनोऽतः प्रकरणात् प्रातर्दोहेऽपि सन्ति ते ॥ '

भाट्ट-- दर्शपूर्णमासयोः दधि पूर्वेद्युः अपरेद्युश्च पयः उत्पाद्यते । दोहधर्माश्च शाखाऽऽहरणादयः पूर्वेद्युः क्रियन्ते । तेषामनुष्ठानसादेश्यात् दधिमात्राङ्गत्वम् । इति

प्राप्ते, यद्यपि स्थानं भवेत्, तथापि प्रकरणेन तद्बाधः। न हि अत्र पूर्ववत् क्लृप्तोपकारत्वादिना प्रकरणाभावः शङ्कितुं शक्यः। न च स्थानमपि दधियागस्यास्ति, उत्तरेद्युरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि न आनर्थक्यमिया अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकम्। न च स्मारकविषयैव दध्नैव यागोपस्थितेः स्थानशङ्का, तादृशोपस्थितेः नैयत्याभावेन ग्राहकत्वानुपपत्तेः। किञ्च दोहधर्माः परेद्युरेवाम्नाताः, तत्रैव भाव्यापेक्षायां प्रकरणादुभयार्थत्वेन अवगम्यमानाः पूर्वेद्युरनुष्ठीयमानदधिसिद्ध्यर्थं पूर्वेद्युस्तन्त्रेण क्रियमाणा अपि न तन्मात्रार्था भवन्ति। दोहनादयस्तु सामर्थ्यादेव आवर्तन्ते इति विशेषः।

मण्डन— 'दोहद्वये दोहगुणः समत्वात्।'

शंकर— 'समानो दोहयोर्विधिः।' ९.

* दर्शे शाखाछेदनादीनां उपवेषो न प्रयोजकः, किन्तु वत्सापाकरणं प्रयोजकम्। वि. ४।२।३. * दर्शे शाखाछेदन – आहरण – परिवासनानां वत्सापाकरणमेव प्रयोजकम्, न कपालोपधानमपि। तथा छेदनादीनां अग्रार्थत्वमेव, न तु मूलार्थत्वमपि। भा. ४।२।३।८–९. * दर्शे शाखाप्रहरणं प्रतिपत्तिः, नार्थकर्म। शाखाप्रहरणाधिकरणम्। के. ४।२।४।१०–१३. * दर्शे शाखाप्रहरणं प्रस्तरेण सह अग्नौ। वि. ४।२।३.

ꕥ दर्शे शाखाप्रहरणं प्रस्तरप्रहरणकाले ॥

प्रस्तरे शाखा, श्रयणवत्। ६।४।१४।४४ ॥

भाष्यम्— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्र श्रूयते 'सह शाखया प्रस्तरं प्रहरति' इति। तत्र संदेहः किं शाखा प्रस्तरस्याङ्गभूता, अङ्गप्रयोजनसंबन्धस्तयोः। अथ कालार्थः संयोगः, प्रस्तरप्रहरणकाले शाखा प्रहर्तव्येति। किं प्राप्तम्? प्रस्तरे शाखा श्रयणवत्। प्रस्तरस्य अङ्गभूता शाखा। कुतः? सह शाखया प्रस्तरं प्रहरतीति सहयुक्ते अप्रधाने तृतीया विभक्तिर्भवति। सा च शाखायां तृतीया। तस्मात् प्रतरस्य शाखा गुणभूता। प्रस्तरे च द्वितीया। सहयोगे च तृतीया गुणतः, द्वितीया प्रधानतः। ननु न शाखया प्रस्तरस्य कश्चिदुपकारः क्रियते। सत्यं न दृष्टं क्रियते किंतु अदृष्टं क्रियते। श्रयणवत्। यथा 'पयसा मैत्रावरुणं श्रीणाति' इति द्वितीयातृतीयासंयोगात् अदृष्टश्चोपकारो गम्यते। एवमिहापीति।

टुप्— वत्ससंयोगप्रसङ्गेनारभ्यते। अथवा शाखाप्रहरणे क्वाधिकार इति संबन्धः। ननु चतुर्थे (४।२।४।१.१) प्रतिपत्तिः शाखाप्रहरणमिति स्थितम्। उच्यते। प्रस्तरस्य प्रतिपत्तावपि जुह्वादेरङ्गभावो दृष्टः। तेनेहापि तद्वदेव संभवेत्। तत्कथमित्याशङ्कायां युक्तस्तन्निराकरणार्थं आरम्भः।

कालविधिर्वोभयोर्विद्यमानत्वात्। ४५ ॥

भाष्यम्— कालविधिर्वा स्यात्। कुतः? उभयोर्विद्यमानत्वात्। प्रस्तरस्तावत् स्रुग्धारणार्थः प्राप्तो विद्यते। तस्य प्रहरणमपि विशिष्टे काले वाक्यान्तरेण विहितम्। ततः शाखायाः प्रतिपादनार्थं तस्यैतत् पुनर्वचनम्। उच्यते। भवतु प्रतरस्य पुनर्वचनम्। शाखा तु अत्र विधीयते इति। उच्यते। उभयोरपि विद्यमानत्वात्। शाखाऽपि हि पूर्वं विहिता वत्सापाकरणार्था। इदानीं पुनः किं गुणभूता चोद्यते, उत प्रतिपाद्यते इति। प्रतिपाद्यमानायां दृष्टं प्रयोजनम्। देशवियोगात् प्रचरितुमवकाशः स्यात्। या च यावती च मात्रा देशान्तरसंयोगस्य, न दृष्टं किञ्चिदस्ति। तस्मात् प्रहरणं प्रतिपत्तिस्तस्याः। तस्मात् परतः प्रयोजनाभावात् कालनियमः क्रियते। ननु तृतीया अप्रधाने भवति, सा च शाखायाम्। अत्रोच्यते। या असौ शाखायां तृतीया, सा द्वितीयाऽर्थे। या च प्रस्तरे द्वितीया, सा तृतीयाऽर्थे। कथमवगम्यते? सहयोग एषः, एकस्मिन् काले उभयमपि प्रहर्तव्यमिति। अत्र यस्य निर्ज्ञातः कालः, तस्यानुवादः। यस्य तु अनिर्ज्ञातः, तस्य विधिः। शाखायाश्च अनिर्ज्ञातः, प्रस्तरस्य निर्ज्ञातः। तस्य पुनरुच्चारणमनिर्ज्ञातार्थम्। तदप्रधानम्। इतरस्योच्चारणं प्रधानम्। प्राधान्यं च द्वितीयाऽर्थः, तत्र तृतीया। पारार्थ्यमपि तृतीयाऽर्थः, तत्र द्वितीया। तस्मादयथार्थं विभक्तिवचनम्।

टुप्— कालविधिर्वा उभयोर्विद्यमानत्वात्। ननु च 'सहयुक्तेऽप्रधाने' इति सहयोगे एव तृतीया। उच्यते। यद्येवं, ततः शाखाया अपि यजौ गुणभावः प्रस्तरवत् स्यात्। यथा 'सूक्तवाक एव याज्या, प्रस्तर आहुतिः'।

एवं चेत्, कालार्थता। उच्यते। प्रस्तरे सूक्तवाकस्य निर्देशात्। अथवा प्रस्तरस्य यज्यङ्गत्वेन निर्देशात् यजिरूपम्। अन्यथा याज्यादीनि न स्युरिति। नैवमत्र। अतः प्रहरतिमात्रे शुद्धे सहयोग इति सूक्तम्।

अतत्संस्कारार्थत्वाच्च। ४६॥

भाष्यम्— न च शाखया प्रस्तरस्योपकारो दृष्टः क्रियते। काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्तते। तृणं तु काष्ठस्य दह्यमानस्य उपकुर्यात्। तस्मान्न शाखा प्रस्तरार्था।

तस्माच्च विप्रयोगे स्यात्। ४७॥

भाष्यम्— किं भवति प्रयोजनम्, यदि प्रस्तरस्य गुणभूता, तथापि प्रस्तरप्रहरणकाले शाखा प्रक्षिप्यते इति। उच्यते। यदि प्रस्तरस्य प्रह्रियमाणस्य अङ्गभूता शाखा, ततो विना प्रस्तरेण न प्रहर्तव्या भवति। अथ अनङ्गभूता, विनापि प्रस्तरेण प्रहर्तव्या। अस्माभिरुक्तं प्रस्तरकाले प्रहर्तव्येति। तस्माच्च विप्रयोगे स्यात्, तस्मादेव कारणात् प्रस्तरविप्रयोगेऽपि शाखायाः प्रहरणं स्यादिति।

टुप्— यदि प्रस्तरस्य गुणभूता शाखा, ततो विना शाखया प्रस्तरो न प्रहर्तव्यः इति व्याख्येयम्। पौर्णमास्यां प्रस्तरः शाखां प्रयोजयेत्। सिद्धान्ते विनैव शाखया प्रहर्तव्यः। अथवा अन्यथा व्याख्येयमुदाहरणम्। प्रातःसवनीयेषु (पुरोडाशेषु) प्रस्तरं विना न प्रहर्तव्या शाखा पूर्वपक्षे। सिद्धान्ते प्रहर्तव्येति।

उपवेषश्च पक्षे स्यात्। ४८॥

भाष्यम्— यथा पूर्वः पक्षः तथा सति, सांनाय्ये सति असति च शाखा विद्यते इति, उपवेषः सति चासति च स्यात्। यथा तु सिद्धान्तः, तथा सांनाय्यपक्षे शाखा सती हि प्रतिपाद्यते, इति तत्रैव उपवेषो नान्यत्रेति।

वि— 'प्रस्तरं शाखया युक्तं हरेत् (इत्यनेन) शाखा विधीयते। कालो वा प्रतिपत्त्यर्थः प्रवृत्त्याऽत्रोपलक्ष्यते॥, आद्योऽङ्गत्वविधेर्भानात्, प्रतिपत्तिमपेक्षते। शाखोपयुक्ता (शाखा उपयुक्ता) तेनान्यः प्रस्तरे प्रतिपादनात्॥'

भाट्ट— 'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रहरणे एव शाखासाहित्यं प्रस्तरस्य, न तु होमे इत्युक्तं चतुर्थे (४।२) तत्तु न समप्रधानत्वेन प्रस्तरप्रहरणस्यैव शाखाप्रहरणस्यापि शाखाप्रतिपत्तितया, किन्तु प्रस्तरप्रहरणे शाखासाहित्यं गुणत्वेन मैत्रावरुणग्रहे इव पयःसाहित्यं 'सहयुक्तेऽप्रधाने' इत्यनुशासनेन गुणत्वावगमात्। इति प्राप्ते, शाब्दबोधे गुणत्वश्रवणेऽपि प्रयाजशेषाभिघारणन्यायेन आर्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तरवत् शाखाया अपि कृतार्थत्वाविशेषेण प्रतिपाद्यत्वम्। अत एव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तरप्रहरणकाले प्रतिपत्त्यर्थमित्युक्तम्, न तु स्वयं तन्त्रम्। अतश्च असंनयतः शाखां विनैव प्रस्तरप्रहरणम्। पौर्णमास्यां च यथाशक्तिप्रयोगे प्रस्तराभावेऽपि 'गुणलोपे च' इति न्यायेन शाखाप्रहरणम्।

मण्डन— 'शाखां क्षिपेत् प्रस्तरहोमकाले।'

शंकर— 'प्रतिपाद्या हृतौ शाखा।' हृतौ प्रस्तरस्य प्रहरणे प्रहरणकाले शाखा प्रतिपाद्या अग्नौ प्रक्षेप्या इत्यर्थः।

* दर्शे शाखामार्जने (शाखायाः मार्जनं तत्रत्यधूलिनिरसनम्) 'ऊर्जे त्वा' इति मन्त्रः। वि. २।१।१५, * दर्शे सांनाय्यदोहे 'उत्तरा दोहयति' इति उत्तराशब्देन विद्यमानाः स्वीयाः तिसृभ्यः उत्तराः सर्वा गावो दोग्धव्याः। ११।१।९, * दर्शे सांनाय्यपात्रप्रोक्षणे 'शुन्धध्वं' इत्यादिर्मन्त्रः संनिधिपाठात्। क्रमाधिकरणम्। ३।३।५, * दर्शे सोमयाजिनः सांनाय्यम्, असोमयाजिनस्तु आग्नेयैन्द्राग्नौ पुरोडाशौ। १०।८।१४.

* दर्शामावास्याशब्दौ एकार्थौ। भा. ४।४।११।३४.

* दर्शेष्टेः प्रागुदयात् प्रक्रमः, न तु अहनि। संकर्ष. ३।१।४.

* दर्शतन्त्रेण निशीष्टिप्रयोगः। भाट्ट. १२।२।५.

* दर्शपूर्णमासौ। अग्नीनाधाय सर्वः संकल्पयति पर्वणिपर्वणि मया दर्शपूर्णमासौ कर्तव्यौ इति। भा. ९।१। ११।३५. * दर्शपूर्णमासौ अवघातनिष्पन्नैरेव तण्डुलैः अवान्तरापूर्वद्वारेण परमापूर्वं जनयतः। वि. १।१।१, * 'दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत' अत्रेष्टिसोमयोः पौर्वापर्यं न नियतम्, 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्यपि श्रवणात्। ५।४।३. * दर्शपूर्णमासौ कुर्वाणस्य

ज्योतिष्टोमिकमन्त्रब्राह्मणं न क्वचिदुपयुज्यते इति असदपि नाधिकारं व्यावर्तयति, इष्टिवेदनेनैव योग्यतायाः सिद्धत्वात्। वा. ३।८।८।१८. * दर्शपूर्णमासौ त्रिंशतं वर्षाणि कर्तव्यत्वेन विहितौ। संकर्ष. १।३।७. * दर्शपूर्णमासौ नित्यं कर्म, वाक्यान्तरेण काम्यं च। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। के. * दर्शपूर्णमासौ प्रकृत्य आमनन्ति 'दाक्षायणयज्ञेन यजेत प्रजाकामः, साकंप्रस्थायीयेन यजेत पशुकामः, संक्रमयज्ञेन यजेतान्नाद्यकामः' इति अत्र दर्शपूर्णमासयोरेव गुणात् फलमुच्यते न कर्मान्तराणि। भा. २।३।४।५–११. * दर्शपूर्णमासौ प्रतिशाखं न भिन्नौ इतिपक्षः संयोग–रूप–चोदना–आख्याऽविशेषात्। तत्र स्वर्गकाम इति फलसंयोगः, आग्नेयाष्टाकपालादिकं रूपम्, 'दर्शपूर्णमासाभ्यां यजेत' इति चोदना, दर्शपूर्णमासौ इत्याख्या च एकैवेति न कर्मभेदः। वि. २।४।२. * दर्शपूर्णमासौ संहत्य फलं साधयतः 'प्रयोजनाभिसंबन्धात्०' (११।१।१।१) इति न्यायात्। सु. पृ. ५४४. * दर्शपूर्णमासौ समानतन्त्रौ। भा. ११।३।१६। ५४, * दर्शपूर्णमासौ सर्वकामार्थौ। दर्शपूर्णमासन्यायः। ४।३।१०।२५–२६. * 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' अत्र कालार्थः संयोगः, न सोमो दर्शाद्यङ्गम्। वि. ४।३।१६. * दर्शपूर्णमासाभ्यां ऊर्ध्वमेव सोमविकारा गवादय एकाहाः कार्याः न प्राक्। भा. ५।४।९।२६, * 'दर्शपूर्णमासाभ्यां यजेत' इति दर्शपूर्णमासशब्दो हि यजिवचनः करणभावोऽत्र यजेः श्रूयते। दर्शपूर्णमासाख्येन यागसमुदायेन अन्यत् कुर्यात् इति। यत् ततोऽन्यत्, तत् कर्तव्यतया चोद्यते न यजिः। अपूर्वं च तत्। ७।१।१।३. * 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' अयं कर्मफलसंबन्धपरः काम्यपुरुषार्थाधिकारविधिः। बाल. पृ. १४. * 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति आत्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते। वि. ३।८।१४, * दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति श्रुतं फलं आग्नेयादीनां षण्णां प्रधानानां साङ्गानां तन्त्रेण स्वर्गः फलम्, न तु प्रतिप्रधानं पृथक्। ११।१।१.

* दर्शपूर्णमासयोः 'अगन्म स्वः सं ज्योतिषाऽभूम' इत्यादिः फलसंबद्धो मन्त्ररूपो धर्मः अपूर्वप्रयुक्त एव न फलप्रयुक्तः। तेन सौर्ये 'अगन्म ब्रह्मवर्चसम्' इत्यादिरूहः कर्तव्यः। फलदेवताऽधिकरणम्। भा. ९।१।३।४–५, * दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इत्यग्निशब्दः समवेतवचनो विकृतौ ऊहितव्यः। ९।१।१।३।३८–३९ वर्णकं १, * दर्शपूर्णमासयोः 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिः देवतासंबद्धो मन्त्ररूपो धर्मः अपूर्वप्रयुक्तो न देवताप्रयुक्तः। तेन सौर्ये कर्मणि 'सूर्यस्याहमुज्जितिम्' इत्यूहः कर्तव्यः। फलदेवताऽधिकरणम्। ९।१।३।४–५. * दर्शपूर्णमासयोः अग्नेरुद्वाने ज्योतिष्मतीष्टिर्न प्रायश्चित्तम्। सा हि अग्निहोत्रार्थाग्नेरुद्वाने विहितेति। वि. ९।४।७. * दर्शपूर्णमासयोः अग्न्यन्वाधानं समन्त्रकम्। भा. १२।१।१०।१९. * दर्शपूर्णमासयोः अग्न्यादिसंमार्गपर्यग्निकरणादि गुणकर्म, न प्रधानकर्म। अग्निसंमार्गाधिकरणम्। के. २।१।४।९–१२. * दर्शपूर्णमासयोः अग्निप्रणयनं अधर्मकम्। भा. ७।३।८।१९, * दर्शपूर्णमासयोः अग्निप्रणयने उत्तरवेदिर्नास्ति। ७।३।८।२०. * दर्शपूर्णमासयोः 'अग्निहोत्रहवणी च शूर्पं च' 'अग्निहोत्रहवण्या हवींषि निर्वपति'। वि. ३।१।५, * दर्शपूर्णमासयोः अग्नीषोमीयपुरोडाशस्य सोमादूर्ध्वमुत्कर्षात् तद्विकारोऽपि सोमादूर्ध्वमुत्कष्टव्यः। यत्र अग्नीषोमौ देवता स सर्वस्तद्विकारः। ५।४।८, * दर्शपूर्णमासयोः अङ्गानि सर्वाणि संभूय उपकारजननेन करणाकाङ्क्षां पूरयन्ति। ११।१।३. * दर्शपूर्णमासयोः अङ्गक्रमः कियांश्चित्–प्रधानयागः नारिष्ठहोमाः प्राशित्रभक्षणं इडाभक्षणं अनुयाजाः सूक्तवाकः शंयुवाकः परिधिप्रहरणं भक्षाः पत्नीसंयाजाः फलीकरणहोमः प्रायश्चित्तहोमः कपालोद्वासनं इति। के. * दर्शपूर्णमासयोः अङ्गप्रधानयोः एकदेशकालकर्तृकत्वम्। अङ्गप्रधानयोः इति बिन्दौ अधिकरणम्। भा. ११।२।२।८–१२. * दर्शपूर्णमासयोः अङ्गारेषु कपालोपधानं पुरोडाशधर्मः, नासौ सौर्ये चरौ स्यात्। सौर्ये चरौ उपधानस्य इत्यत्र द्रष्टव्यम्। के. १०।१।१६। ५७. * दर्शपूर्णमासयोः अङ्गारापोहनादीनि संस्पर्शादीनि च प्रतिप्रधानं भिद्यन्ते। भा. ११।१।१०।५५.

संबन्धं लभते कथम् ॥ ' तस्मात् भेदने निमित्ते होमो विधीयते । स चाविशेषात् एकदेशभेदे कृत्स्नभेदेऽपि स्यात् ।

सोम— पूर्वत्र कादाचित्कानां अन्येषां ( ऋत्विग्भिन्नानां ) अग्रहणेऽपि इह कृत्स्नभेद एव ग्राह्यः इति प्रत्यवस्थानात्, भक्षणस्य द्रव्यसंस्कारत्ववत् होमस्य भिन्नसंस्कारत्वम्, इति प्रत्यवस्थानाच्च संगतिः । सूत्रार्थस्तु एकदेशेऽपि भिन्ने प्रायश्चित्तं स्यात् अर्थस्य भेदनस्य तत्रापि समवायात् इति ।

वि— ' कपालभेदने होमो भग्ने घृष्टेऽथवोभयोः ।, आद्यो भेदस्य भङ्गत्वात् संस्कार्यत्वेन मध्यमः ॥, संस्कृतावनिमित्तत्वात् नित्यानित्यविरोधनम् । निमित्तता समा भङ्गे घर्षे वाऽतो द्वयोर्हुतिः ॥ '

भाट्ट— दर्शपूर्णमासयोः प्रायश्चित्ताधिकारे ' भिन्ने जुहोति, स्कन्ने जुहोति ' इति श्रुतम् । तत्र कृत्स्नभेदे एवेदम्, उतैकदेशभेदे एव, उतोभयत्रापीति चिन्तायाम्, द्वयोः संघर्षे सति एकदेशभेदस्य अवर्जनीयत्वेन नित्यत्वात् निमित्तत्वानुपपत्तेः सर्वभेदे एवेदं चूर्णतादशायां प्रायश्चित्तमिति प्रथमः पक्षः । संघर्षेण कतिपयावयवानां चूर्णीभावेऽपि भिन्नमिति प्रतीत्यभावात् कपालिऽऽकादिस्थूलावयवविभागे एव भेदनप्रतीतेः तस्यैवानित्यत्वेन सर्वभेदनवत् एकदेशभेदनस्यापि निमित्तत्वोपपत्तेः तत्रैवायं होमः । अयं हि भेदनस्य निमित्तत्वेऽपि होमस्य प्रयोजनापेक्षायां संनिपत्योपकारकत्वलाभाय भिन्नकपालसंस्कारार्थः । कपाले हि भेदनेन उक्तपरिमाणबाधात् वैगुण्यप्रसक्तौ तत्परिहाररूपः होमेन संस्कारो नानुपपन्नः । तस्य चानुपयुक्तस्य संस्कारायोगात् सर्वभेदने च उपयोगायोगात् एकदेशभेदनमेव निमित्तम् । अस्तु वा सप्तमी इयं संस्कार्यत्वपरैव, न तु निमित्तत्वार्थिकाऽपि । न च भिन्नस्य कादाचित्कत्वात् नित्यानित्यसंयोगविरोधः, यथा तस्य कादाचित्कत्वेऽपि संमीलनादिधर्मविधिवदुपपत्तेः । इति प्राप्ते, भाव्युपयोगित्वे भूतोपयोगित्वे वा तस्योपधानावश्यकत्वे ' भिन्नं कपालमप्सु प्रक्षिपति, अन्यदुपदधाति ' इतिवाक्यविरोधात् नायं स्वतन्त्रो होमो भिन्नसंस्कारकः । नापि प्रकरणपठितहोमानां तत्संस्कारकत्वम् । एतेन प्राकरणिकहोमानुवादेन लौकिकस्य भिन्नकपालस्यैव अधिकरणत्वेन विधिः आहवनीयबाधेन इत्यपास्तम् । होमस्य प्राकरणिकस्य कपालोपधानोत्तरत्वात् ' अन्यदुपदधाति ' इत्यस्य वैयर्थ्यापत्तेः प्रायश्चित्तसमाख्याऽनुपपत्तेश्च । अत एवेदं कर्मान्तरम्, तच्च नैमित्तिकं आरादुपकारकं क्रतुवैगुण्यपरिहारार्थं क्रत्वङ्गत्वेन विधीयते । अतः सर्वभेदनमेकदेशभेदनमुभयमपि अत्र निमित्तम् ।

मण्डन— ' भिन्नैकदेशेऽपि भवेज्जुहोतिः । '

शंकर— ' होमः किंचित्–कृत्स्नभेदे । '

* दर्शपूर्णमासयोः कपालोपधानम् ' अधि च वपते कपालानि चोपदधाति ' इति द्वादशद्वंद्वमध्ये एकम् । वि. ३।८।१० । ' कपालेषु श्रपयति ' इति तत्कार्यम् । ३।१।५, * दर्शपूर्णमासयोः कपालोपधानम् ' उपवेषेण कपालान्युपदधाति ' ।४।२।३, * दर्शपूर्णमासयोः कपालोपधाने समुदायानुसमयः कर्तव्यः । ५।२।३. * दर्शपूर्णमासयोः कर्ता सपत्नीक एक एव पुरुषः । ' अधिकारः दर्शपूर्णमासादौ ' इत्यत्राधिकरणम् । भा. ६।२। २।३–१३. * दर्शपूर्णमासयोः कर्तारः ते एव वा अन्ये वा अनियमः पुनः प्रयोगे । के. ११।३।१२।३५. * दर्शपूर्णमासयोः काम्यसामिधेनीषु संख्यावृद्धौ आगमेन संख्यापूरणम् । वि. १०।५।८, * दर्शपूर्णमासयोः काम्यसामिधेनीसंख्यापूरणं प्रथमोत्तमयोः षट्त्वं गृहीत्वा अधिकानामेव षडादीनामागमेन । १०।५।८. * दर्शपूर्णमासयोः कालः ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । तत्र सायंप्रातःकाले प्राप्ते जीवता कर्म कर्तव्यम्, इति कालार्थः संयोगः । शा. ६।२।७. * दर्शपूर्णमासयोः कालभेदात् अङ्गावृत्तिः इष्टिराजसूयाधिकरणे ( ११।२।३।१२ ) सिद्धान्तिता । सु. पृ. ७७९. * दर्शपूर्णमासयोः कुम्भ्यादिपात्रभेदने आज्यादिस्कन्दने च होमो विहितः ' भिन्ने जुहोति ' ' स्कन्ने जुहोति ' इति । स च निमित्तावृत्तौ आवर्तनीयः, न तु सकृदेव । वि. ६।२।९, * दर्शपूर्णमासयोः ' कृष्णाजिनं च शम्या च ' यज्ञायुधम् । ३।८।१० । ' कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति ' इति उपयोगस्तस्य । ३।१।५, * दर्शपूर्णमासयोः खननं वेदिधर्मः । ' देवस्य त्वा सवितुः

प्रथव इति खनति ।' १०।१।१०. * दर्शपूर्णमासयोः गोदोहनं पुरुषार्थमेव । तच्च पशुप्रयोज्यं पशूद्देशेन विहितम् । भा. ४।१।२।२ वर्णकं २. * दर्शपूर्णमासयोः 'गोदोहनेन पशुकामस्य प्रणयेत्' इति विहितं गोदोहनं प्रकृतावेव निविशते । के. ३।६।३।१०. * दर्शपूर्णमासयोः चतुरवत्तं उपस्तरणाभिघारणाभ्यां सह । उपस्तरणादिविधिन्यायः । भा. १०।८।१२।२९–३२, * दर्शपूर्णमासयोः चतुर्थोत्तमयोः प्रयाजयोः प्रति समानयति इत्युक्ते सति 'अतिहायेडो बर्हिः प्रति समानयति' इत्युच्यते, तेन बर्हिषश्चतुर्थतां दर्शयति इति श्रौतः क्रमः । ५।१।४।७, * दर्शपूर्णमासयोः चतुर्धाकरणं आग्नेयपुरोडाशस्यैव आग्नेयचतुर्धाकरणाधिकरणम् । ३।१।१५। २६–२७, * दर्शपूर्णमासयोः चतुर्धाकरणं भक्षणार्थम्, न परिक्रयार्थम् । चतुर्धाकरणं भक्षार्थं इत्यत्राधिकरणम् । ३।४।१७ ( वि. २१ ) । ४८–५१. * दर्शपूर्णमासयोः चतुर्धाकरणं हस्तेन । आभिचारिके वैश्वदेवे चरौ तु शम्यया । वि. १०।१।१ वर्णकं ३. * दर्शपूर्णमासयोः चतुर्धाकरणोत्तरं 'इदं ब्रह्मणः' इत्यादिना भागनिर्देशः भक्षणार्थः । के. ३।४।१७।४८–५१. * दर्शपूर्णमासयोः चतुर्धाकरणविधौ आग्नेयशब्देन द्विदेवत्यो न गृह्यते किंतु आग्नेय एव केवलः । वा. ३।१।१५।२६–२७. * दर्शपूर्णमासयोः 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' इति अभिमर्शनं अङ्गहविषां प्रधानहविषां च, न प्रधानहविषामेव । ३।७।४।८,१०, * दर्शपूर्णमासयोः चतुर्होतृपञ्चहोतृमन्त्राभ्यामभिमर्शनं अपूर्वप्रयुक्तम्, न समुदायप्रयुक्तम् । ९।१।५।११–१९. * दर्शपूर्णमासयोः जागरणं औपवसथ्यां रात्रौ कर्तव्यम्, तच्च रक्षार्थमदृष्टार्थं वा । यागपूर्वरात्रिः औपवसथी । वि. १२।१।८. * दर्शपूर्णमासयोः जाघनी शास्त्रेण नोच्यते 'एवं पशोर्निष्पन्नया जाघन्या पत्नीसंयाजा यष्टव्याः' इति । सा संभवति क्रीत्वापि आनीयमाना पत्नीसंयाजार्थम् । भा. ३।३।१०।२३. * दर्शपूर्णमासयोः 'जाघन्या पत्नीः संयाजयन्ति' अत्र जाघनी क्रयादिना संपाद्य यागः कर्तव्यः । तथा चाज्येन सह जाघन्याः विकल्पः । वि. ३।३।१५. * दर्शपूर्णमासयोः 'जाघन्या पत्नीः संयाजयन्ति' इति अर्थकर्म । नहि तत्र काचित् शेषभूता जाघनी अस्ति । लौकिक्यास्तु तत्र आज्येन सह विकल्पः । भा. १२।४। ६।१०. * दर्शपूर्णमासयोः जुहूः पर्णमयी पलाशकाष्ठजन्या इत्यर्थः । अव्यभिचरितक्रतुसंबन्धमाश्रित्य जुहूहेतुः पलाशवृक्षः वाक्येन विधीयते 'यस्य पर्णमयी जुहूर्भवति' इति । अनारभ्यविधिश्च प्रकृतावेव निविशते । वि. ३। ६।१, * दर्शपूर्णमासयोः जुह्वां चतुर्वारमाज्यं ग्राह्यं आज्यग्रहणकाले 'चतुर्जुह्वां गृह्णाति' । तत्र च प्रतिग्रहणं मन्त्रावृत्तिः । ११।४।१५. * दर्शपूर्णमासयोः जृम्भायाम् 'मयि दक्षक्रतू' इति मन्त्रः पठनीयः । स च मन्त्रपाठः क्रत्वर्थः क्रतुयुक्तपुरुषधर्मो वा, न पुरुषार्थः । जञ्जभ्यमानाधिकरणं इत्यत्राधिकरणम् । के. ३।४।५। १४–१६.

**⌛ दर्शपूर्णमासयोः जौहवाज्यं प्रयाजार्थम्, औपभृताज्यं च प्रयाजानुयाजार्थम् ॥**

**तत्रोत्पत्तिरविभक्ता स्यात् । ४।१।१६।४२॥**

**भाष्यम्**—दर्शपूर्णमासयोः श्रूयते 'चतुर्जुह्वां गृह्णाति, अष्टावुपभृति' इति । तत्र संदेहः किं जौहवमौपभृतं चोभयं उभयार्थं प्रयाजेभ्यश्च अनुयाजेभ्यश्च (इति), उत जौहवं प्रयाजेभ्यः, औपभृतमनुयाजेभ्यः । अथवा औपभृतं प्रयाजेभ्यः, अनुयाजेभ्यश्चेति ? किं प्राप्तम् ? उभयमुभयार्थम् । कुतः ? यद्यत् आज्येन क्रियते, तस्मै तस्मै भवितुमर्हति, अविशेषात् ।

**टुप्**— प्रसक्तानुप्रसक्तेन आरभ्यते । ( समानयनस्य औपभृताज्यप्रयोजकत्वे साधिते तत्प्रसङ्गेन औपभृतस्य तादर्थ्यं चिन्त्यते, तदनुप्रसङ्गेन च जौहवस्य ध्रौवस्य चेति ) । तस्य आज्यप्रयोजकत्वे स्थिते चास्मिन् पूर्वाधिकरणारम्भः । ( पूर्वमसंगतिप्रसङ्गात्तु न पूर्वमारब्धम् । पूर्वपक्षमाह–) असंयुक्तोत्पन्नानि ( आज्यानि ) प्रकरणिना गृह्यन्ते । तस्मात् यद्यत् आज्यसाध्यम् ( कार्यं प्रयाजानुयाजादि ) तत्रतत्र एतानि ( बहुवचनं ध्रौवापेक्षम् । भाष्ये जौहवौपभृतग्रहणं ध्रौवस्यापि प्रदर्शनार्थम् ) ।

**तत्र जौहवमनुयाजप्रतिषेधार्थम् । ४३ ॥**

**भाष्यम्**— नैवं उभयमुभयार्थमिति । जौहवं प्रया-

जार्थम्, औपभृतं उभयार्थम्। कथम्? 'यज्जुह्वां गृह्णाति, ऋतुभ्यस्तद् गृह्णाति, ऋतवो वै प्रयाजाः' इति जौहववचनं अनुयाजप्रतिषेधार्थं प्रयाजान् संकीर्तयति। आह, ननु नास्त्यत्र अनुयाजप्रतिषेधार्थं वचनम्। यदेतत् 'प्रयाजेभ्यस्तद् गृह्णाति' इति, प्रयाजेषु उपदेशकमेतत्। नास्त्यस्य अनुयाजप्रतिषेधे सामर्थ्यमिति। उच्यते। न ब्रूमः प्रतिषेधकमेतदिति, किन्तु उत्पत्तिवाक्ये आज्यानां नैव प्रयोजनाभिसंबन्धः। अनेन वचनेन प्रयाजप्रयोजनता क्रियते जौहवस्य, अनुयाजप्रयोजनता अस्य वचनाभावादेव न गम्यते, इति अनुयाजप्रतिषेधार्थं वचनमित्युच्यते।

टुप्— तत्र जौहवमनुयाजप्रतिषेधार्थम् 'चतुर्जुह्वां गृह्णाति' इति उत्पद्यमानं जौहवं अभिलषति किं मया कर्तव्यमिति। प्रयाजाश्च उत्पद्यमानाः द्रव्याभिलाषिणः। (तत्र यावदेव सर्वार्थता प्रकरणेन कल्प्यते, तावदेव) तयोः (जौहवप्रयाजयोः) श्रुतेन वाक्येन संबन्धे (विहिते) द्वयोरपि परस्परनियमात् अन्यत्र (प्रयोजनान्तरे जौहवस्य, प्रयाजानां च चर्वादिद्रव्यान्तरे) प्रसङ्ग एव नास्ति। एवं ध्रौवोपभृतयोः (ध्रौवस्य उपस्तरणाद्यर्थत्वम्, औपभृतस्य च प्रयाजानुयाजार्थत्वमेवेति) एवं चेत् (यदा परस्परनियमात् अन्यत्र प्रसङ्गाभावः, तदा) प्रतिषेधफलत्वात् नियमफलकत्वादित्यर्थः प्रतिषेधः उक्तः (नियमः उक्तः)।

**औपभृतं तथेति चेत्। ४४॥**

भाष्यम्— इति चेद् दृश्यते, जौहवमनुयाजेभ्यः प्रतिषिध्यते, औपभृतमुभयार्थमिति। भवतु जौहवं प्रयाजार्थम्, न तु औपभृतमुभयार्थम्। तदपि तथा स्यात्, यथा जौहवम्। कथम्? एतदपि अनुयाजार्थमेव श्रूयते 'यदुपभृति गृह्णाति अनुयाजेभ्यस्तद् गृह्णाति। छन्दांसि ह्यनुयाजाः' इति अनुयाजार्थता अस्येति।

टुप्— (पूर्वपक्षान्तरसूत्रार्थमाह—) यदि श्रुतेन नैराकाङ्क्ष्यात् नान्यार्थत्वम् (आज्यानाम्, तर्हि) औपभृतम् (अपि 'अनुयाजेभ्यस्तद् गृह्णाति' इति वचनात् केवल—) अनुयाजार्थत्वेन निराकाङ्क्षीकृतत्वात् न प्रयाजार्थं स्यात्।

**जुहूप्रतिषेधान्नित्यानुवादः। ४५॥**

भाष्यम्— नैतदेवम्, उभयार्थमौपभृतम्। एवं हि श्रूयते 'यदष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णाति' इति। ननूक्तं 'अनुयाजेभ्यस्तद्गृह्णाति' इति अनुयाजार्थता अस्येति। उच्यते। जुहूप्रतिषेधात् नित्यानुवादः। उभयस्मिन् औपभृते जौहवे च उभयार्थे प्राप्ते जौहवमनुजाजेभ्यः प्रतिषिद्धम्, नौपभृतम्। तदा औपभृतस्य उभयार्थतायां सत्यां अनुयाजार्थतावचनं नित्यानुवादो भवितुमर्हति, न शक्नोति प्रयाजार्थतां प्रतिषेद्धुम्। प्रत्यक्षश्रुता हि सा। तस्मात् औपभृतमुभयार्थम्। समानयनं च ततो जुह्वां श्रूयते। तस्मादपि प्रयाजार्थता न शक्या बाधितुम्। (अत्र सूत्रे 'स्यात्' इति पदं सूत्रारम्भे सर्वत्रोपलभ्यमानमपि टुप्टीकायां तन्त्ररत्ने चादर्शनात् न पठनीयम्। भाष्येऽपि 'उच्यते' इत्युक्त्वा 'जुहूप्रतिषेधान्नित्यानुवादः' इत्येव सूत्रमनुदितं न तत्र 'स्यात्' इति पदमनूदितम्। तेन भाष्यमतेऽपि स्यात् इति पदं सूत्रे नास्तीत्येव सिध्यति। के.)।

टुप्— जुहूप्रतिषेधान्नित्यानुवादः। प्रयाजानुयाजार्थत्वे अवधृते ज्ञायते एवैतत् अनुयाजार्थमिति। यदि तु अनुयाजार्थमेवैतत्, ततः प्रयाजार्थमिति अशक्यं वक्तुम् (अप्राप्तत्वात्)। तस्मात् अयमनुवादोऽपि न घटते। तस्मात् 'प्रयाजानुयाजेभ्यस्तद् गृह्णाति' इत्यस्य अत्यन्तानर्थक्यात् इतरः ('अनुयाजेभ्यस्तद् गृह्णाति' इति) अनुवादः।

शा— '**उत्पत्तावविशेषेण सर्वार्थप्रतिभोद्गमः। अवयुत्यानुवादश्च प्रयाजाद्यर्थतावचः॥**' (प्रयोजनविशेषसंयोगात् प्रकरणेन सर्वार्थत्वावगमः इत्यर्थः)। इति प्रथमः पक्षः '**नानाऽर्थत्ववचो युक्तमर्थवत्त्वस्य संभवे। तेन जुह्वां प्रयाजार्थमितरार्थं तथेतरत्॥**' इति द्वितीयः पक्षः। '**जौहवस्य प्रयाजैकशेषत्वं युक्तमीरितम्। अनूयाजैकशेषत्वमितरस्य न मृष्यते॥**'

सोम— पूर्वाक्षेपेण प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु— तत्र औपभृताद्याज्ये उत्पत्तिः कार्यविशेषासंयुक्ता, अतः सर्वार्था स्यादिति।

वि-- 'जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थे वा व्यवस्थितिः ।, सर्वार्थमविशेषात् स्यात्, प्रयाजार्थे तु जौहवम् ॥ प्रयाजानूयाजहेतुः स्यादौपभृतमाज्यकम् । ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ '

भाट्ट— एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोज्यत्वं विचारितम् । तदेवाक्षिप्य समाधीयते । 'चतुर्जुह्वां गृह्णाति, अष्टावुपभृति गृह्णाति, चतुर्ध्रुवायां गृह्णाति' इत्यसंयुक्तानि आज्यानि लिङ्गप्रकरणाभ्यां यावत् सर्वप्राकरणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते, तावत् 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, अष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इत्यादिवचनैस्तत्तत्कार्यार्थत्वेन विनियोगात् औपभृतस्य अनूयाजमात्रार्थत्वम् । यत्तु 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इति वचनम्, तत्र प्रयाजत्वानूयाजत्वयोरुद्देश्यताऽवच्छेदकत्वे वाक्यभेदापत्तेः अनूयाजानां प्रयाजोत्तरत्वानुवादमात्रम् । इति प्राप्ते, उभयतोऽपि अनुवादत्वावश्यकत्वे समानयनादिविध्यदृष्टार्थत्वाद्यनुरोधेन शुद्धानूयाजवचनस्यैव अनुवादत्वम् । न वा वाक्यभेदः, ग्रहैकत्वाधिकरणव्युत्पादितकौस्तुभोक्तरीत्या 'अध्वर्युयजमानौ वाचं यच्छतः' इतिवत् अवाक्यभेदात् । अतश्चौपभृतं प्रयाजानूयाजार्थमिति सिद्धम् ।

मण्डन-- 'द्व्यर्थमौपभृतं घृतम् ।' १८.

शंकर-- 'नानुयाजाङ्गमेव तत् ।' १९.

* दर्शपूर्णमासयोः 'तण्डुलान् पिनष्टि' इति पेषणं नापूर्वजनकं दृष्टफलकत्वात् । नियमापूर्वहेतुत्वेन तु विधेयता । वि. २।१।३, * दर्शपूर्णमासयोः 'तिष्ठन् याज्यामन्वाह, आसीनः पुरोऽनुवाक्याम्' इति । अत्र नानुवचनविधानं किन्तु स्थानासनगुणविधानम् । १०।४।२२, * दर्शपूर्णमासयोः तुषोपवापः पुरोडाशकपालेन कर्तव्यः । तत्र कपालस्य तुषोपवापो न प्रयोजकः, किन्तु प्रासङ्गिकः । श्रपणं तु कपालस्य प्रयोजकम् । पुरोडाशकपालन्यायः इत्यत्राधिकरणम् । ४।१।११. * दर्शपूर्णमासयोः 'त्रीन् परिधीन्०' इति मन्त्रः अपूर्वप्रयुक्तः, न तु परिधित्रित्वसंख्याप्रयुक्तः । के. ९।१।५।११-१९.

* दर्शपूर्णमासयोः त्रिधातु पञ्चधातु वा वेदिं स्तृणाति । भा. ३।८।१७।३२.

⌛ दर्शपूर्णमासयोः त्रिष्टुभौ संयाज्ये काम्ये नित्ये च संयोगपृथक्त्वेन ॥

दर्शपूर्णमासयोरेव 'गायत्र्यौ संयाज्ये ब्रह्मवर्चसकामस्य, त्रिष्टुभौ वीर्यकामस्य' इत्यादि श्रुतम् । 'पिप्रीहि देवान्' 'अग्ने यदद्य' इत्यनयोस्त्रिष्टुभोर्नित्यवदाम्नातत्वेन केवलकाम्यप्राये तयोर्विशिष्य पाठाभावेन च तादृशावृचौ अन्ये वीर्यकामस्यागमयितव्ये । इति प्राप्ते, त्रिष्टुप्शब्देनापि द्रव्यवचनेन संनिहितयोः ऋचोः परामर्शसंभवात् संयोगपृथक्त्वेनोभयार्थता । संकर्ष. ४।३।१२.

* दर्शपूर्णमासयोः दक्षिणा अन्वाहार्यचरुः । वि. १०।३।६, * दर्शपूर्णमासयोः दृब्धिमन्त्रः उपांशुयाजाङ्गं यथासंख्यक्रमात् । क्रमाधिकरणं द्रष्टव्यम् । ३।३।५, * दर्शपूर्णमासयोः दर्भलवनमन्त्रस्य प्रतिमुष्टिलवनं आवृत्तिः । ११।४।१४. * दर्शपूर्णमासयोः 'दाक्षायणयज्ञेन यजेत प्रजाकामः' इति फलविशेषाय गुणविशेषविधिः, न तु दाक्षायणयज्ञः कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । भा. २।३।४।५. * दर्शपूर्णमासयोः दृषदि पेषणाय तण्डुलाधिवापे 'धान्यमसि धिनुहि देवान्' इति मन्त्रः । शाक्त्यानामयने तु तत्र 'मांसमसि धिनुहि देवान्' इति ऊहः । वि. ९।१।१३ वर्णकं २. * दर्शपूर्णमासयोः दृषदुपले 'दृषच्चोपला च' यज्ञायुधम् । वि. ३।८।१० । तदुपयोगस्तु 'दृषदुपलाभ्यां पिनष्टि' । ३।१।५, * दर्शपूर्णमासयोः दृषत्समाहननं कुटरुणा 'दृषदुपले च समाहन्ति' । (कुटरुः = मुष्टिमेयः पाषाणः । बौधायनमते तु कुटरुस्थाने शम्या) । ३।८।१०. * दर्शपूर्णमासयोः देवताऽऽवाहनकालः सामिधेनीप्रयाजयोर्मध्ये । वि. १०।१।१ वर्णकं ३, * दर्शपूर्णमासयोः देवतापरिग्रहार्थमन्वाधानं अग्न्यन्वाधानात्मकमेव 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यग्निं गृह्णाति इत्युक्तत्वात् । १२।१।१२. * दर्शपूर्णमासयोः देशः पुनःप्रयोगे पूर्वप्रयोगीय एव वा अन्यो वा यथाकामम् । भा. ११।३।१२।३३. * दर्शपूर्णमासयोः दोहनातञ्चनादयः सांनाय्यधर्माः । वि. ३।१।४, * दर्शपूर्णमासयोः दोहननिर्वापादयो धर्मा यजुर्वेदे आम्नाताः ।

३।३।६. * दर्शपूर्णमासयोः द्रव्यनाशे आज्येन समापनं वचनात् । भाट्ट. ४।१।७.

**दर्शपूर्णमासयोः द्वादश द्वन्द्वानि आध्वर्यवाणि, न याजमानानि ॥**

**याजमाने समाख्यानात् कर्माणि याजमानं स्युः । ३।८।९।१९ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्र यजमानकाण्डे कर्माणि आम्नातानि द्वादश, 'वत्सं चोपावसृजति उखां चाधिश्रयति, अव च हन्ति दृषदुपले च समाहन्ति, अधि च वपते कपालानि चोपदधाति, पुरोडाशं चाधिश्रयति आज्यं च, स्तम्बयजुश्च हरति अभि च गृह्णाति, वेदिं च परिगृह्णाति, पत्नीं (च) संनह्यति, प्रोक्षणीश्चाऽऽसादयति, आज्यं च । एतानि वै द्वादश द्वंद्वानि दर्शपूर्णमासयोः' इति । अत्र संदेहः किमेतानि अध्वर्योः कर्माणि, उत यजमानस्येति । किं प्राप्तम् ? यजमाने समाख्यानात् कर्माणि याजमानं स्युः । विशेषसमाख्यानात् याजमानानीति गम्यते । यथा पोत्रीयं नेष्ट्रीयमिति ।

**वा**— उखाऽधिश्रयणावहन्त्यादीनां द्वादशानां कर्मद्वंद्वानां याजमाने आध्वर्यवे च पठितानां हि आम्नातमन्त्रवत् उभाभ्यां प्रयोक्तुमशक्यत्वात् याजमानसमाख्यानात् यजमानकर्तृकत्वमिति ।

**अध्वर्युर्वा, तदर्थो हि, न्यायपूर्वं समाख्यानम् । २० ॥**

**भाष्यम्**— अध्वर्युर्वा कुर्यादेतानि । तदर्थो हि अध्वर्युः परिक्रीत इति समाख्यानादवगम्यते । आध्वर्यवे एव सर्वे इमे पदार्थाः समाम्नाताः । याजमाने एषां द्वंद्वता उच्यते । द्वंद्वता च समभ्यासक्रिया । तत्राध्वर्युः पदार्थान् करिष्यति, यजमानेनापि समभ्यासीकरणम्, इत्येतदशक्यम् । तत्र 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वंद्वतागुणो बाधितव्यः । तस्मादाध्वर्यवा एते पदार्था इति । यदुक्तं समाख्यानादिति, तत् परिहर्तव्यम् । उच्यते । न्यायपूर्वं समाख्यानम्, समाख्यानात् यजमानेन द्वंद्वता संपादयितव्या । 'इदं चेदं च संपादय' इति यजमानो ब्रूयात् । केषुचिच्चात्र पदार्थेषु यजमानस्य अनुमन्त्रणम् । तन्निमित्ता समाख्या भविष्यति । 'अपूर्वं त्वपकृष्येत' यदुक्तम्, यथा पोत्रीयम्, नेष्ट्रीयमिति, एवमत्रापीति । तदुच्यते । युक्तं तत्र, विशेषसमाख्यानात् । इह तु द्वंद्वता याजमानीया, पदार्थास्तु आध्वर्यवा एव । तस्माददोषः ।

**वा**— अनुत्पन्नानां द्वंद्वत्वापादनाशक्तेः, विधायकशब्दाभावाच्च नैषां याजमाने एवोत्पत्तिः । किं तर्हि ? आध्वर्यवे । तत्र च कर्त्राकाङ्क्षा, तदर्थश्च परिक्रयः इत्यवगते कर्तरि, न द्वंद्वाम्नानवेलायामपेक्षास्ति इति यजमानकर्तृत्वानुपपत्तिः । तत्र स्वरूपस्य असति यजमानसंबन्धे द्वंद्वता कथं याजमानी क्रियेत । न च सा कर्त्रन्तरेण क्रियमाणानां संभवति । समासन्नकरणं हि द्वंद्वता । न च अन्यकर्तृकां क्रियामन्यः समासन्नां कर्तुं समर्थः । न च समासन्नकरणानुरोधेन क्रियास्वरूपमपि याजमानं संभवति । अतः अङ्गगुणविरोधन्यायात् तदपि आध्वर्यवमेव । यजमानस्तु स्मारयिष्यति द्वंद्वतामिति समाख्याऽर्थवत्ता ।

**शा**—'**कर्माणि यत्र चोद्यन्ते तत्रैषां कर्त्रपेक्षिता । आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवाण्यतः ॥**'

**सोम**— पूर्वत्र ह्यनियमवत् इह यजमाननियमः इति प्रत्यवस्थानात् संगतिः ।

**वि**— 'वत्सं चोपसृजेत् तद्वदुखां चाधिश्रयेदिति । द्वादशद्वंद्वकमैतत् स्वामिनो वेतरस्य वा ॥, आद्यः पाठात् स्वामिकाण्डे, तादर्थ्येन परिक्रयात् । महाकाण्डोक्तितोऽन्त्योऽस्तु द्वंद्वतैवात्र कीर्त्यते ॥'

**भाट्ट**— दर्शपूर्णमासयोः 'वत्समुपावसृजति' इत्यादीनि चतुर्विंशतिकर्माणि आध्वर्यवसमाख्यायुक्तानि प्रत्येकं भिन्नदेशे विधाय पुनस्तान्येव याजमानसमाख्यायुक्तानि 'वत्सं चोपावसृजति उखां चाधिश्रयति' इत्याद्युक्त्वा 'एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्य यजेत' इति श्रुतम् । तदेषां ह्याम्नातमन्त्रवत् उभयकर्तृकत्वं तावन्न संभवति, अदृष्टार्थताऽऽपत्तेः । न चाभ्यासात् कर्मान्तरम्, अन्यपरत्वात् । अत एवैककर्तृकत्वावश्यम्भावे विशेषसमाख्यानात् याजमानत्वे प्राप्ते, नैषां याजमानकाण्डे विधानम्, आध्वर्यवे भिन्नदेशे विहितानामेव द्वयोः मिथः प्रत्यासन्नत्वाख्यद्वन्द्वतारूपगुणविधानार्थमनुवादात् । अतः पदार्थेषु तावत् अध्वर्युरेव कर्ता । न च द्वन्द्वतायामेव यजमानः

शङ्क्य:, अन्येन क्रियमाणानां अन्येन द्वंद्वतायाः संपादयितुमशक्यत्वात्। द्वंद्वता नाम एकया वत्सोपावसर्जनक्रियया धेनुवत्सयोः प्रत्यासन्नत्वसंपादनम्। एकया च अवहननक्रियया उलूखलमुसलयो:। एवं द्वादशसु क्रियासु द्रष्टव्यम्। न च तत्कर्त्रनुरोधेन प्रधानभूतपदार्थानां कर्तृबाधः, अङ्गगुणविरोधन्यायेन तदसंभवात्। न च 'तानि संपाद्य यजेत' इति क्त्वाप्रत्ययबलेनैव द्वन्द्वताया यागसमानकर्तृकत्वावगतेः वचनादेव अङ्गनिष्ठादपि पदार्थेषु समाख्याबाधः इति वाच्यम्। क्त्वाप्रत्ययस्य प्रयोजकत्वेनापि उपपत्तेः प्रधानसमाख्याबाधकत्वानुपपत्तेः। एवं द्वंद्वतानिष्ठसमाख्याऽपि प्रयोजकत्वाभिप्रायेणैव व्याख्येया। अत: स्मारणमात्रं याजमानं पदार्थास्तु आध्वर्यवा एव।

मण्डन—'द्वंद्वानि न स्युर्यजमानकर्म।'

शंकर— 'द्वंद्वान्याध्वर्यवाणि नः।' १२.

* दर्शपूर्णमासयोः **द्विबहुपत्नीकप्रयोगे** 'पत्नीं संनह्य' इत्यत्र एकवचनस्य नोहः। पत्नीसंनहनन्यायः। भा. ९।३।६।२१, * दर्शपूर्णमासयोः **धर्माः** अपूर्वप्रयुक्ता न यजिप्रयुक्ताः, तस्मात् विकृतिषु ऊहसिद्धिः। ९।१।१।१, * दर्शपूर्णमासयोः धर्माः फलप्रयुक्ताः। फलदेवताऽधिकरणम्। ९।१।३।४-५, * दर्शपूर्णमासयोः '**धान्यमसि** धिनुहि देवान्' इति धान्यशब्दः प्रयोगसमवेतवचन एव। धान्याधिकरणम्। ९।१।१३।३८-३९ वर्णकं २. * दर्शपूर्णमासयोः '**नानृतं वदेत्**' इत्यनृतवदनप्रतिषेधः क्रत्वर्थः। तत्र क्रतुगामि प्रायश्चित्तम्। ततः पुरुषार्थो निषेधो भिन्नः, तत्र स्मार्तं प्रायश्चित्तम्। वि. ३।४।८, * दर्शपूर्णमासयोः **नारिष्ठहोमा** विहिताः नक्षत्रेष्टयादौ विकृतौ अतिदिश्यन्ते। १०।४।१, * दर्शपूर्णमासयोः **नारिष्ठहोममन्त्राः** 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादयः। १०।४।१. * दर्शपूर्णमासयोः **निगमाः** निगदा वा आवाहननिगमः 'अग्निमग्न आवह', स्वाहाकारनिगमः 'स्वाहाग्निं स्वाहा सोमम्', अयाट्-निगमः 'अयाडग्नेः प्रिया धामानि', जोषणनिगमः 'अग्निरिदं हविरजुषत' इति। के. * दर्शपूर्णमासयोः **नित्यत्वेऽपि** तयोर्विहितकाले एवानुष्ठानं न सततम्, दर्शपूर्णिमाकालविशिष्टजीवनस्यैव निमित्तत्वात्। वि. ६।२।७. * दर्शपूर्णमासयोः **निर्वापः** 'अपरेण गार्हपत्यं प्रागीषं अनः अवस्थितं भवति, तस्य दक्षिणचक्रमारुह्य अनसोऽधि निर्वपति' इति। भा. १२।१।७।१५. * दर्शपूर्णमासयोः निर्वापः प्रतिदेवतं मुष्टिचतुष्टयात्मकः 'चतुरो मुष्टीन् निर्वपति' इति। वि. १०।२।२८. * दर्शपूर्णमासयोः **निर्वापे** 'अग्नीषोमाभ्याम्' इत्यत्र 'देवस्य त्वा' इत्यादिः पूर्वभागस्य 'जुष्टं निर्वपामि' इत्युत्तरभागस्य चानुषङ्गः, तेन मन्त्रपूरणं भवति। के. २।१। १६।४८. * दर्शपूर्णमासयोः **निर्वाप-बर्हिर्लवन-वेदिस्तरण-आज्यग्रहणेषु** प्रतिनिर्वापादि तत्तन्मन्त्रस्यावृत्तिः। निर्वापन्यायः। भा. ११।४।१४।४४-४५. * दर्शपूर्णमासयोः **निर्वापमन्त्रः** 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति एकं वाक्यम्। वि. २।१।१४, * दर्शपूर्णमासयोः **निर्वापमन्त्रस्य** प्रतिमुष्टि आवृत्तिः। भा. ११।४।१४। ४४-४५. * दर्शपूर्णमासयोः **निर्वापमन्त्रे** वर्तमानः अग्निशब्दः समवेतवचनत्वात् विकृतौ ऊहितव्यः। ९।१।१२।३८-३९. * दर्शपूर्णमासयोः **निर्वापमन्त्रगतस्य** 'अग्नये' इति पदस्य स्थाने 'अग्नीषोमाभ्यां' इत्यादिपदानां यथायोगं निवेशः। वि. ९।१।१२. * दर्शपूर्णमासयोः **निर्वापमन्त्रगतानां** सवितृ-अश्वि-पूषशब्दानां विकृतौ न ऊहः, कर्मासमवेतार्थत्वात्। भा. ९।१।११।३६-३७, * दर्शपूर्णमासयोः **नीवाराणां** प्रतिनिधित्वे 'व्रीहीणां मेध' इति मन्त्रे नोहः। नीवाराणां यत्र प्रकृतिद्रव्यत्वमेव तत्र तु ऊहः। ९।३।९।२३-२६, * दर्शपूर्णमासयोः **नैमित्तिकं** 'गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य' इति। नेदं नित्यम्, नित्यं तु चारणं प्रणयनपात्रम्। ४।३।२।४. * दर्शपूर्णमासयोः **पञ्चशराव ओदनः** ऐन्द्रः कर्मान्तरमपि सत् हविरार्तौ पयोऽन्तरेण दध्यन्तरेण चानुष्ठीयमानदर्शस्याङ्गम्, न तु स्वतन्त्रमेव। पञ्चशरावन्यायः। वि. ६।४।१०, * दर्शपूर्णमासयोः पञ्चशराव ओदनः ऐन्द्रः प्रायश्चित्तं एकस्य द्वयोर्वा दोहयोर्नाशे। आर्तिन्यायः। ६।४।६, * दर्शपूर्णमासयोः पञ्चशराव ओदनो द्रव्यदेवताविशिष्टं कर्मान्तरं प्रायश्चित्तरूपं न तु

दोहद्वयस्य द्रव्यरूपः प्रतिनिधिः । ६।४।९. * दर्शपूर्णमासयोः ' पत्नीं संनह्य ' इति पत्नीशब्दः द्विबहुपत्नीके प्रयोगे नोहितव्यः । पत्नीसंनहनन्यायः । भा. ९।३।६।२०, * दर्शपूर्णमासयोः पत्न्याः संनहनं समाम्नातं ' योक्त्रेण पत्नीं संनह्यति' इति । १२।१।१३।२९. * दर्शपूर्णमासयोः पत्नीसंयाजाश्चत्वारः । तत्र तृतीयाऽऽहुतौ देवपत्नीनां देवतात्वात् तद्द्वारा पत्नीसंयाजशब्दप्रवृत्तिः । अत्र जाघनी द्रव्यं विहितम् । तच्च क्रयादिना संपाद्यम्, अत्र पशोरभावात् । जाघन्याश्च प्रकरणात् नोत्कर्षः । जाघनीन्यायः । वि. ३।३।१५, * दर्शपूर्णमासयोः पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्याः उत्थानं विहितम् । १२।२।४, * दर्शपूर्णमासयोः पत्नीसंयाजेषु गार्हपत्येन आहवनीयस्य बाधः । ज्योतिष्टोमादौ विशेषविहित—इत्यत्राधिकरणम् । ३।८।१८, * दर्शपूर्णमासयोः पत्नीसंयाजरूपे अर्थकर्मणि आज्यजाघनीद्रव्ये विकल्पेन विहिते । १२।४।६, * दर्शपूर्णमासयोः पथिकृत् । ' अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत् ' । अतिपातनं अकरणम् । अस्याः पाथिकृतेः वैश्वानरेष्ट्या विकल्पः, अन्योन्यनिरपेक्षत्वात् । १२।३।५. * दर्शपूर्णमासयोः परिक्रयः अन्वाहार्यं आम्नातः । भा. १२।१।१६।३२. * दर्शपूर्णमासयोः परिग्रहो वेदेः । ' स्फ्येन वेदिं परिलिखन् परिगृह्णाति' । पूर्वपरिग्रहोऽयम् । परिग्रहो द्विविधः पूर्वपरिग्रहः उत्तरपरिग्रहश्चेति । वि. १०।१।१, * दर्शपूर्णमासयोः परिधिप्रहरणम् । यदा होता ' तच्छंयोः ' इति मन्त्रं जपति , तदानीमध्वर्युः परिधीन् अग्नौ प्रक्षिपति । तथा च कल्पसूत्रम् 'अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरति ' इति । १०।७। १२, * दर्शपूर्णमासयोः परिभोजनीया दर्भाः शास्त्रीयलवनादिसंस्काररहिताः यागे उपयोज्यमानाः । ३।८।१८. * दर्शपूर्णमासयोः परिमार्जनं ( श्लक्ष्णतामार्जनं ) पुरोडाशधर्मः ' सं ते तन्वा तनूः सृज्यतां इति त्रिः परिमार्ष्टि ' । ( सत्याषाढीयास्तु ' त्वचं गृह्णीष्व ' इति मन्त्रेण त्रिः परिमृजन्ति ) । भा. १०।१।१७।५५. * दर्शपूर्णमासयोः परिलेखनं वेदिधर्मः । ' स्फ्येन वेदिं परिलिखन् परिगृह्णाति ' । ( परिलेखनं बाह्यरेषा ) । वि. १०।१।१, * दर्शपूर्णमासयोः पर्णमयत्वं जुह्वाः क्रत्वर्थम् । फलश्रुतिस्तु अर्थवादः । पर्णः पलाशवृक्षः । ४।३।१, * दर्शपूर्णमासयोः पलाशशाखायाश्छेदने ' इषे त्वा ' इति मन्त्रः, मार्जने च ' ऊर्जे त्वा ' इति मन्त्रः । २।१।१५, * दर्शपूर्णमासयोः पवित्रं नाम ' समौ अप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ पवित्रे करोति ' । ३।८।१८. * दर्शपूर्णमासयोः पवित्रे विधृती च परिभोजनीयादर्भैः कर्तव्ये , न तु बहिर्दर्भैः । विधृतिपवित्राधिकरणम् । भा. ३।८। १७।३३. * दर्शपूर्णमासयोः पार्वणहोमौ । ' ऋषभं वाजिनं वयम् ' इति मन्त्रेण पूर्णमासेष्टौ , ' अमावास्या सुभगा सुशेवा ' इति मन्त्रेण च अमावास्येष्टौ , न तु द्वयोरपि द्वावपि । के. ९।२।१९।५७–५८. * दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमौ अनुयाजोत्तरं क्रियेते , तयोः अनुयाजैः सह नोत्कर्षः । पिष्टलेपः दृषदुपलकपालादिषु आश्लिष्टः, फलीकरणानि च तण्डुलकणाः । होमोऽयं दक्षिणाग्नौ । तत्र ' अग्नेऽदब्धायो ' इति मन्त्रेण फलीकरणहोमः , ' उलूखले मुसले ' इति मन्त्रेण पिष्टलेपहोमः । वि. ५।१।१९. * दर्शपूर्णमासयोः पुरोडाशः यागप्रयुक्तः , न स्विष्टकृत्प्रयुक्तः । उत्तरार्धन्यायः । के. ४।१।१३।२८. * दर्शपूर्णमासयोः ' पुरोडाशं पर्यग्नि करोति ' अत्र एकवचनमविवक्षितम् , सर्वानेव पुरोडाशान् पर्यग्नि करोति । भा. ३।१।७।१३. * दर्शपूर्णमासयोः ' पुरोडाशं पर्यग्नि करोति ' इति पुरोडाशशब्दो जातिवाची ' पुरोडाशेन मे माता प्रहेलकं ददाति ' इति प्रयोगात् । बर्हिराज्याधिकरणम् । वि. १।४।८, * दर्शपूर्णमासयोः पुरोडाशंपुरोडाशं प्रति कपालभेदः । ११।४।१२, * दर्शपूर्णमासयोः ' पुरोडाशाभ्यामेव असोमयाजिनं याजयेत् ' इत्ययं ' सांनाय्येन सोमयाजिनः ' इत्यस्यार्थवादः । शा. १०।८।१४. * दर्शपूर्णमासयोः पुरोडाशस्य कपालेभ्यो व्युद्धृत्य वेद्यां आसादनं क्रियते । भा. १०।१।२०।५८. * दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणे ब्राह्मणा एव निर्दिष्टाः । ' ब्राह्मणानामिदं हविः ' इति । अधिकारः आर्त्विज्ये ब्राह्मणस्यैव इत्यत्राधिकरणम् । १२।४।१५।

४६. * दर्शपूर्णमासयोः पुरोडाशस्य द्विरवदानम्, उपस्तरणाभिघारणे च द्वे इति चतुरवत्तत्वम् । वि. १०।८।१२, * दर्शपूर्णमासयोः पुरोडाशस्य सकलस्याग्नौ प्रक्षेपो नास्ति किंतु द्व्यवदानमात्रस्य । ३।४।१८, * दर्शपूर्णमासयोः पुरोडाशस्य सदनं 'स्योनं ते' इति पूर्वार्धेन कार्यम्, सादनं तु 'तस्मिन् सीद' इत्युत्तरार्धेन लिङ्गात्, न तु वाक्येन ऐकमन्त्र्यम् । ३।३।८. * दर्शपूर्णमासयोः **पुरोडाशे** प्रायशः सर्वस्मिन् दग्धे पुनः सैवेष्टिः कर्तव्या । अल्पांशदाहे तु न कर्तव्या, तस्या वर्जनीयत्वात् । सैवेयं क्षामेष्टिः नाम । क्षामेष्टिन्यायः । भा. ६।४।५।१७-२१. * दर्शपूर्णमासयोः पुरोडाशे व्रीहियवयोर्विकल्पः, न तु समुच्चयः एकार्थत्वादुभयोः । वि. १२।३।४. * दर्शपूर्णमासयोः **पुरोडाशाधिश्रयणं** कपालेषु, पाकार्थम् । 'पुरोडाशं चाधिश्रयति आज्यं च' । भा. ३।८।९।१९, * दर्शपूर्णमासयोः **पुरोडाशार्थं** तण्डुलानां पेषणम् । भा. १०।१।१२।४९-५०, 'प्रणीताभिर्हवींषि संयौति' इति संयवनम् । १३।५१, 'सवितृप्रसूत एवैनं देवताभिः संवपति' इति संवपनम् । १४।५२, 'वसूनां रुद्राणां आदित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्' इति संतापनम् । १५।५३, अङ्गारेषु कपालानामुपधानम् । १६।५४, 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इति प्रथनम् । १७।५५, 'वेदेन भस्मनाङ्गारानभ्यूहति' इत्यभ्यूहनम् । १८।५६, 'दर्भपिञ्जूलैरभिज्वलयति' इत्यवज्वलनम् । १९।५७, 'अन्तर्वेद्यां हवींष्यासादयति' इति कपालेभ्यो व्युद्धृत्यासादनं च क्रियते । चरोरर्थे तु नेदं किमपि कर्तव्यम् । २०।५८. * दर्शपूर्णमासयोः **पुरोडाशकपालस्य** श्रपणं तु प्रयोजकम्, न तुषोपवापः । पुरोडाशकपालन्यायः । भा. ४।१।११।२६. * दर्शपूर्णमासयोः **पुरोडाशधर्मा** आदौ कर्तव्याः, आज्यधर्माः पश्चात् । धर्मिणोस्तु आदौ उपांशुयाजाज्यम्, ततोऽग्नीषोमीयपुरोडाशः । वि. ५।१।८. * दर्शपूर्णमासयोः **पुरोडाशविभागार्थानां** एककार्याणां मन्त्राणां प्रयोगे विकल्पः । भा. १२।३।१३।२९. * दर्शपूर्णमासयोः **पुरोडाशश्रपणं** गार्हपत्ये विहितम् । ('आहवनीये गार्हपत्ये वा' इति तु सत्याषाढसूत्रम् ।) वि. १२।१।५, * दर्शपूर्णमासयोः **पुरोडाशश्रपणे** 'यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवः' इति श्रुतम् । अत्र विदग्धरौद्रयोरनुवादः शृतस्तुतये यथोचितपाकस्तुतये । ३।४।७, * दर्शपूर्णमासयोः **पूर्णमासे** अभिवासनोत्तरं वेदिः । दर्शे तु पूर्वेद्युर्वेदिः, यागदिने निर्वापादि अभिवासनान्तम् । ५।१।१६, * दर्शपूर्णमासयोः **पेषणं** पिष्टभवनपर्यन्तं कर्तव्यम्, न सकृत्, दृष्टफलकत्वात् । अवघातादिक्रियाणां इत्यत्राधिकरणम् । ११।१।५, * दर्शपूर्णमासयोः पेषणं प्रथमतः पश्चात् पुरोडाशश्रपणम् । चातुर्मास्येषु महापितृयज्ञे तु प्रथमतः श्रपणेन धानाः संपाद्य पश्चात् सक्तुभावाय पेषणं इति पेषणधर्माः क्रियन्ते एव । १०।२।३४ वर्णकं २. * दर्शपूर्णमासयोः **पेषणविधिः** नियमार्थः, नानुवादः । भा. ४।२।११।२६. * दर्शपूर्णमासयोः **पौर्णमास्यां** उपवेषेणैव कपालोपधानम्, परंतु तदर्थं शाखाछेदो न कर्तव्यः । न हि शाखाछेदस्य उपवेषः प्रयोजकः । वि. ४।२।३, * दर्शपूर्णमासयोः **पौर्णमास्यमावास्या**कालविशिष्टजीवननिमित्तकत्वात् 'निमित्तावृत्तौ नैमित्तिकस्याप्यावृत्तिः' इति प्रतिपौर्णमास्यमावास्याकालं अनुष्ठानम्, न तु सकृदेव । ६।२।८, * दर्शपूर्णमासयोः 'प्रणीताभिर्हवींषि संयौति' इति संयवनं क्रियते पिष्टानाम् । भा. १०।१।१३।५१, * दर्शपूर्णमासयोः **प्रणीतानां** वेद्यां निनयनं प्रतिपत्तिः । तच्च प्रणयनस्य न प्रयोजकम् । अतः संयवनोत्तरं निनयनात् प्राक् प्रणीतानां नाशेऽपि न पुनरुत्पत्तिः । निनयनन्यायः । ४।२।५।१४-१५. * दर्शपूर्णमासयोः **प्रणीताकाले** अध्वर्युयजमानयोर्विहितस्य वाङ्नियमस्य हविष्कृदाह्वाने त्यागः । तत्र च प्रोक्षणाद्यङ्गापूर्वं प्रयोजकम्, न परमापूर्वमिति । वि. ९।१।७, * दर्शपूर्णमासयोः **प्रणीताधर्मा** उत्पवनादयः । ९।४।१०. * दर्शपूर्णमासयोः **प्रणीताप्रणयनकाले** पौर्णमास्यां ब्रह्मणो वरणम् । दर्शे पूर्वेद्युः । भा. १२।१।१८।४०. * दर्शपूर्णमासयोः **प्रणीताप्रणयनकालीनो** वाङ्नियमः तद्देशगतपदार्थान्तरापूर्वप्रयुक्तः । प्रणीतावाङ्नियमन्यायः इत्यत्रा-

धिकरणम् । के. ९।१।७।२३–२४ वर्णकं २. * दर्शपूर्णमासयोः प्रणीताप्रणयनपात्रं नित्यं वारणम् ( वारणवृक्षविकारः । गोदोहनकांस्यमृन्मयानि तु काम्यानि ) । भा. ४।३।२।४. * दर्शपूर्णमासयोः प्रतिनिधिः अत्यन्तसदृश एव ग्राह्यः यथा व्रीहीणां नीवाराः । वि. ६।३।११, * दर्शपूर्णमासयोः प्रथनं पुरोडाशधर्मः 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' । चरौ नेदं कर्तव्यम् । १०।१।१७, * दर्शपूर्णमासयोः प्रदानान्तानुसमयः आग्नेयाग्नीषोमीयपुरोडाशयोः कर्तव्यः । अवदानं प्रदानान्तमेकः पदार्थः । तथा चाग्नेयमवदाय हुत्वा अग्नीषोमीयमवदाय जुहुयात् । ५।२।४. * दर्शपूर्णमासयोः प्रधानानि एकेन शब्देन फलं प्रति उपदिष्टानि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । अतस्तेषां संभूयकारित्वम् । भा. ११।१।१०।५६, * दर्शपूर्णमासयोः प्रधानानां तन्त्रेण स्वर्गः फलम् । ११।१।१। १–४, * दर्शपूर्णमासयोः प्रयाजः अन्त्यः देवतासंस्कारापूर्वोभयार्थः । आश्रयिन्यायः । ४।१।७।१८–२०.

**ꕢ दर्शपूर्णमासयोः प्रयाजः पञ्चमः आज्यभागादिदेवतासंस्कारार्थः ॥**

**प्रयाजे च तन्न्यायत्वात् । १०।१।७।१४॥**

**भाष्यम्**— दर्शपूर्णमासयोराम्नायते उत्तमः प्रयाजः 'स्वाहाकारं यजति' इति । तत्र संशयः किं उत्तमः प्रयाजः आरादुपकारकं कर्म, उत संस्कारकर्म इति । तत एतत् तावत् परीक्ष्यते किं आज्यभागादिषु या देवता यष्टव्याः, ता एवात्र देवताः उत अन्यास्ताभ्यो देवताभ्यः इति । कथमन्या देवताः, कथं वा प्रकृताः स्युरिति ? यदि 'स्वाहाकारं यजति' इति देवताविधानम्, ततोऽन्या प्रकृताभ्यो देवता । अथ 'ये यजामहे स्वाहाऽग्निम्' इति निगदेन मान्त्रवर्णिको देवताविधिः, ततः प्रकृता देवता इति । किं प्राप्तम् ? आरादुपकारकं कर्म इति । तदेतत् वर्ण्यते अन्या देवता 'स्वाहाकारं यजति' इत्यनेन विधीयते । एवं वचनप्राप्ता भविष्यति, इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत् । ननु अन्या अग्न्यादिशब्दैः न शक्यते वदितुम् । तत्रायम् 'ये यजामहे स्वाहाऽग्निम्' इति मन्त्रवर्णोऽपि विप्रतिषिध्येत । अत्रोच्यते । नैतत् विप्रतिषिद्धम् । अनेकस्यापि एकः शब्दो भवति वाचकः । तद्यथा 'माता' इति मातरमपि वदति मातारमपि । 'माता च परमं दैवतम्, समा च पुत्रेषु' इत्येतैरुपबध्यमानो जननीवचनः अवगम्यते । 'माता समः क्षिप्रश्च' इत्येभिरपि अनुबध्यमानः धान्यस्य मातुर्वाचकः । एवं मन्त्रेऽपि अग्न्यादयः स्वाहाकारदेवताके यागे प्रयुज्यमानाः तद्वाचिनः अवगम्येरन् । तथा सति प्रज्ञातं यागस्य कार्यमनुगृहीतं आरादुपक्रिया । तस्मात् आरादुपकारकं कर्म उत्तमः प्रयाजः इति ।

एवं प्राप्ते, ब्रूमः । प्रयाजे च तन्न्यायत्वात् । उक्तमधस्तात् स्थाण्वाहुतिः संस्कारकर्मेति, इहापि चशब्देन अन्वादिश्यते, उत्तमः प्रयाजः संस्कारकर्मेति । तत एतत्तावद्वर्णयन्ति । या आज्यभागादिषु देवता यष्टव्याः, ता एवेह देवता इति । कुतः ? स्वाहाकारस्य देवतासंयोगाभावात् । तद्धितेन वा देवतासंयोगो विज्ञायते, चतुर्थ्यन्तेन वा । न चेह तद्धितो न चतुर्थी । अतो न देवताविधिः । यागसामानाधिकरण्यं च द्वितीयया गम्यते । तस्मात् यागवचनः स्वाहाकारशब्दो यथा समिदादय इति । आह । यदि द्वितीयया संयोगात् तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः । ईप्सिततमे हि द्वितीया विभक्तिर्भवतीति । अत्रोच्यते । एवमेव प्राप्ते, वदामः । तन्न्यायत्वादिति । स एव न्याय इह, यः स्थाण्वाहुतौ । अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ( १०।१।६।११ ) इति । शेषभूताश्च आज्यभागादिषु अग्न्यादयः । तदर्थो यागः सन् प्रयोजनवान् भवति । इतरस्मिन् पक्षे यागो निष्प्रयोजनः स्यात् । तदर्थे देवताभिधानमपि निष्प्रयोजनं स्यात् । सत्यां च देवतासंस्कारशङ्कायां यागप्रयोजनं कल्पयितुं न शक्यते । तथा अग्न्यादीनां संभवति स्वार्थे अदृष्टा स्वाहाकारवचनता न शक्या कल्पयितुम् । तस्मात् देवतासंस्कारार्थमुत्तमः प्रयाजः । देवतास्मरणसंस्कारद्वारं च अदृष्टमपि तस्मात् यागाद्भवतीति ।

टुप्— ननु पूर्वपक्षेऽपि ( स्वाहाकारदेवतापक्षेऽपि ) संस्कारकर्मैव । अन्यत्र ( हि कर्मान्तरे अग्न्यादिवत् )

स्वाहाकारो विहितः। तस्य स्मारकः ('स्वाहाग्निम्' इत्यादिर्मन्त्रः) भविष्यति (तेन मान्त्रवर्णिकमेव स्वाहाकारस्य देवतात्वम्। अत्र भविष्यति इत्यतः परम् 'नारिष्ठहोमादिषु' इति पदं लिखिते मुद्रिते च वर्तते। तन्त्ररत्ने तु न तत् स्पृष्टम्) शब्दपदार्थनिर्देशात्। ('स्वाहाकारं यजति' इति हि कारप्रत्ययान्तः शब्दोऽयं शब्दपरार्थकः, तस्यैव देवतात्वमाह, न स्वाहाऽर्थस्य)। स्वाहाशब्दो हि (मन्त्रगतः कारप्रत्ययाभावात्) अर्थस्य स्मारकः, न शब्दस्य। स च (अर्थः) स्वाहाकारमन्त्रेणैव (देवतात्वेन) चोद्यते। (न शब्दः। तेन अर्थस्य देवतात्वं मन्त्रवर्णात् स्यात्। अतः—) वाचनिकोऽयं देवताविधिः। (पूर्वपक्षमाह—) करणेन मन्त्रेण देवता अवगम्यते। यथा 'सूक्तवाकेन प्रस्तरम्' इति। (करणविभक्त्या सकलस्य सूक्तवाकस्य करणत्वावगमात् अग्न्यादीनां देवतात्वं आयुरादीनां च फलत्वं गम्यते तद्वत्)। न चायम् (स्वाहाऽग्निं इत्यादिर्मन्त्रः) करणत्वेन निर्दिष्टः (अतो नात्र मान्त्रवर्णिकी देवता)। ननु च अग्न्यादिशब्दः स्वाहाकारं न शक्नोति वक्तुम्। उच्यते। शक्ष्यति द्व्यर्थत्वात् मातृवत्। (यथा मातृशब्दो धान्यस्य मातारं जननीं चाभिधत्ते तद्वत्। सिद्धान्तमाह—) अत्राभिधीयते। न द्वितीयान्तेन शब्देन देवता उच्यते प्रमाणाभावात्। अपिच स्वाहाकारः शब्दपदार्थको न शक्नोति देवतां वक्तुम्। (नहि शब्दस्य देवतात्वमुचितम्)। तस्मात् मान्त्रवर्णिको देवताविधिः। (यत्तु करणविभक्तिनिर्देशाभावात् न मान्त्रवर्णिकी देवतेत्युक्तम्, तत्राह—) प्रकरणात् क्रमसहितात् करणभावोऽवगम्यते। स्मरणं च प्रधानदेवतया अपेक्षितम्। अतः तेनैवांशेन संबध्यते। (तेन संस्कारार्थत्वसिद्धिः)।

**लिङ्गदर्शनाच्च। १५॥**

**भाष्यम्**— लिङ्गमपि अस्मिन्नर्थे भवति। किं लिङ्गम्? संप्रतिपन्नदेवताकः चातुर्मास्येषु उत्तमप्रयाजस्य निगदो दृश्यते 'स्वाहाऽग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणम्' इत्येवंलक्षणकः। स देवतासंस्कारपक्षेऽवकल्पते। इतरस्मिन्नदृष्टार्थः स्यात्। तस्मादपि देवतासंस्कार उत्तमः प्रयाजः स्यात्। प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्तन्ते पूर्वपक्षे। सिद्धान्ते तु निवर्तन्ते।

**शा**— उत्तमः प्रयाजः 'स्वाहाकारं यजति' इति किमारादुपकारकः, उत आज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारः इति। तदर्थमिदं विचार्यते किं 'स्वाहाकारं यजति इति देवताविधिः, उत नामधेयं इति। तत्र 'वचनाद्देवतालाभे न मन्त्रात् कल्पनं क्षमम्। तस्याश्चानुपयोगित्वाद् भवेदारादुपक्रिया॥' इति प्राप्ते, उच्यते 'न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते। न च, यागविधौ क्षीणो विधत्ते देवतां विधिः॥' मन्त्रे च आज्यभागादिषु यक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्ते इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थकल्पना। तस्मात् विकृतिषु सौर्यादिषु अग्न्यादिपदानि लुप्तार्थत्वात् निवर्तन्ते।

**सोम**— स्थाण्वाहुतेः अस्तु संस्कारत्वं स्थाणोः पूर्वं यूपसंबन्धित्वात्। इह तु कथञ्चिदपि स्वाहाकारस्य समवायाभावात् न संस्कारकत्वं इति इत्युत्थितेः प्रत्युदाहरणं संगतिः। सूत्रार्थस्तु— दृष्टे संभवति अदृष्टकल्पना न युक्तेति स्थाण्वाहुतिन्यायसाम्यात् उत्तमप्रयाजस्यापि संस्कारकत्वम्। इति।

**वि**— 'अन्त्यः प्रयाज आरात् किमुपकार्युत (री उ) संस्कृतिः।, स्वाहाकारेति देवोक्तेर्मातृवन्मन्त्रवर्णनात्॥ आद्यो, मैवं चतुर्थ्यादेरभावाद् यागमात्रके। विधित्सयाऽत्र सौर्यादावर्थोऽग्न्यादिनिवर्तनम्॥'

**भाट्ट**— स्वाहाकारप्रयाजे सत्यपि 'स्वाहाकारं यजति' इतिवचनेन 'विष्णुं यजति' इतिवत् स्वाहाकारदेवताविधौ याज्यामन्त्रवर्णे अग्न्यादीनां प्रधानादिदेवतानां प्रत्यभिज्ञायमानानां प्रकाशनात् स्विष्टकृद्वदेव मन्त्रांशे तत्तद्देवताप्रकाशनार्थत्वावगतेर्युक्तः एव सौर्यादौ अग्निपदस्थाने सूर्यपदोहवत् अग्नीषोमादिपदानां बाधः। न हि तदा तत्रत्याग्न्यादिपदानां स्वाहाकारवाचित्वकल्पने प्रमाणमस्ति, स्विष्टकृद्वत् तत्तद्देवतासंस्कारकत्वेऽपि प्रकृत-

यागाङ्गत्वोपपत्तेः । 'अग्न आज्यस्य वियन्तु' इति मन्त्रेण 'हे अग्निपदलक्षित स्वाहाकार त्वयि तुष्टे तत्तत्प्रधानादिदेवताः सर्वा यक्ष्यमाणाः संतुष्टाः भवन्तु' इत्यर्थाङ्गीकारात् । अतः स्वाहाकारयागः उद्देशांशे परं आरादुपकारकः स्यात्, न तु मन्त्रांशेऽपि, स्विष्टकृद्वदेव तत्तद्देवताप्रकाशकत्वोपपत्तेः । वस्तुतस्तु न स्वाहाकारस्य द्वितीयया देवतात्वाभिधानम्, स्वाहाकारशब्दस्य स्वाहाकारं यथा स्यात् तथेति णमुलन्तत्वादिनाऽपि संभवेन अकारान्तत्वस्य संदिग्धत्वात् । अतः प्रथमविधिप्रकारलिप्सया मन्त्रवर्णप्राप्तस्वाहाकारपदवत्त्वं प्रवृत्तिनिमित्तीकृत्य स्वाहाकारशब्दो नामधेयमेवेत्युक्तं कौस्तुभे । देवताश्चास्मिन् यागे मन्त्रवर्णप्राप्ताः यक्ष्यमाणाः अग्न्यादयः एव सूक्तवाकवत् । अतश्चायं यागः उद्देशांशेऽपि तद्वदेव तत्तद्देवतासंस्कारकः मन्त्रांशेऽपि, न तु स्विष्टकृद्वन्मन्त्रांशे एव संस्कारकः, उद्देशांशे तु आरादुपकारकः इति सिद्धः एवायमर्थः उत्तरविवक्षया स्मार्यते इति द्रष्टव्यम् ।

मण्डन— 'संस्कारकर्मोत्तमकः प्रयाजः ।'

शंकर— 'स्वाहाकारः संनिपाती ।'

* दर्शपूर्णमासयोः **प्रयाजा** अनुयाजाश्च आज्येनैव हूयन्ते । तत्र प्रयाजत्रयार्थाज्यधारणार्था जुहूः, अन्तिमप्रयाजद्वयाज्यस्य अनुयाज्यस्य धारणार्था च उपभृत् । **वि. ५।२।८.**

**⌛ दर्शपूर्णमासयोः प्रयाजा आरादुपकारकाः, समिदादिपदानां नामधेयत्वात् ॥**

**प्रयाजेऽपीति चेत् । ९।२।२०।५८ ॥**

**भाष्यम्**—दर्शपूर्णमासयोः प्रयाजा आम्नाताः 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति । तत्र संशयः क्रियते किं समिधो यजतीत्यादिशब्दैः समिदादयो देवताविशेषा विधीयन्ते, एतान् समिदादीन् यजतीति । किंवा न प्रकृतैः समिदादिभिः संबन्ध उपादीयते, एवंशब्दिका देवता न प्रकृतौ उपदिश्यन्ते इति । किं तावत् प्राप्तम् ? प्रकृतानां समिदादीनां यागो विधीयते । समिदादयश्च देवता वाक्यसंबन्धादिति । एवं प्रकृतैः समिदादिभिः संबन्धे क्रियमाणे प्रकरणानुग्रहो भविष्यति । तस्मात् प्रयाजेऽपि प्रकृता देवता भवितुमर्हतीति । देवताप्राधान्यं च यथा पार्वणहोमे इति ।

**नाचोदितत्वात् । ५९ ॥**

**भाष्यम्**—नैतदेवम् । नात्र समिदादयश्चोद्यन्ते देवतात्वेन । कुतः ? द्वितीयानिर्देशात् । तद्धितनिर्देशेन वा देवता चोद्यते, चतुर्थ्यन्तनिर्देशेन वा । तत्र हि तादर्थ्यं गम्यते । तादर्थ्ये च सति देवता भवति । न देवता नाम जात्या काचित् । सैव कस्यचिद्रूपस्य देवता, सैव नान्यस्य । यस्य यां प्रति तादर्थ्यम्, सा तस्य देवता । द्वितीया हि ईप्सिततमे कारके भवति । तत्र न द्रव्यस्य तादर्थ्यं गम्यते । तस्मात् न द्वितीयाऽन्तेन देवताविधानम् ।

अत्राह । तादर्थ्यं कल्पयिष्यामः । यथा 'विष्णुं यजति, वरुणं यजति' इति । अत्र न विष्णुर्वरुणो वा यागः । नापि यागादर्थान्तरम्, यागस्य कारकं यत् ईप्सितम्, तत् द्वितीयया अभिधीयते । तेन तत्र कल्प्यते तादर्थ्यम् । शब्दान्तरेण वा विहितं गम्यते । इह तु न शब्दान्तरविहितम् । न चैवं शक्यं परिकल्पयितुम् । न च यागस्य कारकत्वेन संभवति । समिदादिशब्दकत्वात्तु यजीनां समिदादयः शब्दा वाचका उपपद्यन्ते । क्रियायां चेप्सितायां इष्यते द्वितीया । यथा पाकं पचतीति । तस्मात्, समिधो यजतीत्ययमर्थः 'समिद्यजिः कर्तव्यः' इति । यदा च यजिं प्रति अनुष्ठानं चोद्यते, तदा यजिरुपदिष्टो भवति । यदि पुनरत्र देवता उपदिश्येत । उपदिष्टे यजौ देवता उपदिश्येत । तत्र उपदिष्टोपदेशे वाक्यं भिद्येत । तस्मान्न देवतोपदेशः । यदा न देवतोपदेशः, तदा मान्त्रवर्णिको देवताविधिः । तदा चोपादेयत्वात् एवंशब्दिका देवताश्चोद्यन्ते । तस्मात् मान्त्रवर्णिको देवताविधिः ।

**टुप्**— अत्र सिद्धान्तग्रन्थे 'विष्णुं यजति, वरुणं यजति' इति परिचोदना । (तत्र सिद्धान्तभाष्यं कल्प्यते तादर्थ्यम्, शब्दान्तरेण वा विहितं गम्यते इति । तत्र द्वितीयं परिहारं द्वेधा व्याचष्टे-) अत्रोच्यते । वाक्यान्तरेण वैष्णवयागो विहितः, तस्यायमनुवादः । अथवा याग एवात्र विधीयते । तत्र प्रकरणसंनिधिभ्यां मान्त्रवर्णिको विष्णुः प्राप्तः, तस्य (लक्षणया) अय-

मनुवादः यागस्तुत्यर्थः । न चात्र नामधेयं विष्णुः, द्वितीयान्तस्य यजतिसामानाधिकरण्याभावात् । ( एवं दृष्टान्तं परिशोध्य प्रकृतमनुसंधत्ते- ) प्रयाजेष्वपि च मान्त्रवर्णिको देवताविधिः । अग्निसमिदादयश्च ( अग्निशब्देन तनूनपात् प्रदर्शितः ), एवमेव (विष्णवादिवदेव) अनूद्यन्ते । संज्ञारूपा वा ( समिदादिशब्दाः ) । यद्यपि ( तत्प्रख्यन्यायेन यजि- ) सामानाधिकरण्यमस्ति, तथापि न च सा ( संज्ञा ) भेदिका, किन्तु अभ्यास एव भेदकः । तदुक्तं द्वितीये ( २।२।२।२ ) ।

शा—'उद्देशपूर्वकस्त्यागो याजिना ह्यभिधीयते । त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन ॥' तस्मादारादुपकारकाः प्रयाजाः ।

सोम— पूर्ववत् उत्थानात् संगतिः ।

वि—'देवता यजयो वा स्युः प्रयाजे समिदादयः ।, विष्णवादिवद् देवतात्वं, न चतुर्थ्याद्यभावतः ॥'

भाट्ट— समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्द्वितीयाऽन्तैः 'विष्णुं यजति' इतिवत् देवताविधिः, यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिः । उत्पत्तिवाक्यस्थं तु समिदादिपदं देवतानुवादो नामधेयमेव वा । सर्वथा संनिपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पार्वणहोमस्वाहाकारोत्तमानुयाजादिवदिति । न च समिदादीनामुपयोगाभावः, वेदे सर्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शनेन आग्नेये उपयोगसंभवात् । समिन्मात्रस्यैव वा समिन्धनादौ उपयोगसत्त्वेन तस्यैव संनिपत्योपकारकत्वम् । इति प्राप्ते, सत्यपि वेदे समिदादिपदानामग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादिपदैः तत्तत्प्रकाशनानुपपत्तिः । शब्दस्य देवतात्वेन तद्भेदे पदान्तरप्रयोगानुपपत्तेः । न च पूर्णमासादिशब्दस्य पार्वणहोमयोर्देवतात्वेऽपि तदर्थस्यापि आग्नेयादेः उद्देशांशविषयशब्दप्रतिपाद्यत्वसंबन्धेन उद्देश्यसंबन्धित्वात् पार्वणहोमसंस्कार्यत्ववत् इहापि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याग्नेः संस्कार्यत्वोपपत्तिः इति वाच्यम् । तथात्वेऽपि 'समिधो अग्न आज्यस्य वियन्तु, तनूनपादग्न आज्यस्य वेतु' इत्यादिमन्त्रवर्णेषु अग्नेः संबोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियाऽन्वयप्रतीतेः समिदादिपदस्य अग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पशौ अतिदेशानुपपत्तेश्च । यत्तु इतरप्रयाजानां आरादुपकारकत्वेऽपि समिद्यागस्य समिन्धनाङ्गभूतसमित्संस्कारकत्वमिति, तन्न । तथात्वे 'यो वै प्रयाजानां मिथुनं वेद, समिधो बह्वीरिव यजति' इति लिङ्गानुपपत्तेः । अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेन आरोपितं बहुत्वमिति सूच्यते । न च तत् समिन्धनाङ्गसमित्सु युज्यते, वस्तुत एव तासां बहुत्वात् । आरादुपकारकत्वपक्षे तु सत्यपि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकसंज्ञाबलेन एकस्यैव समित्पदार्थस्य सिद्धौ लिङ्गवशेन युक्तो बहुत्वारोपः । तस्मात् चत्वारोऽपि प्रयाजाः आरादुपकारका एवेति न विकृतौ ऊहितव्याः । १९.

मण्डन— 'समिदादौ यजिविधिः ।' २७.

शंकर— 'प्रयाजा अर्थकर्म च ।' ३१.

* दर्शपूर्णमासयोः प्रयाजे उत्तमे मान्त्रवर्णिको देवताविधिः । टुप्. १०।१।७।१४, * दर्शपूर्णमासयोः प्रयाजेषु पाठक्रमो नियामकः । पाठक्रमाधिकरणम् । भा. ५।१।४।४, * दर्शपूर्णमासयोः प्रयाजेषु वाक्यपाठेन प्रतीतस्य क्रमस्य नियमोऽस्ति । वि. ५।१।४. * दर्शपूर्णमासयोः प्रयाजादीनां अङ्गत्वं प्रकरणात् । प्रकरणान्तराधिकरणम् । भा. ३।३।४।११. * दर्शपूर्णमासयोः प्रयाजादीनां सर्वेषामङ्गानां प्रधानसमुदाये एक एवोपकारो मुख्यः । वि. ११।१।२. * दर्शपूर्णमासयोः प्रयाजद्व्यार्थं समानयनं औपभृताज्यस्य प्रयोजकम् । आज्यसमानयनाधिकरणम् । भा. ४।१।१५।४०-४१, * दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते, 'अभिक्रामं जुहोति अभिजित्यै' इति । तस्य अभिक्रमणस्य प्रयाजेष्वेव निवेशः, न सर्वस्मिन् प्रकरणे । अभिक्रमणाधिकरणम् । ३।१।१०।१९-२०, * दर्शपूर्णमासयोः प्रयाजशेषेण हविरभिघारणार्थं शेषधारणतत्पात्रे पृथक् न कर्तव्ये । प्रयाजशेषाभिघारणन्यायः । ४।१।१४।३३-३९, * दर्शपूर्णमासयोः प्रयोगभेदेन सर्वे कामाः, न तु एकेनैव प्रयोगेण । योगसिद्ध्यधिकरणम् । ४।३।११।२७-२८, * दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समास-

वचनं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । ११।४।१।२, * दर्शपूर्णमासयोः प्रस्तरस्य प्रहरणं 'आशीर्भिः प्रस्तरं प्रहरति' (आशीर्भिः सूक्तवाकेन)। ११।३।५।१२, * दर्शपूर्णमासयोः प्रस्तरस्य प्रहरणं 'सह शाखया प्रस्तरं प्रहरति'। वि. ४।२।४ । 'सूक्तवाकेन प्रस्तरं प्रहरति'। ९।१।१५. * दर्शपूर्णमासयोः प्रागूर्ध्वं चेति सोमस्य द्वौ कालौ । टुप्. ५।४।३।६. * दर्शपूर्णमासयोः 'प्राचीमाहरति' इति शाखावादः, न दिग्वादः। शाखावादः इत्यत्राधिकरणम् । भा. ४।२।२।७, * दर्शपूर्णमासयोः प्राशित्रावदानं सर्वेभ्य एव, न केवलं आग्नेयादेव । ३।१।१५।२६. * दर्शपूर्णमासयोः प्राशित्रादिभक्षणं ऋत्विग्भिरेव कर्तव्यम्, न यजमानेन । वि. ६।४।३. * दर्शपूर्णमासयोः प्रैषो नित्यः 'प्रोक्षणीरासादय' इत्यादिः । भा. ६।८।८।२८.

⌛ दर्शपूर्णमासयोः प्रैषप्रैषार्थौ भिन्नकर्तृकौ । प्रोक्षण्यासादनादि कर्म नाध्वर्योः, किन्तु अग्नीधः ॥

**प्रैषेषु च पराधिकारात् । ३।८।११।२३ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्र प्रैषाः समाम्नाताः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि' इति । तत्र संदेहः किं य एव प्रैषे, स एव प्रैषार्थे, उतान्यश्च प्रैषेऽन्यश्च प्रैषार्थे, इति । किं प्राप्तम् ? एक एव प्रैषप्रैषार्थयोरिति । कुतः ? समाख्यानात् । अन्यः इति चाश्रुतत्वात् । नन्वात्मनः प्रैषो विप्रतिषिध्यते । उच्यते । न प्रैषो भविष्यति । प्राप्तकाले लोटं वक्ष्यामः । आह । प्राप्तकालेऽपि सति युष्मदादिष्वेव उपपदेषु मध्यमादयो व्यवस्थिताः । न पुरुषसंकरो भवति । उच्यते । सत्यां विवक्षायां युष्मदादिषु मध्यमादयः । यदा तव प्राप्तः काल इति विवक्ष्यते तदा युष्मद्येव मध्यमः, नास्मदि शेषे वा । यदा खलु क्रियायाः प्राप्तः कालः इत्येतावत् विवक्ष्यते, न तव मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति । न चेदं युगपत् विवक्षितुं शक्यते, पदार्थस्य प्राप्तः कालः तव चेति । भिद्येत हि तथा वाक्यम् । तेन यदि वा निर्ज्ञाते पदार्थकाले 'तव कालः' इति शक्यते वदितुम्, यदि वा तवेति निर्ज्ञाते 'पदार्थस्य कालः' इति । तत्र पदार्थस्य कालो वदितव्यः, न तु युष्मदर्थस्य । तेन हि स्मृतेन प्रयोजनम् । स हि कर्तव्यः इत्यवगतः, न तु युष्मदर्थस्तथा । तस्मात् समाख्यानात् अध्वर्योरेव प्रैषप्रैषार्थौ । इति प्राप्ते, ब्रूमः । प्रैषेषु अन्यः, अन्यस्तदर्थेषु इति । कुतः ? पराधिकारात् । परस्मिन् हि प्रैषे उपपद्यते, नात्मनि इति । आह, ननूक्तं प्राप्तकाले भविष्यतीति । उच्यते । न संभवति प्रैषे, प्राप्तकालता न्याय्या । तस्मात् युष्मदर्थो गम्यमानो न विवक्षितः इत्युच्यते । संभवति चात्र प्रैषार्थः तस्मात् प्रैषः । प्रैषश्चेत्, अन्यः प्रैषार्थः इति सिद्धम् ।

**वा**— प्रैषस्य प्रैषार्थस्य च आध्वर्यवसमाख्यातुल्यत्वात् अध्वर्युप्रयोज्यत्वे अवधारिते कथमात्मनः प्रैषः इति चेदाह- नैवायं प्रैषः, किं तर्हि ? प्राप्तकालतायां लोटं वक्ष्यामः इति । प्रैषवादी तु आह, प्रत्यगात्मविषया चेत् प्राप्तकालता विवक्षिता, हन्त उत्तमपुरुषेण भवितव्यम् । नहि परविषययुष्मदर्थमन्तरेण मध्यमपुरुषो लभ्यते । प्रैषे तु स्वभावतः परविषयत्वात् सुलभ इति । परस्तु आह, यदा समाख्याऽवगतात् समानकर्तृत्वात् प्रैषबुद्धिरपनीता, तदा प्राप्तकालत्वमभिधीयमानं किं क्रियाणामभिधीयताम्, उत कर्तृणामिति, क्रियाणां इत्येव गम्यते । ताः हि चोदितत्वात् प्रयोजनवत्यः प्रथमतरं प्रतीताः । तासां च अनुष्ठानार्थं प्राप्तकालत्वस्मरणं दृष्टार्थम् । कर्तृप्राप्तकालप्रकाशने तु सर्वं विपरीतम् । आख्यातेषु च प्रथमादेः पुरुषस्य कस्यचित् अवश्यम्भावित्वात् नान्तरीयककृत एव मध्यमपुरुषो भविष्यति । क्रियैव चोच्यते तव प्राप्तकाल इति । यदि च कर्तुः प्राप्तकालत्वमुच्येत, ततः 'किं कर्तुम्' इति साकाङ्क्षमेव स्यात् । अथ 'प्रोक्षण्यासादनादि कर्तुम्' इति (अध्याह्रियते), तथा विशिष्टार्थप्रेषणात् वाक्यभेदः स्यात् । तस्मादपि क्रियायाः प्राप्तकालत्वं प्रकाश्यते । अथापि प्रैषोऽयं आश्रीयते, तथापि आत्मानमेव कथञ्चित् शरीरशरीरिणोः अवस्थाऽन्तराणां वा भेदेन प्रेषकं प्रेष्यं च व्यपदेक्ष्यति । इति समानकर्तृकत्वे प्राप्ते, ब्रूमः । प्रैषेषु च इतरमन्यः कुर्यात् इति संबन्धः । (अत्र प्रैषेषु च इति प्रकृतसूत्रस्थम्,

इतरमन्यः इति पूर्वसूत्रादनुवृत्तम्, कुर्यात् इति अध्याहृतम्) कुतः? स्वभावेनैव तेषां परविषयत्वात् परिक्रयवत्। यत्तु नैवायं प्रैष इति, तदयुक्तम्, मन्त्ररूपादेव प्रैषप्रत्ययोपपत्तेः। यो हि समानकर्तृकतया तं बाधते, तेन समाख्यया लिङ्गं बाधितं स्यात्। न च प्राप्तकालतया लिङ्गविरोधः परिह्रियते, मध्यमपुरुषस्य असंपादनात्। न च शब्दान्तरेण अनुपात्ता क्रिया एवं शक्यते वक्तुं 'तव प्राप्तः कालः' इति। यद्यपि च शक्यते, तथापि न दृष्टः कश्चिदर्थः स्यात् चेतनविषयत्वात् ईदृशस्य प्रयोगस्य। तथा आत्मभेदपरिकल्पनायामपि नैव दृष्टं प्रयोजनम्। गौणताऽत्र स्थितैव। मुख्यं च कार्यं मन्त्राणां इत्यवधारितम् (३।२।१)। ततश्च यद्यपि प्राप्तकालतायामेव लोट्, तथापि परस्यैव सा कथ्यते इति पराधिकारो निवर्तते। न च वाक्यभेदः, विशिष्टार्थप्रेषणात्। अवश्यं चात्र विशिष्टता अभ्युपगन्तव्या प्रोक्षणीपदोपादानात्। न च एकपदोपात्तः अनेकोऽर्थः वाक्यं भिनत्ति। सर्वाख्यातेषु क्रिया–कर्तृ–संख्या–उपग्रह–पुरुषविशेषभावनानां युगपदुपादानस्य अपरिहार्यत्वात्। न च ईदृशं विशिष्टविधानं क्वचित् नाभ्युपगन्तव्यम्। प्राप्तकालत्वे च क्रियायुष्मदर्थयोः पृथक्त्वात् भेदेन शक्तिः कल्प्येत। प्रैषे तु तस्य नित्यमेव युष्मदर्थविषयत्वात् मध्यमपुरुषः अनुवादः। एवं चैषा (प्रैष–)समाख्या अनुगृह्यते। तस्मात् लिङ्गेन समाख्याबाधात् अन्यः प्रैषः, अन्यश्च प्रैषार्थः इति।

**सोम—** पूर्वत्र वचनबलात् आतिदेशिकस्य प्राकृतसमाख्यालब्धस्य कर्तुर्बाधेऽपि, इह वचनाभावात् न समाख्यालब्धकर्तृबाधः इति प्रत्यवस्थानात् संगतिः। **सूत्रार्थस्तु–** प्रैषेषु प्रैषार्थमन्यः कुर्यात्, तेषां स्वभावतः परविषयत्वादिति।

**वि—** 'प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा।, आख्ययाऽऽद्यः, सादयेति प्रेषितोऽन्योऽस्तु लिङ्गतः॥'

**भाट्ट—** 'प्रोक्षणीरासादय' इत्यादयः प्रैषाः, प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानात् अध्वर्युणैव एकेन कर्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः 'चेतो वृथा खिद्यसे' इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसंभवात्। वस्तुतो नैवायं प्रैषः, अपि तु 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा० ३।३।१६३) (कृत्यप्रत्ययाः लोट् च एतेषु अर्थेषु स्युः। तत्र प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा।) इति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थको मध्यमपुरुषस्तु साधुत्वार्थः। अथवा 'हे प्रोक्षण्यासादन तव प्राप्तः कालः' इति क्रियायां चेतनत्वाध्यारोपेण सः। यत्र तु 'अग्नीदग्नीन् विहर' इत्येवं प्रैषः, तत्रास्तु संबोधनानुरोधेन प्रैषार्थस्य आग्नीध्रकर्तृकत्वम्। वस्तुतस्तु 'हे अग्नीत् ममाग्निविहरणस्य प्राप्तः कालः' इति व्याख्यातुं शक्यत्वात् न तत्रापि समाख्याबाधः। **इति प्राप्ते,** समाख्याऽनुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चैतन्याध्यारोपेण व्याख्याने प्रमाणाभावात् संबोधनमध्यमयोश्च अदृष्टार्थत्वापत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः प्रैषस्यापि स्वस्मिन् औपचारिकत्वापत्त्या एकत्राध्वर्युसमाख्याबाधेन उभयोर्भिन्नकर्तृकत्वमेव।

**मण्डन—** 'प्रैषे तदर्थे च न कर्तुरैक्यम्।' १२.

**शंकर—** 'प्रैषप्रैषार्थकर्तृभित्।' कर्त्रोः भिदा। १४.

* दर्शपूर्णमासयोः **प्रोक्षणं** न व्रीहिस्वरूपप्रयुक्तम्, किन्तु अपूर्वप्रयुक्तम्। भा. ९।१।५।११–१९, * दर्शपूर्णमासयोः **प्रोक्षणादीनि** संनिपत्योपकारकाणि अपूर्वप्रयुक्तानि। हन्तिपिष्यधिकरणम्। ९।१।२।२–३, * दर्शपूर्णमासयोः '**प्रोक्षणीरासादय**' इति प्रोक्षणीशब्दः यौगिकः। तेन क्वचित् घृतं प्रोक्षणं भवति। प्रोक्षण्यधिकरणम्। १।४।८।११, * दर्शपूर्णमासयोः **प्रोक्षण्यासादनादि** कर्म नाध्वर्योः, किन्तु अग्नीधः। प्रैषा आध्वर्यवाः इत्यत्राधिकरणम्। ३।८।१२।२४–२५, * दर्शपूर्णमासयोः **फलदेवताप्रकाशका** मन्त्राः अपूर्वप्रयुक्ताः। फलदेवताधिकरणम्। ९।१।३।४–५, * दर्शपूर्णमासयोः **फलभावनायां** अङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यद्यपूर्वं फलं अङ्गैरुत्पाद्येत, अङ्गफलमेव तत् स्यात्। ११।१।७।३५. * दर्शपूर्णमासयोः **फलीकरणहोमः** 'अग्नेऽदब्धायो' इति मन्त्रेण अनुयाजोत्तरं दक्षिणाग्नौ।

तदुपकारेण अर्थवान् भविष्यतीति । इतरथा विना वाक्येन फलं कल्पयितव्यं स्यात् । तस्मात् वाक्यं फलाभावेनैव बाधितम्, इतिकृत्वा प्रकरणमनुग्रहीतव्यमिति ।

**अतद्विकारश्च । ४७ ॥**

**भाष्यम्**— न च तद्विकारः अग्निहोत्रं ज्योतिष्टोमो वा, न दर्शपूर्णमासविकारः । यदि तद्विकारो भवेत्, तत्रापि स्कन्ने भिन्ने वा प्रायश्चित्तं स्यादिति ।

**शा**— गतं प्रासङ्गिकं ( ६।५।८–१४ ) पुनः प्रायश्चित्ताधिकारमनुसंधत्ते ।

**सोम**-- **सूत्रार्थस्तु**-- अधिकारे दर्शपूर्णमासादिप्रकरणे श्रुतं प्रायश्चित्तं दोषसामान्यात् सर्वत्र स्यादिति ।

**वि**-- 'भिन्ने होत्रे यत्रतत्र प्रकृते वा, निमित्ततः । सर्वत्र स्यात्, फलित्वाय प्रकृतेनैकवाक्यता ॥'

**भाट्ट**-- 'भिन्ने जुहोति' इत्यादि प्रायश्चित्तं नैमित्तिकमपि फलापेक्षायां प्रकरणात् क्रत्वङ्गम् । निमित्तमपि भेदनादिकं न लौकिककपालादेः, प्रायश्चित्तसमाख्याबलेन क्रत्वङ्गभूतकपालादिभेदननिमित्तवैगुण्यपरिहारार्थत्वस्यैव कल्पनेन स्वतन्त्रादृष्टकल्पने गौरवात् ।

**मण्डन**-- 'प्रकृते स्याद् भिदाऽऽहुतिः ।' १६.

**शंकर**-- 'भिन्ने होमो न सर्वगः ।' १७.

* **दर्शपूर्णमासार्थोद्धरणकाले** अग्निहोत्राङ्गोद्धरणाङ्गमन्त्रो नानुष्ठेयः । भा. ९।४।८।३१, * **दर्शपूर्णमासार्थोद्धृतस्याग्नेः** उद्दाने ज्योतिष्मतीष्टेः नानुष्ठानम् । ९।४।६।२८.

* **दर्शपूर्णमासाख्यस्य** एकस्यैव कर्मणः अयनादिशब्दवाच्यावृत्त्यादिगुणयोगेन अनेकदाक्षायणादिसंज्ञोपपत्तिः । सु. पृ. ८१९.

* **दर्शपूर्णमासादेः** गुणकामाः विकृतौ न प्रवर्तन्ते । भा. ८।१।१४।२३–२५, * **दर्शपूर्णमासादीनां** कर्मणां साङ्गानामध्वर्युः कर्ता । ३।४।८।२२. * दर्शपूर्णमासादीनां काम्यकर्मणां सर्वाङ्गोपसंहारः । वि. ११।१।३, * दर्शपूर्णमासादीनां निमित्तावृत्तौ आवृत्तिः । अग्निहोत्रादिकर्मणां इत्यत्राधिकरणम् । ६।२।८.

* दर्शपूर्णमासादीनां सर्वफलकत्वेऽपि प्रतिफलं पृथगनुष्ठानम् । योगसिद्ध्यधिकरणम् । भा. ४।३।११।२८. * **दर्शपूर्णमासादौ** अध्वर्युकाण्डे यजमानकाण्डे च द्विराम्नाता मन्त्रा अध्वर्युयजमानयोर्द्वयोरपि । द्व्याम्नाताधिकरणम् । वि. ३।८।८. * दर्शपूर्णमासादौ आवाहनादिनिगमेषु विधिगतदेवतापदेनैव अभिधानं कर्तव्यम् । भा. १०।४।१२।२३–२४.

**⌛ दर्शपूर्णमासादौ इडाऽऽदिशेषभक्षणं ऋत्विजामेव ( यजमानस्य च ) ॥**

**निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् । ६।४।३।४ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्र भक्षाः प्राशित्रचतुर्धाकरणशंयुवाककालाः । तेषु संदेहः किमन्ये एव तेषां भक्षयितारः, उत प्रकरणगताः पुरुषा इति । किं प्राप्तम् ? शेषभक्षः अन्यैरप्रकरणस्थैः कर्तव्यः । कुतः ? निर्देशात् । निर्दिश्यन्ते हि अध्वर्य्वादयः इडाभक्षे, 'यजमानपञ्चमा इडां भक्षयन्ति' इति । सर्वेषु भक्षयितव्येषु प्राप्तेषु परिसंख्यानार्थो निर्देशः क्रियते । इडामेवैते भक्षयेयुरिति । यथा आग्नेयोऽष्टाकपाल इति सर्वस्मिन्नवयविनि यागानियमे प्राप्ते द्व्यवदानमात्रं श्रूयते । स विधिर्न, प्राप्तत्वात् । नानुवादः अनर्थकत्वात् । परिसंख्या तु अर्थवत्त्वाय । एवमेषां परिसंख्येति । अपि च यदि प्रकृता एव भक्षयेयुः, अश्वमेधे दोषः स्यात् । बहुत्वाद्भक्षाणाम्, भक्षयन्तो म्रियेरन् ।

**टुप्**— भक्षो निर्वर्तयितव्यः । तस्मिन् यथासमाख्यं कर्तृषु प्राप्तेषु परिसंख्या क्रियते, इडामेवैते भक्षयेयुरिति । अनिर्ज्ञातकर्तृकेषु भक्षेषु पूर्वपक्षोत्थानम् ।

**सर्वैर्वा, समवायात्स्यात् । ५ ॥**

**भाष्यम्**— सर्वैर्वा प्रकृतैरेव भक्ष्येत । तद्धि भक्षणं पुरुषसंस्कारार्थम् । पुरुषाः संस्कृताः प्रचरिष्यन्तीति । तेषु विनिगमनाया अभावात् यावन्तः प्रकरणे समवेताः, ते सर्वे भक्षयेयुरिति ।

**टुप्**— ( यजमानविधिपरत्वे संभवति परिसंख्यापरत्वमन्याय्यम्, इत्याशङ्क्याह— ) द्रव्यसंस्कारत्वात् ( भक्षाणाम्, तत्कर्तृत्वेन ऋत्विजामेव प्राप्तेः ) यजमानः अप्राप्तः विधीयते । ( कथं तर्हि पुरुषसंस्कारकत्वे

भाष्यकारेणोक्तम्, तत्राह- ) वाक्यप्रकरणसमाख्याभिः 'एभिः ( ऋत्विग्भिरेव ) भक्षयितव्यम्' इत्यस्यापि ( कर्तृ- ) नियमस्य दृष्टमेव प्रयोजनम्। ( तथाहि, ) कर्तृणां कियत्यपि तृप्तिः उपजायते। तदनु निष्पाद्यं ( उक्तप्रयोजनानुनिष्पाद्यं ) अपेक्ष्याह ( भाष्यकारः ) तद्धि भक्षणं पुरुषसंस्कारार्थं इति। याज्ञिकैस्तु ( क्रियाप्रयोजनं द्रव्यसंस्कारः नियमप्रयोजनं तु कर्तृसंस्कारः इति ) विवेकमगृहीत्वा 'भक्षाः पुरुषसंस्काराः' इत्याद्युक्तम्।

**निर्देशस्य गुणार्थत्वम्। ६॥**

**भाष्यम्**— अथ यदुक्तम्, निर्देशादिति। गुणार्थः सः। अन्ये कर्मकरत्वादेव प्राप्ताः। तत्र यजमानस्तेषां पञ्चमो वचनान्निर्दिश्यते। तत्प्राप्त्यर्थं चेदं वचनम्। ततो न परिसंख्या।

**प्रधाने श्रुतिलक्षणम्। ७॥**

**भाष्यम्**— यत्तु द्व्यवदानमात्रं प्रधाने निर्दिश्यते, तद्वचनप्रामाण्यात् परिसंख्यानार्थम्। नहि तत्र कस्यचित् अपूर्वस्य विधिः। इह यजमानो विधीयते। विधिपरिसंख्यासंशये विधिर्ज्यायान्। तत्र स्वार्थे शब्दः। परिसंख्यायां त्रयो दोषाः स्वार्थहानम्, अस्वार्थपरिग्रहः, प्राप्तबाधश्चेति। तस्मात् प्रकृता एव भक्षयेयुरिति।

**अर्थवदिति चेत्। ८॥**

**भाष्यम्**— अथ यदुक्तं अश्वमेधे विरोधः स्यात् बहुत्वात् भक्षाणामिति। तत्परिहर्तव्यम्।

**न, चोदनाविरोधात्। ९॥**

**भाष्यम्**— अश्वमेधे न सर्वे भक्षयिष्यन्ति। अर्थात् सर्वे भक्षयन्तः अश्वमेधं न समापयेयुः। तत्र अश्वमेधश्रुतिः प्रत्यक्षा। सा विरुध्यमाना चोदकप्राप्तं सर्वभक्षणं बाधते। प्रकृतौ तु न विरोधः। तस्मात् सर्वे प्रकृता भक्षयेयुरिति।

**शा**— शेषप्रसङ्गात् इदमधिकरणम्।

**सोम**—**सूत्रार्थस्तु**- शेषभक्षः अन्यैः कार्यः 'यजमानपञ्चमा इडाम्' इति निर्देशात्। यथा सर्वस्य होमे प्राप्ते द्व्यवदानमात्रस्य निर्देशात् होमः, तद्वत् इति।

**वि**— 'शेषभक्षाः किमन्येषामृत्विजां वा, ऽन्यभक्षणम्। ऋत्विजां परिसंख्यानात्, स्वाम्यप्राप्तोक्तितोऽन्तिमः॥'

**भाट्ट**— शेषप्रसङ्गादिह दर्शपूर्णमासयोः शेषभक्षाः श्रुताः। तत्रेडाभक्षे 'यजमानपञ्चमाः इडां भक्षयन्ति' इति श्रुताः कर्तारः। तथा प्राशित्रभक्षे 'प्राशित्रं ब्रह्मणे परिहरति' इति श्रुतः। चतुर्धाकरणभक्षेऽपि न्यादेशाम्नानात् चत्वार ऋत्विजः यजमानभागब्रह्मभागयोस्तावेव। शंयुवाककालभक्षे तु 'हविःशेषान् भक्षयन्ति' इत्याम्नातेन बहुवचनेन आध्वर्यवसमाख्याभावेऽपि कर्मकरत्वात् सर्वे ऋत्विजो भवन्ति। न च इडाभक्षे न्यायप्राप्तर्त्विक्पुनःश्रवणस्य परिसंख्याऽर्थत्वात् शंयुवाककालभक्षे तदन्ये एव भवेयुरिति वाच्यम्। ऋत्विजां प्राप्तत्वेऽपि अप्राप्तयजमानसाहित्यस्यैव तत्र विधेयत्वेन तस्य भक्षान्तरे ऋत्विक्परिसंख्यार्थत्वाभावात्। अत्र हि इडोद्देशेन कर्तृविशिष्टभक्षान्तरविधानेऽपि विशेषणविधिवेलायां प्राप्ताप्राप्तविवेकेन भक्षो यजमानसाहित्यं च विधीयते। ऋत्विजां तु भक्षस्य प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेन आनत्यर्थत्वात् प्राप्तिसंभवेन न विधानम्, स्वत एव आनतत्वाच्च अप्राप्तं यजमानसाहित्यं तु विधीयते। यदि तु करिष्यमाणकर्मणि बलाधानार्थत्वमपि भक्षस्येति विभाव्यते, तदा अस्तु यजमानपञ्चमत्वग्रहणं पत्नीपरिसंख्यार्थम्। सर्वथा भक्षान्तरे कर्तृपरिसंख्याऽभावात् शंयुवाककालभक्षे ऋत्विज एव कर्तारः। अस्मिंश्च पक्षे तस्मिन् पत्नीयजमानयोर्निवृत्तिः, 'अत्रैव ऋत्विजो हविःशेषान् भक्षयन्ति' इति कल्पसूत्रकारवचनादवगन्तव्या।

**मण्डन**— 'शेषस्य भक्षः प्रकृतर्त्विजां स्यात्।'

**शंकर**— 'सर्वे भक्षास्तथर्त्विजाम्।'

* दर्शपूर्णमासादौ इडाभक्षो यजमानस्याप्यस्ति। 'यजमानपञ्चमाः संभूयेडां भक्षयन्ति'। वि. १०।२।९. * दर्शपूर्णमासादौ ऋग्यजुःसामतो भ्रेषप्रायश्चित्तानां विकल्पः। भा. १२।३।५।१६, * दर्शपूर्णमासादौ करणमन्त्रोक्तं फलं याजमानम्। वर्चोन्यायः। ३।८।

१३।२६-२८. * दर्शपूर्णमासादौ करणमन्त्रप्रकारयं कर्मोपयोगि फलं ऋत्विग्गामि । अतिक्रमाधिकरणम् । ३।८।१४।२९-३०, * दर्शपूर्णमासादौ कर्तुरेकस्यैव स्त्रीसद्वितीयस्य अधिकारः । ६।२।२।३-१३. * दर्शपूर्णमासादौ कर्तृदेशकालविधिः नियमार्थः । वि. ४। २१९. * दर्शपूर्णमासादौ निर्वापाद्यङ्गमन्त्राणामावृत्तिः । निर्वापन्यायः । भा. ११।४।१४।४७-४८, * दर्शपूर्णमासादौ नीवारादिप्रतिनिधिष्वपि अवघातादिमुख्यधर्मानुष्ठानम् । ३।६।१४।३७-३९. * दर्शपूर्णमासादौ नीवारसंकल्पोत्तरमपि व्रीहिलाभे व्रीहय एव ग्राह्या न नीवाराः । पुरोडाशकरणोत्तरं तु प्रतिनिधिनैव समापनम् । वि. ६।३।१६, * दर्शपूर्णमासादौ पुरोडाशप्रथनमन्त्रयोर्विकल्पः । १२।३।१५, * दर्शपूर्णमासादौ प्रयाजादीनां विनियोजकं प्रकरणम् । ३।३।४.

**⌛ दर्शपूर्णमासादौ प्रैषा आध्वर्यवाः ॥**

**अध्वर्युस्तु दर्शनात् । ३।८।१२।२४॥**

**भाष्यम्**— अथ एवं गते ( प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वे अवगते इत्यर्थः ) इदं संदिह्यते किमध्वर्युः अग्नीधं प्रेषयेत्, उत अग्नीत् अध्वर्युमिति । अनियमोऽविशेषात् । इति प्राप्ते, ब्रूमः । अध्वर्युः उक्तप्रैषार्थकारी स्यात् । कुतः ? दर्शनात् । दर्शनं भवति ' तिर्यञ्चं स्फ्यं धारयेत् । यदन्वञ्चं धारयेत् वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत ' इति । यः प्रेष्यति, तस्य हस्ते स्फ्यः । स्फ्येन अध्वर्युं क्षिण्वीत इति अन्यमध्वर्युं प्रेषकात् दर्शयति । तस्मात् अग्नीत् अध्वर्युं प्रेष्येत् इति ।

**वा**— ' यदन्वञ्चं धारयेत्, वज्रेणाध्वर्युं क्षिण्वीत ' । ' वज्रोऽध्वर्युं क्षिण्वीत ' इति वा पाठः । स्फ्यस्य धारणं तावत् अग्नीधः एकान्तेन । स च अध्वर्युं क्षिण्वीत इति वदन् अग्नीधं स्फ्यवन्तं प्रेषकं दर्शयति । का तु अस्य प्राप्तिः ? उच्यते । ' अङ्गगुणविरोधे च तादर्थ्यात् ' इत्यनेन अङ्गत्वात् प्रैषस्य कर्तृलोपो युक्तः, न प्रधानस्य । बहवश्च प्रैषार्थाः, एको निगदः । तेन ' भूयसां स्यात् सधर्मत्वम् ' ( १२।२।७।२२ ) इत्यपि प्रैषार्थे अध्वर्युरिति, परिशेषात् प्रैषे अग्नीत् ।

**गौणो वा, कर्मसामान्यात् । २५ ॥**

**भाष्यम्**— नैतदस्ति अग्नीधः प्रैषः, अध्वर्योः प्रैषार्थ इति । किं खलु ? अध्वर्युरेव अग्नीधं प्रेष्येत् । एवमध्वर्युणा प्रैषः प्रैषार्थश्च उभावपि कृतौ भविष्यतः । तत्र आध्वर्यवमिति समाख्या अनुग्रहीष्यते । तस्मात् अध्वर्युरेव मुख्यः स्यात् । किमस्य मुख्यत्वम् ? यदनेन सर्वं कर्तव्यं समाख्यानात् इति । अथ यदुक्तं ' अध्वर्युः प्रचरिता दृश्यते ' इति, तदुच्यते । सत्यं दृश्यते, न तु अस्य प्रैषार्थकरणे प्रमाणमस्ति चिन्त्यमानम् । तस्मादेतत् मिथ्या दर्शनम् । यस्य हि दर्शनस्य प्रमाणं नास्ति, व्यामोहः सः । यथा शुक्तिकायां रजतविज्ञानम् । अस्ति तु अग्नीधः प्रैषार्थकरणे प्रमाणम् । तस्मात् आग्नीध्रः प्रचरिता । प्रचरितरि च अध्वर्युशब्दो दृश्यते । तस्मात् गौणः । आध्वर्यवे वेदे समाम्नातान् पदार्थान् करोति इति कृत्वा अध्वर्युरित्युच्यते आग्नीध्र इति । तस्मात् आध्वर्यवः प्रैषः, आग्नीध्रः प्रैषार्थ इति ।

**वा**—' मुख्यं वा पूर्वचोदनात् ' इति प्राथम्यात् प्रैषे समाख्यातः कर्ता युक्तः । नहि तदानीं विरोधः कश्चिदस्ति । तस्मिंस्तु प्रयुक्ते विरोधात् प्रैषार्थे अन्यो भवति । प्रयोजकस्य च प्रयोज्यव्यापारेऽपि कर्तृत्वं न विहन्यते इत्युभयानुग्रहः । इतरथा हि प्रैषे अत्यन्तबाध एव स्यात् । नहि स तेन कृतो नापि कारितो भवेत् । तस्मादध्वर्युप्रेषितः अग्नीत् कुर्यादिति । ' वज्रेणाध्वर्युम् ' इति च आग्नीध्रमेव तत्कार्यापत्तेरभिधास्यति ।

**भाट्ट**—तत्रापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमाणाभावादेकस्मिन् ' प्रोक्षणीरासादय ' इत्यादिप्रैष एव अध्वर्युबाधेन अन्यकर्तृकत्वम् । अत एव ' तिर्यञ्चं स्फ्यं धारयित्वा संप्रैषमाह यद्यन्वञ्चं धारयेत्, स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत ' इति धारयितुर्भिन्नमध्वर्युं दर्शयति । इति प्राप्ते, प्रैषार्थेषु अन्यकर्तृकत्वेऽपि प्रयोजकत्वेनापि अध्वर्योः कर्तृत्वोपपत्तेः समाख्यायाः कुत्रापि अबाधात् प्रैषार्थान् अन्य एव कुर्यात्, प्रैषोच्चारणं तु अध्वर्युः । स च सोमादावसति विशेषवचने प्रतिप्रस्थात्रादिः तत्पुरुषः । दर्शादौ तु आग्नीध्र एव, कर्मकरत्वेन

याज्ञिकप्रसिद्धत्वादिति ध्येयम् । यत्तु लिङ्गम्, तत् यदि अध्वर्युः अन्वञ्चं धारयेत् तदा स्फ्यः तं क्षिण्वीत इत्यर्थेऽपि बाधकाभावात् धारणप्रैषयोराध्वर्यवत्वेऽपि उपपन्नम् । स्फ्यधारणमपि कल्पसूत्रेषु आध्वर्यवमेव प्रसिद्धमिति अत्रत्यवार्तिकं प्रौढिवादः ।

मण्डन—'अध्वर्युणा प्रेषणमेव कार्यम् ।' परिशेषार्थः आग्नीध्रेण कार्यः ।

शंकर—'प्रेषिताऽध्वर्युरेव स्यात् ।' १५.

**दर्शपूर्णमासादौ स्विष्टकृदादिशेषकार्यार्थमवत्तस्य द्रव्यस्य नाशे शेषकार्यलोपः । नाशाधिकरणम् ॥**

**अपि वा शेषभाजां स्याद् विशिष्टकारणत्वात् । ६।४।२।३॥**

भाष्यम्— अथ स्विष्टकृदर्थमवत्तं यदि विनश्यति, तत्र किं शेषादवदेयम्, उत नेति । किं प्राप्तम् ? पुनः शेषादवदेयमिति । कुतः ? नात्र कृत्स्नस्य उत्तरार्धादवदीयते । कस्य तर्हि ? संनिहितस्य । सति हि प्रयोजने संनिहितस्यावदेयमिति । तस्मादवदीयमाने श्रुतं कृतं भवति । तस्माच्छेषादवदेयमिति । एवं प्राप्ते, ब्रूमः । शेषभाजां स्याल्लोपः ( लोपः इति पदस्य सूत्रे अध्याहारः । श्लोवा. १।१।१।५४ ) । कुतः ? विशिष्टकारणत्वात् । विशिष्टं हि कारणं तस्यावदाने, कथं प्रतिपाद्येतेति । प्रतिपत्तिश्च विविक्तकरणेन उपकरोति । तस्य विविक्तकरणाय प्रतिपाद्यमानस्य नियमोऽयं 'स्विष्टकृद्धोमेन प्रतिपादयितव्यः' ( इति ) । तथाहि स प्रतिपादितो भवति । स यदि होमाय उद्धृतो विपद्येत, कृते विवेके न पुनर्ग्रहणं प्रयोजयेत् । प्रतिपाद्यमानश्च स्विष्टकृद्धोमेन प्रतिपादयितव्य इति । प्रतिपाद्यमानाभावात् लोप एव स्विष्टकृतः स्यात् । प्रधाने कृते शिष्टं सर्वशेषकार्यसाधारणम् । तत्र एकस्य उद्धृते शिष्टमन्यत्र प्रतिपादनीयम् ।

टुप्— ( पूर्वपक्षमाक्षिपति— ) स्विष्टकृत् अग्निप्रयुक्तस्य ( अन्यप्रयुक्तस्य इति आनन्दाश्रमीये पाठः । द्रव्यस्य— ) ग्राहकः । एवं चेत् संनिहितं परकीयं ग्रहीष्यति ( अतः नाशे लोप एव सिद्ध इति ) किमतः ( अधिकरणकृत्यम् ? ) उच्यते । यदि प्रयोजकः स्यात् ( ततः ) यादृशं प्रयुक्तम्, तादृशस्याभावात् न पुनः शिष्टादवदेयं ( स्यात् ) । यत् पुनर्द्रव्यं संस्कार्यम्, तस्य ( कस्मिंश्चिदंशे विनष्टेऽपि शिष्टस्य ) विद्यमानत्वात् पुनरवदानेन संस्कारः किमिति न क्रियते ? न चात्र अवयवी उपलक्षणार्थः ( स्विष्टकृदवदानोपलक्षणार्थः इत्यर्थः ) । किं तर्हि ? संस्क्रियतेऽसौ इति । एवं प्राप्ते, ब्रूमः । विशिष्टो देशः ( सकलपुरोडाशोत्तरार्धावयवरूपः, स्विष्टकृद्यागस्य ) संस्कार्यत्वेन अपेक्षितः । तस्य ( च देशस्य ) अभावात् कः प्रतिपत्तिं प्रयुञ्जीत ? अपूर्वमिति चेत्, तन्न, द्रव्यप्रतिपादनानुनिष्पादि ( एव ) अत्र अपूर्वम् । अतस्तत् ( स्वयम् ) अप्रयोजकम् । द्रव्यप्रतिपत्तिरत्र चिकीर्षिता ( प्रयोजिका ) न तु यागनिर्वृत्तिरिति । ( इदं च स्विष्टकृतो लोपविधानं न्यायप्राप्तमुक्तम् । वचनात्तु तस्य आज्येन समापनमिष्टमेव । इडाऽऽदीनामेव तु लोपः ) ।

सोम— पूर्ववदिह नास्ति अवदेयाभावः, येन पुनरवदानं न भवेत् इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— पुनरवदानव्यावृत्त्यर्थः अपिवाशब्दः । लोपशब्दश्चापि अध्याहार्यः । तथा च शेषभाजां स्वार्थावत्तनाशे नावदानम्, किन्तु लोपः स्यात् प्रतिपत्तिरूपविशिष्टप्रयोजनकारणकत्वात् तदनुष्ठानस्य प्रतिपाद्याभावे प्रतिपत्त्यभावादिति ।

वि—'इडाद्यर्थस्य नाशेऽन्यः शेषाद् ग्राह्यो न वा, ऽग्रिमः । शेषसत्त्वा, न्न शेषेऽन्यप्रतिपत्त्यवरोधनात् ॥'

भाट्ट— यत्र तु त्यागांशयुक्तानि शेषकार्याणि यथा स्विष्टकृदादौ, तत्रोत्तरार्धादिनाशे उत्तरार्धान्तराभावात् अवशिष्टस्य प्रतिपत्त्यन्तरगृहीतत्वाच्च न तावच्छेषेण करणम् । नापि हविरन्तरोत्पत्तिः, अप्रयोजकत्वात् । किन्तु आज्येनैव समापनम् । उक्तवचनस्य श्रुतद्रव्यनाशे द्रव्यापेक्षामात्रेणैव प्रवृत्तेः । याज्ञिकमते तु 'यदि प्रत्तदेवतम्, आज्येन शेषं संस्थापयेत्' इत्यापस्तम्बवचनादवधेयम् । अविशेषप्रवृत्तमपीदं अपेक्षानुरोधात् स्विष्टकृत्परमेव । अतस्त्यागांशाभावादिडादेर्लोपः एव । इदं चोत्तरार्धत्वादिना अनेकप्रतिपत्तिविधाने । शेषत्वेन अनेकप्रतिपत्ति-

विधाने तु शेषैकदेशविनाशेऽपि अवशिष्टेनैव अवयवशः सर्वप्रतिपत्तिकरणमिति ध्येयम् ।

मण्डन—' शेषक्रिया नास्ति तु शेषनाशे । '

शंकर—' एवं शेषावत्तनाशे । ' शेषकार्यलोपः ।

* **दर्शपूर्णमासादिषु** आग्नेयादीनां समुदितानां एकस्वर्गफलकत्वम् । तन्त्रन्यायः । भा. ११।१।१।१–४. * दर्शपूर्णमासादिषु जुह्वादिपात्राणां पर्णतादिविधावपि उलूखलादिपात्रेषु वारणवैकङ्कतत्वविध्यविरोधः । सु. पृ. १०६२. * दर्शपूर्णमासादिषु वैदिकीतिकर्तव्यता । भा. ७।४।१।१.

* **दर्शपूर्णमासादिप्रकरणे** विधिसंनिधौ श्रुतानां देशकालनिमित्तफलसंस्काराणां न कर्मभेदकत्वम् । वि. २।३।१३. * **दर्शपूर्णमासादिवाक्यस्य** श्रुतिस्मृत्याचारपर्यन्ताङ्गप्रापकसर्वप्रमाणसहितस्यैव साङ्गप्रधानप्रयोगविधायित्वम् । सु. पृ. ११८६. * **दर्शपूर्णमासादिसंबद्धफलनियमकर्तृसमुदायस्य** सौर्यादिषु नातिदेशः । भा. ८।१।१३।२०–२२. * **दर्शपूर्णमासादिसर्वयज्ञार्थे** आधाने श्रुतं वैकङ्कतादिपात्रम् । वि. ३।१।१२.

* **दर्शपूर्णमासारम्भत्वप्रसिद्धिः** याज्ञिकानां अन्न्यन्वाधानादिरूपे प्रथमपदार्थे । भाट्ट. ९।१।११ पृ. ६७.

* **दर्शपूर्णमासावृत्तावपि** अन्वारम्भणीयायाः आदौ सकृदेवानुष्ठानम् । भा. ९।१।१०।३४–३५.

* **दर्शपूर्णमासेतिकर्तव्यतायाः** अविहितेतिकर्तव्यताकेषु सौर्यादिषु अतिदेशः । भा. ७।४।१।१.

* **दर्शपूर्णमासेष्टिः** मूलप्रकृतिः । वि. ८।१।३ वर्णकं २.

* **दर्शपूर्णमासोत्तरमेव** सोमविकारा गवादयः एकाहा भवन्ति न प्रागपि । भा. ५।४।९।२६, * **दर्शपूर्णमासोत्तरं** ज्योतिष्टोमः अनुष्ठेयः । ४।३।१५।३७.

* **दर्शपूर्णमासोपकाराय** वदतो यदनृतं प्रसज्यते तत्प्रतिषेधो विधीयते । ततश्च यावत् कर्मार्थः संवादः तत्र सर्वत्र अनृतं वर्जनीयम् । वा. ३।४।४।१३ पृ. ९४१.

* **दर्शपूर्णमासकर्मणि** यजमानः उत्सर्गमात्रं कुर्यात्, शेषस्य अन्य एव कर्ता अध्वर्य्वादिः । के. ३।७।८।१८–२०.

* **दर्शपूर्णमासकालत्वात्** प्रायेण यागानाम् । भा. ७।१।१।२ पृ. १५२८.

* **दर्शपूर्णमासगतं** बर्हिः यूपावटस्तरणबर्हिषो न प्रकृतिः । न च धर्मातिदेशः । वि. ७।३।७. * **दर्शपूर्णमासगतयोः** हविरभिमर्शनकरणमन्त्रयोश्चातुर्होतृपञ्चहोत्रोः सौर्ययागे विकल्पः । भा. ८।१।१५।२६.

* **दर्शपूर्णमासगताग्नेयद्रव्यस्य** विकल्पेन सौर्ये चरौ अतिदेशः । भा. ८।१।१५।२६. * **दर्शपूर्णमासगताग्नेयविध्यन्तस्य** एकदेवताकौषधद्रव्यकविकृतिषु अतिदेशः, द्विदैवत्ये तु अग्नीषोमीयादेरतिदेशः, आज्यद्रव्यके च उपांशुयाजस्यातिदेशः । वि. ८।१।१६. * **दर्शपूर्णमासगताज्यनाम्ना** पशुगतयूपसंबन्धिनि अञ्जनाज्ये धर्माणां नातिदेशः । भा. ७।३।७।१८, * **दर्शपूर्णमासगतेडानिगदे** यज्ञपतिशब्दस्य विकृतौ नोहः । ९।१।१३।४०, * **दर्शपूर्णमासगतनिर्वापमन्त्रस्थाग्निशब्दस्य** विकृतौ ऊहः । ९।१।१३।३८, * **दर्शपूर्णमासगतनिर्वापमन्त्रस्थसवित्रादिपदानां** विकृतौ नोहः । ९।१।११।३६–३७, * **दर्शपूर्णमासगतपार्वणहोमयोः** विकृतौ नातिदेशः । ९।२।१८।५१–५६. * **दर्शपूर्णमासगतपुरुषार्थगोदोहनादेः** सौर्यादौ नातिदेशः । क्रत्वङ्गमेव हि अतिदिश्यते । वि. ८।१।१४. * **दर्शपूर्णमासगतपेषणमन्त्रे** धान्यशब्दस्य विकृतौ शाक्त्यानामयने 'मांसमसि' इति ऊहः । भा. ९।१।१२।३८–३९ वर्णकं २, * **दर्शपूर्णमासगतप्रणयनस्य** (अग्निप्रणयनस्य) चातुर्मास्यगतप्रणयने ( द्वयोः प्रणयन्ति ) अतिदेशः, न सौमिकस्य इति भाष्यमतम् । न दार्शिकम्, न सौमिकं किंतु अपूर्वमेवेति वार्तिकमतम् । ७।३।८।१९–२२ । इदं च प्रणयनं मध्यमयोरेव पर्वणोः । ७।३।९।२३–२५, * **दर्शपूर्णमासगतसांनाय्यविकारः** अग्नीषोमीयः पशुः । ८।२।२।१०–१४ । तत्रापि पयोविकारो न दधिविकारः । ८।२।३।१५–१८, * **दर्शपूर्णमासगतसांनाय्यविकाराणां** अग्नीषोमीयपुरोडाशविकाराणां च सोमोत्तरकालता । ५।४।८।२५.

* **दर्शपूर्णमासचातुर्मास्यादिषु** आग्नेयादिप्रधानानां एकदेशकालकर्तृकत्वम् । भा. ११।२।१।१, * दर्शपूर्णमास-

चातुर्मास्यादिषु तत्तद्व्याप्यप्रयोगानुरोधेनाङ्गानामावृत्तिः। इष्टिराजसूयाधिकरणम्। ११।२।३।१२-१८.

* दर्शपूर्णमासतन्त्रगतान्यतमदेवताकत्वनियमः उपांशुयाजस्य। भा. १०।८।१६।४९-५०.

* दर्शपूर्णमासधर्माणां ऐन्द्राग्नादिविकृतौ अतिदेशः। भा. ८।१।४।११, * दर्शपूर्णमासधर्मातिदेशः सोमे नास्ति। ८।१।३।३-१०.

दर्शपूर्णमासन्यायः। दर्शपूर्णमासौ ज्योतिष्टोमश्च सर्वकामार्थाः॥

**सार्वकाम्यमङ्गकामैः प्रकरणात्। ४।३।१०। २५॥**

भाष्यम्— इदमाम्नायते 'एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वा अन्ये क्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः' इति। तत्र संदेहः किमङ्गकामैः अङ्गाङ्गकामैश्च सह अस्यानुवादः, अथवा विधिरिति। किं प्राप्तम्? अनुवाद इति। यदेतत् सार्वकाम्यम्, तदनूद्यते। अङ्गकामैश्च अङ्गाङ्गकामैश्च सह। सन्ति हि अङ्गकामाश्च अङ्गाङ्गकामाश्च। यथा 'आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, खननपुरीषां प्रतिष्ठाकामस्य' इत्येवमादयः। तथा, 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति। तद्विहितमेवेदं अभिधीयते इत्यनुवादं न्याय्यं मन्यामहे।

टुप्—'सर्वेभ्यो ज्योतिष्टोमः' इति विधायकाभावात् साधनत्वाभावः। तस्मादङ्गाङ्गकामानपेक्ष्य सर्वेभ्यो ज्योतिष्टोम इत्यनुवादः।

**फलोपदेशो वा, प्रधानशब्दसंप्रयोगात्। २६॥**

भाष्यम्— फलविधिर्वा। कुतः? प्रधानशब्देन फलसंयोगो भवति। सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोमः इति च। प्रधानाभिधानेन च प्रधानस्य सर्वफलवत्ता विहिता। तस्मान्नानुवादः। अथ अङ्गकामान् अङ्गाङ्गकामांश्चापेक्षते, तथा लक्षणाशब्दः स्यात्। श्रुतिश्च लक्षणाया गरीयसी। तस्मात्प्रयोगवचनेन विधिरिति।

टुप्— प्रधानेभ्यः फलं श्रुतम्। अङ्गानि अङ्गाङ्गानि च लक्षणया गम्येरन्। श्रुतिश्च बलीयसी। न चायं कस्यचिद्विधेः शेषः, येन अर्थवादत्वादनूद्येत। तस्मादत्र उत्पत्तिप्रयोगवचनार्थवादाध्याहाराणामन्यतरतो विधिः। किं कर्मसाध्यान् कामानपेक्ष्य सर्वकामता, उत यावन्तः केचन कामा इति। अविशेषात् यावन्तः कामा इति। अन्ये क्रतवः एकफलसाधनकाः, अयं तु क्रतुः सर्वाणीति क्रतुगतानि फलान्यपेक्ष्य सर्वतेति चेत्, तन्न। ज्योतिष्टोमस्य सर्वफलेभ्यो विधीयमानस्य अर्थवादोऽयम्। तस्मान्नियतफलताया नास्ति प्रमाणम्। उच्यते। यत्रयत्र कामशब्दो हिरण्यकामः पुत्रकाम इति, तेष्वेवास्य साधनता। कुतः? तेषु हि कामशब्दमुच्चारयन्ति, नेतरत्र। उपलब्धपूर्वे हि प्रियं भवतीति। सर्वज्ञता च न कदाचिदुपलब्धा। तस्मात्तत्र कामस्य अप्रवृत्तिः। तेन ये एव वेदे कामशब्दा उच्चारिताः, तेऽनुषज्यन्ते।

शा— 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यनुवादो दर्शपूर्णमासस्तुत्यर्थः इति प्राप्ते, ब्रूमः। '**षष्ठी संबन्धमात्रेऽपि वर्तमाना न दुष्यति। तादर्थ्ये च चतुर्थ्यर्थस्तच्च प्राप्तं न केनचित्॥ स्यात् प्रधानफलार्थत्वमङ्गानां तदनुग्रहात्। न त्वङ्गफलशेषत्वं प्रधानस्य कथंचन॥ सर्वकामार्थता तस्मादप्राप्तेह विधीयते। कर्तव्याविति चाहार्यं विधिभावनयोः पदम्॥ उत्पत्तिचोदनाभ्यो वा प्रसिद्धे विधिभावने। आश्रित्य फलसंबन्धमात्रमत्रोपदिश्यते॥**' तस्मात् फलविधिः।

सोम— पूर्ववत् इहापि नानेकफलार्थत्वं इति प्रत्यवस्थानात् संगतिः।

वि— 'दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः।, अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते॥, उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने। फलसंयोगबोधेन भवेदेष फले विधिः॥'

भाट्ट— 'एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः, एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ' इति श्रुताभ्यां वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्वफलार्थत्वम्, न तु तत्तत्प्रकरणस्थगुणकामानामपि दर्शादिप्रयोज्यत्वात्। तदभिप्रायेणानुवादत्वं वैयर्थ्यात्, औपचारिकत्वाङ्गीकारे तादर्थ्यस्य प्रमाणाभावाच्च। अतः अप्राप्तार्थकत्वादेव विधि-

भावनावाचिपदाध्याहारेण सर्वफलार्थत्वेन विनियोगः। न चैवं स्वर्गार्थत्वबोधकविधिर्वैयर्थ्यम्, गोबलीवर्दन्यायेन भिन्नविषयकत्वकल्पनया अभ्युदयशिरस्कत्वोपपत्तेः।

अत्र चाविशेषात्सर्वाणि फलानि ज्ञेयानि। न तु अर्थवादगतान्यशब्दस्य सदृशवाचित्वात् ज्योतिष्टोमदर्शपूर्णमाससदृशसोमयागान्तरेष्ट्यन्तरजन्यफलमात्रपरः तत्रतत्र यथायोगं सर्वशब्दः, अर्थवादस्य स्तुत्यर्थत्वेनैवोपपत्तौ हारियोजनगतसर्वशब्दन्यायेन संकोचकत्वानुपपत्तेः। अत एव सर्वशब्दस्य सर्वनामत्वात् वैदिकफलमात्रपरत्वमपि नाशङ्क्यम्, वैदिकानामपि पूर्वमनुपस्थितत्वात्। कथञ्चिदुपस्थितेलौकिकेष्वपि अविशेषाच्च। यानि तु शशविषाणप्राप्त्यादीनि प्रमाणेन केनापि अप्रसिद्धानि तेषां न सर्वशब्देन ग्रहणम्। यत्तु अतीन्द्रियार्थापरोक्षज्ञातृत्वलक्षणसार्वज्ञ्यादेरपि न सर्वशब्देन ग्रहणम्, तस्य लोकवेदयोः क्वचिदपि उपायान्तरजन्यत्वादर्शनादित्युक्तं तन्त्रसारतन्त्ररत्नादौ, तत् 'प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्, भुवनज्ञानं सूर्ये संयमात्' इत्यादिपातञ्जले 'चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि। मां तत्र मनसा ध्यायन् विश्वं पश्यति चक्षुषा॥' इत्यादिपुराणेषु च सिद्धिमात्रे योगधारणाविशेषस्य साधनत्वेन उक्तत्वादुपेक्षितम्, निरतिशयसार्वज्ञ्यस्य अजन्यत्वेऽपि भुवनज्ञानादेः संभवेन ग्रहणोपपत्तेः। न चैवं मन्वादीनामपि सर्वज्ञत्वोपपत्तेः स्मृतीनां वेदमूलकत्वानापत्तिः, अष्टकास्वर्गसाधनत्वस्य प्रमाणान्तरेण असिद्धौ योगेनापि द्रष्टुमशक्यत्वात्।

मण्डन— 'सर्वकामविधिर्भवेत्।'

शंकर— 'दर्शादि सर्वकामार्थम्।'

* दर्शपूर्णमासपदं विद्वद्वाक्यद्वयसिद्धसमुदायद्वयपरं प्रसिद्धार्थकम्, न च तदाख्यातपरतन्त्रम्। (विद्वद्वाक्यं च 'य एवं विद्वान् दर्शपूर्णमासाभ्यां यजते' इत्यादि)। मीन्या. * दर्शपूर्णमासपदवत्, यथा दर्शपूर्णमासपदं यागषट्कस्यावच्छेदकं तथा ज्योतिष्टोमपदं ज्योतीरूपत्रिवृदादिस्तोमचतुष्टयस्यावच्छेदकम् (पूर्वपक्षे स्थित्वा)। भाट्ट. ४।४।१२.

* दर्शपूर्णमासपुरोडाशधर्मातिदेशः सौत्रामणीगतसुराग्रहेषु। भा. ८।२।१।१–९.

* दर्शपूर्णमासप्रकरणं असंदंशोद्भूर्तिकं महाप्रकरणम्। बाल. पृ. ९. * दर्शपूर्णमासप्रकरणात् पूषाद्यनुमन्त्रणादीनां उत्कर्षः। संस्कारको हि मन्त्रः सोऽसति संस्कार्येऽनर्थकः इति तत्र नायमिष्यते। भा. ३।२।१।२.

* दर्शपूर्णमासप्रकरणे आज्यभागौ प्रकृत्य 'न तौ पशौ करोति न सोमे' इति। अत्र 'न सोमे' इति वाक्यं 'तौ न पशौ करोति' इत्यस्य अर्थवादः। भा. १०।८।२।५. * दर्शपूर्णमासप्रकरणे 'आर्षेयं वृणीते' इति वचनं यजमानप्रवरर्षिनामकीर्तनपरं न तु ऋग्विषयम्। संकर्ष. ३।४।१. * दर्शपूर्णमासप्रकरणे 'निवीतं मनुष्याणाम्' इति श्रुतं निवीतवाक्यं उपवीतविधेः अर्थवादः, न विधिः। के. ३।४।१।१–९. * दर्शपूर्णमासप्रकरणे पिण्डपितृयज्ञे 'यत् परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितॄणाम्' इति श्रुतम्। अत्र परुषि दितम्, यदन्तरा इत्यनुवादः समूलत्वस्तुतये। समूलत्वं तु विधीयते। वि. ३।४।७. * दर्शपूर्णमासप्रकरणे पूषाद्यनुमन्त्रणानि असंबद्धान्यपि न पुरस्तात् प्रकरणं विच्छिन्दन्ति। वा. ३।१।११।२१ पृ. ७३३. * दर्शपूर्णमासप्रकरणे 'पौर्णमास्यां यजेत' इत्यादिना कालसंबन्धो विधीयते न कर्मान्तरम्। वि. २।३।१३, * दर्शपूर्णमासप्रकरणे 'शेषं स्विष्टकृते समवद्यति' इति संस्कारसंबन्धस्य विधिः न कर्मान्तरस्य। २।३।१३, * दर्शपूर्णमासप्रकरणे श्रुतं निवीतप्राचीनावीतवाक्यं उपवीतविधेरर्थवादः। निवीताधिकरणम्। ३।४।१, * दर्शपूर्णमासप्रकरणे श्रुतः अनृतवदननिषेधः क्रत्वर्थत्वेन विधीयते। ३।४।८. * दर्शपूर्णमासप्रकरणे श्रुतः 'मयि दक्षक्रतू' इतिमन्त्रपाठः क्रतुयुक्तजञ्जभ्यमानपुरुषसंस्कारः, न केवलपुरुषार्थः। जञ्जभ्यमानाधिकरणम्। भा. ३।४।५।१४–१६. * दर्शपूर्णमासप्रकरणे श्रुतः 'यो विदग्धः स नैर्ऋतः' इत्यादिः 'अविदहता श्रपयितव्यः' इत्यस्य विधेरर्थवादः। परुषिदिताधिकरणम्। के. ३।४।३ (वि. ७)। ११, * दर्शपूर्णमासप्रकरणे श्रुतस्य

अवगोरणनिषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षः। ३।४।६।१७. * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पूषैकदेवत्ये निवेशः, न तु द्विदेवत्ये। भा. ३।३।१५।३९–४६, * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे चरावेव निवेशः। ३।३।१४।३५–३८, * दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे यागे उत्कर्षः। पौष्णपेषणाधिकरणम्। ३।३।१३।३४, * दर्शपूर्णमासप्रकरणे श्रुतस्य मलवद्वासःसंवादनिषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षः। संवादाधिकरणम्। ३।४।७।१८–१९, * दर्शपूर्णमासप्रकरणे श्रुतायाः जाघन्याः नान्यत्रोत्कर्षः। पत्नीसंयाजन्यायः। जाघनीन्यायः। ३।३।१०।२०–२३. * दर्शपूर्णमासप्रकरणे 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' वैमृधः पौर्णमास्यङ्गम्, न तु दर्शपूर्णमासोभयाङ्गम्। वि. ४।३।१४. * दर्शपूर्णमासप्रकरणे हविषामभिवासनादूर्ध्वं वेदिकरणमाम्नातम्। भा. १२।१।१८।३९. * दर्शपूर्णमासप्रकरणपठितानामपि प्रयाजानां अवान्तरप्रकरणं अतिक्रमाधिकरणे व्युत्पादयिष्यते। सु. पृ. ७६४.

* दर्शपूर्णमासप्रकृतीनि दीक्षणीयादीनि। भा. ४।३।१५।३७.

* दर्शपूर्णमासप्रक्रमसमाप्ती प्रतिमासम्। वा. २।४।१।३ पृ. ६२७.

* दर्शपूर्णमासप्रयुक्तो न भवति पवमानेष्टिसंस्कारः किन्तु अग्निप्रयुक्तः। भा. ३।६।६।१७.

* दर्शपूर्णमासप्रयोगे यावज्जीविके प्रयाजादीतिकर्तव्यता भवति इत्युक्तम् (६।३।१।२)। वा. ९।१।११।३४.

* दर्शपूर्णमासप्रवृत्त्युत्तरं निर्वापात् प्राक् चन्द्रोदयेऽपि अभ्युदितेष्ट्यनुष्ठानम्। भा. ६।५।३।१२–१६.

**⌛ दर्शपूर्णमासयागस्य परेद्युरनुष्ठानेऽपि दिवैव अनुष्ठानम्॥**

परेद्युरपि रात्रावेव यागः कार्यः। 'तस्मात् सदृशीनां रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्ते' इति श्रुतौ रात्रीणामिति निर्धारणषष्ठ्या 'ब्राह्मणानां मध्ये यज्ञदत्तः सुरूपः' इति वाक्येन यज्ञदत्ते ब्राह्मणत्वस्येव पौर्णमास्यादेः रात्रित्वस्य अवगमात्। 'दर्शादृष्टेत्यनुवाके' पौर्णमासीदर्शपदयोः रात्रिनामत्वोक्तेश्च। इति प्राप्ते, दिवसे एव यागः कर्तव्यः 'प्रातर्यजध्वम्' इति श्रुत्या 'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः॥' इति वृद्धशातातपविवृताया 'उत्तरमहः' इति श्रुतेरुपसंहारात्। शुक्लप्रतिपद्वाचकस्य दर्शपदस्य इहानुपयोगाच्च। तन्त्रप्रक्रमस्य रात्रावपि कदाचित् संभवाभिप्रायेण रात्रीणामिति श्रुतेरुपपत्तेः। रात्रिशब्दस्य 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' 'दशरात्रमाशौचम्' इत्यादौ अहोरात्रपरत्वदर्शनाच्च। यत्तु भाष्ये 'पुण्याहे दैवानि कर्माणि' 'ते वा एते पूते मेध्ये अहनी यजनीये उत्तरमहर्देवता यजते' इति श्रुतिषु अह्नामेव कीर्तनमिह हेतूकृतम्। तत्तन्त्रप्रक्रमाभिप्रायेण अहोरात्रपरत्वेन च अन्यथासिद्धो रात्रिशब्द इति वदतः सूत्रकृतो विरुद्धम्। अहःशब्देऽपि तदुभयसंभवात्। संकर्ष. ३।१।३.

* दर्शपूर्णमासविकारो हि साकंप्रस्थायीयः। भा. ३।५।२।१३. * दर्शपूर्णमासविकाराणां पशूनां अग्नीषोमीयः पशुः प्रकृतिः प्राणिद्रव्यकत्वसामान्यात्। के.

* दर्शपूर्णमासविकारेषु यजमानमन्त्राणामतिदेशः। संकर्ष. २।२।४.

* दर्शपूर्णमासविकृतीनां काम्येष्टिव्यतिरिक्तानां साङ्गानां चोदकप्राप्तमन्त्रादिस्वरत्रयम्, काम्येष्टीनां तु काम्यशब्दवाच्ये प्रधाने 'यज्ञाथर्वणं वै' इत्यादिना विशेषवचनेन उपांशुत्वविधानात् अङ्गमात्रे स्वरत्रयं युक्तम्। सु. पृ. ११७८, * दर्शपूर्णमासविकृतिषु वर्णत्रयस्यापि सामिधेनीसाप्तदश्यम्। वि. ६।६।७. * दर्शपूर्णमासविकृतिषु सौर्यादिषु आरम्भणीयायाः पुनरनुष्ठानम्। आरम्भणीयायाः इत्यत्राधिकरणम्। भा. १२।२।६।१९–२१.

* दर्शपूर्णमासविध्यन्तः अग्नीषोमीयपशौ ग्राह्यः 'आग्नेयमष्टाकपालम्', 'अग्नीषोमीयं पशुम्' इति व्यक्तद्रव्यदेवत्वम् 'एकादश प्रयाजान् यजति' इति प्रयाजवत्त्वम्, 'स्रुच्यमाघार्य' इत्याघारवत्त्वम्, 'जुह्वा पशुमनक्ति' इत्यञ्जनम्, 'ईषामालभते' इत्यालम्भः इति

लिङ्गेभ्यः पशोर्विकृतित्वसिद्धेः । वि. ८।१।५, * दर्शपूर्णमासविध्यन्तस्य सौर्ये अतिदेशः । ८।१।२.

* दर्शपूर्णमासशब्दो लोके कालवाचकः प्रसिद्धो न यागवाचकः । यजिसामानाधिकरण्यात् यागवचनो भवेत् । टुप्. ९।१।१।१ पृ. १६३९. * दर्शपूर्णमासशब्दौ कालवाचिनौ सन्तौ कालसंयोगेन विहितानामेव आग्नेयादीनां षण्णां यागानां नामधेयतां प्रतिपद्येते । वि. ४।४।११.

⌛ **दर्शपूर्णमासशब्दौ सूर्याचन्द्रमसोः संनिकर्षविप्रकर्षवचनौ ॥**

यदा पौर्णमास्यमावास्या च अहन्येव खण्डा सती समाप्यते तदा तत्पूर्वेद्युरेव पर्वणोरहोरात्रव्याप्तिसत्त्वात् पौर्णमास्यमावास्याशब्दयोः अहोरात्रव्याप्तकालवाचित्वात् 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवचनेन तत्रैव दर्शपूर्णमासयोरनुष्ठानम् । इति प्राप्ते, सूर्याचन्द्रमसोः विप्रकर्षसंनिकर्षोभयस्यैव तत्तत्पदप्रवृत्तिनिमित्तत्वात् तस्य च परदिने एव लाभात् परेद्युरेवानुष्ठानम् । पूर्णो मासो यस्मिन्काले स पूर्णमासः, तत्पूर्तिश्च पौर्णमास्यन्त्यक्षणे । तदैव पुष्पवन्तयोरतीव विप्रकर्षः । अमा सह समीपे वा वसतः तौ यस्मिन् काले, सा अमावास्या । तत्संनिकर्षोऽपि तदन्त्यक्षणे एवातिशयित इत्यसंकुचितवृत्तिकयोः पदयोस्तत्रैव प्रवृत्तिः । सौत्रं तत्संयोगादिति पदं यौगिकवृत्त्या तथैव प्रतीतेरित्येतत्परम् । 'संधौ यजेत' इति श्रुत्यन्तरे तस्यैव कालस्य विनियोगेन उपसंहारादिति वा अर्थः । 'विक्रमः संनिपाततश्च यागकालः' इति शिष्टाः स्मरन्ति इति भाष्यं न शिष्टाचारस्मृत्यन्तरपरम् । अपितु अमावास्याऽऽदिपदनिर्वचनपरम् । तथैव निर्वचनस्य स्मृतिषु अपि उपलम्भात् इति भावः । संकर्ष. ३।१।१.

* दर्शपूर्णमासशब्दस्य यागवचनत्वात् । भा. ११।१।१।३.

* दर्शपूर्णमासस्थसूक्तवाकगतयजमानशब्दस्यानेककर्तृकविकृतौ ऊहः । भा. ९।१।१४।४१.

* दर्शपूर्णमासहविषो विकारः सुरावाजिने । औषधविकृतिः सुरा, सांनाय्यविकृतं वाजिनम् । भा. ८।२।१।५.

* दर्शशब्दस्य अप्रसिद्धार्थत्वात् पूर्णमासशब्दवच्च केनचित् यागनाम्ना सारूप्याभावात् कथं यागविशेषे निवेश इत्याशङ्क्य आरम्भणीयाख्यशेषे 'दर्शो वा एतयोः पूर्वः, पूर्णमास उत्तरः, अथ यत् पूर्णमासं पूर्वमारभते तद् यथापूर्वं क्रियते तस्मात् पूर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत्, सरस्वते द्वादशकपालम्, अमावास्या वै सरस्वती पूर्णमासः सरस्वान्, उभावेतौ यथापूर्वं कल्पयित्वा आरभते' इति अमावास्याख्ययागविशेषस्य दर्शव्यपदेशात् चन्द्रदर्शनात् अमावास्यायां तिथौ दर्शव्यपदेशात् ( चन्द्रादर्शनाद्वा अमावास्यायां तिथौ विपरीतलक्षणया दर्शव्यपदेशात् ) 'प्रतिपद्दर्शषष्ठीषु न कुर्याद्दन्तधानम्' इत्यादौ च अमावास्यायां दर्शव्यपदेशात् प्रसिद्धार्थता । सु. पृ. ७२३, * दर्शशब्दस्य विरुद्धलक्षणया दर्शनविपर्ययात् अदर्शनगमकत्वात् स्पष्टा अमावास्याविषयत्वप्रतिपत्तिः । पृ. ७३२.

* दर्शनं यदुपदिष्टं 'स सत्रस्य प्रत्येता' इति, न तत् दर्शनम्, किं तर्हि वचनं तत् । प्राप्तिपूर्वकं हि दर्शनं भवति । भा. १२।४।१४।४१, * सर्वत्र नो दर्शनं प्रमाणम् । १।१।५।५ पृ. ४४. * दर्शनाद् विनियोगः स्यात् । ( १।३।८।१७ ) त्र्यार्षेयपञ्चार्षेयं गोत्रव्यवस्थया शिखाकल्पव्यवस्थायाः दर्शनात् गोत्रविशेषवाच्युपपदानुमानेन कर्तृविशेषस्य विनियोगः स्यात् । सु. पृ. २५१. * दर्शनादर्शनयोश्च दर्शनं प्रमाणम् । भा. १०।७।११।३६.

* दश घटाः कर्तव्या इतिवत् उत्पत्तिलक्षणक्रियाऽवच्छेदात् संख्याऽन्वयो वाच्यः । सोम. ५।३।१. * 'दश दाडिमानि षडपूपाः' इति अनुपपन्नार्थमपि हि लौकिकं वचनं दृष्टम् । लोके चानुपपन्नार्थमेव किंचित् दृष्ट्वा शास्त्रं तन्नियमाय प्रवृत्तम् । बृहती. पृ. १२३. * 'दशभिः क्रीणाति' इति वचनस्य क्रयसमुच्चयपरत्वम् । भाट्ट. ३।१।६.

* दशतयशब्देन शाकलसंहितायां 'दश' मण्डलानि उच्यन्ते । सु. पृ. ११२१.

⌛ दशत्वं लिङ्गदर्शनात् । ३।७।१२।२७॥

ज्योतिष्टोमे चमसाध्वर्यवो बहवः इति प्रागुक्तम् । किमात्मकं तत् बहुत्वं इति विचारे, कपिञ्जलाधिकरणन्यायेन त्रित्वरूपं बहुत्वं इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तमाह । उक्तं चमसाध्वर्यूणां बहुत्वं दशत्वरूपं ग्राह्यम् । कुतः ? लिङ्गदर्शनात् । ज्योतिष्टोमविकारे दशपेये 'दशदश एकैकं चमसमनुप्रसर्पन्ति' इति ब्रुवन् दश चमसाध्वर्यून् दर्शयति । स्वामिनां ऋत्विजां दशत्वं च लिङ्गम् । होता, ब्रह्मा, उद्गाता, यजमानश्चेति चत्वारो मध्यतः कारिणः, प्रशास्ता, ब्राह्मणाच्छंसी, पोता नेष्टा, अच्छावाकः, आग्नीध्रश्चेति षट् होत्रकाः इति दशानां चमसाध्वर्यवोऽपि दश इति युक्तम् । तस्मात् चमसाध्वर्यवो दश ।

अत्र सुधा— एकस्यापि ग्रामभृत्यवत् अनेकस्वाम्यन्वयाविरोधात् स्वामिदशत्वेऽपि त्रित्वनियमविरोधिनी चमसाध्वर्युदशता न युक्ता इत्याशङ्कायाम्, ग्रामभृत्यस्यापि अन्योन्यानपेक्षानेकस्वामित्वायोगात्, इह च मध्यतः कारिणां होत्रकाणां इति च बहुवचनावगतस्य साहित्यस्य उद्देश्यविशेषणत्वेन अविवक्षितत्वात् अन्योन्यानपेक्षस्वामिदशत्वावगतेः, तदन्यथाऽनुपपत्त्या अवगतेन दशत्वेन त्रित्वनियमस्य लिङ्गदर्शनद्योतितदशत्वापनयप्रयोजकस्य बाधितत्वात्, न दशता अपनीयते इति उत्तरं बोध्यम् । इति । के.

✱ दशपेयः ज्योतिष्टोमस्य विकृतिः । वि. ३।५।२०. ✱ दशपेयः राजसूये अभिषेचनीयोत्तरं एकस्मिन्नेव क्रतौ । तत्रापि अभिषेचनीयस्य दशमेऽहनि दशपेयः संपद्यते । शाब्दः सोमक्रयः अभिषेचनीयसोमक्रयकाले एव । अर्थकृतस्तु स्वकाले । नानयोस्तन्त्रम् । भा. ११। २।१४।५७–६२. ✱ दशपेयः सद्यस्कालः । 'सद्यो दीक्षयन्ति' 'सद्यः सोमं क्रीणन्ति' । वि. ११।२।१४, ✱ दशपेयः सोमयागविशेषो राजसूयान्तर्गतः । ४।४।१, ✱ दशपेयस्य संसृपाख्यदशेष्टिभ्य ऊर्ध्वमपराह्णे उपक्रमः । ११।२।१४, ✱ दशपेयस्य सोमक्रयार्थोपसंवादमात्रं अभिषेचनीयक्रयार्थोपसंवादेन सहैव । ११।२।१४,

✱ दशपेये एकैकश्चमसो दशभिर्दशभिः पीयते । 'दशदश एकैकं चमसमनुप्रसर्पन्ति' । ३।५।२०.

⌛ दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्ततः प्राचां तत् समानं तन्त्रं स्यात् । ११।२।१४।५७॥

राजसूये पवित्रादयः सोमयागाः । तत्र द्वितीयः सोमः अभिषेचनीयः नाम, पञ्चमः सोमः दशपेयो नाम । अनयोः अभिषेचनीयदशपेययोर्मध्ये दशपेये यः क्रयः सोमक्रयः तस्य 'सह सोमं क्रीणाति अभिषेचनीयदशपेययोः' इतिवाक्येन अभिषेचनीयसोमक्रयकाले प्रतिकर्षो विहितः । तेन ततः क्रमात् प्राचां पुरस्तादङ्गानामपि प्रतिकर्षः स्यात् 'तदादि वाभिसंबन्धात्' (५। १।१२।२४) इति न्यायात् । यस्माच्च क्रयान्तानामङ्गानां प्रतिकर्षः तत् तस्मात् समासावपि समानं तन्त्रं स्यात् । अभिषेचनीयदशपेययोः क्रयान्तानामङ्गानां तन्त्रत्वात् उत्तराङ्गानामपि तन्त्रं स्यात् इति क्रयान्तानां तन्त्रत्वे तु सहक्रयविधानं हेतुः । इति पूर्वः पक्षः ।

समानवचनं तद्वत् । ५८ ॥

'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इति तयोः सोमयोः समानवचनं समानत्वबोधकं वचनं भवति । समानत्वं च अङ्गानां तन्त्रेणैव संभवति प्रधानानां भिन्नत्वात् । तस्मात् तन्त्रम् । इति पूर्वपक्षे हेत्वन्तरम् ।

अप्रतिकर्षो वाऽर्थहेतुत्वात् सहत्वं विधीयते । ५९ ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अप्रतिकर्षः न क्रयस्य प्रतिकर्षः, नापि क्रयान्तानामङ्गानाम् । सहत्वं क्रयसहत्वं तु अर्थहेतुत्वात् मूल्यनिश्चयार्थम् । नायं मुख्यः सोमक्रयः । मूल्यपरिच्छेदोऽयम् । मुख्यः क्रयस्तु दशपेयकाले एव भविष्यति । तस्मात् न अभिषेचनीयदशपेययोः समानं तन्त्रम् । इति सिद्धान्तः ।

पूर्वस्मिंश्चावभृथस्य दर्शनात् । ६०॥

सिद्धान्ते हेत्वन्तरमाह । पूर्वस्मिन् अभिषेचनीये अवभृथस्य दर्शनात् अभिषेचनीयदशपेययोर्न तन्त्रम् । समानतन्त्रत्वे तु दशपेयान्ते एव एक एव अवभृथः स्यात् । 'समानं वा एतद्यज्ञं विच्छिन्दन्ति यदभिषेच-

नीयस्यावभृथमभ्यवयन्ति' इति अवभृथदर्शनम्। तस्मान्न तन्त्रम्।

दीक्षाणां चोत्तरस्य। ६१॥

सिद्धान्ते हेत्वन्तरम्। अभिषेचनीयदीक्षाभ्यः पृथक् उत्तरस्य दशपेयस्य दीक्षाणां दर्शनात् तयोर्न तन्त्रम्। 'तथाऽभिषेचनीयस्य दीक्षा वर्धयेयुर्यथा दशमेऽहनि दशपेयः संपद्यते' 'सद्यो दीक्षयति, सद्यः सोमं क्रीणाति' इति (अत्र सत्याषाढसूत्रं तु 'तथा दीक्षाः प्रवर्धयन्ति अभिषेचनीयस्य, यथा दशरात्रे शिष्टे संवत्सरस्य दशपेयो भविष्यति' इति) तस्मान्न तन्त्रम्।

समानः कालसामान्यात्। ६२॥

यत्तु 'समानवचनं तद्वत्' इति (सू० ५८) तत्राह। यस्मिन् संवत्सरे अभिषेचनीयः तस्मादुत्तरे संवत्सरे तस्मिन्नेव ऋतौ दशपेयः। तथा च कालसामान्यात् ऋतुरूपस्य कालस्य सामान्यात् समानत्वात् अभिषेचनीयदशपेययोः 'समानो वा एष यज्ञः' इत्यनेन समानत्वमुक्तम्। तस्मात् तन्त्रभेदः इति सिद्धान्तः। के.

* दशपेये राजसूयगते प्राकाशौ अध्वर्युभागस्यैव निवर्तकौ, न तु कृत्स्नस्य ऋतुदाक्षिण्यस्य (भाष्ये अश्वमेधे इत्युक्तम्)। प्राकाशन्यायः। भा. १०।३।१७। ६३-६४.

* दशपेयाभिषेचनीययोर्भिन्नतन्त्रता राजसूये। अभिषेचनीयदशपेययोः इत्यत्राधिकरणम्। भा. ११।२। १४।५७-६२.

⌛ दशपेयन्यायः। दशपेये यजमानचमसस्य दश ब्राह्मणा एव भक्षकाः, न राजन्याः॥

अनुप्रसर्पिषु सामान्यात्। ३।५।२०।५२॥

भाष्यम्— अस्ति राजसूये दशपेयः। तत्र श्रूयते 'शतं ब्राह्मणाः सोमान् भक्षयन्ति, दशदश एकैकचमसमनुप्रसर्पन्ति' इति। अत्र राजन्यचमसे संदेहः किं तं राजन्या अनुप्रसर्पेयुः उत ब्राह्मणा इति। किं प्राप्तम्? राजन्या इति। कथम्? दशदश एकैकं चमसमनुप्रसर्पेयुः इति अनुप्रसर्पतां संख्या विधीयते। एकस्यां राजन्यजातौ दशसंख्या विधीयते। राजन्यजातिः सैव। तेन तं दश राजन्याः अनुप्रसर्पेयुः। एवं शतं ब्राह्मणा राजन्याश्च। तेषु शतशब्दोऽनुवादः। अनुवादस्वरूपश्च शतं भक्षयन्तीति। तस्मात् राजन्या राजन्यचमसमनुप्रसर्पेयुरिति। केचिदाहुः, 'ब्राह्मणराजन्यानामेकस्मिँश्चमसे भक्षणं विरुध्यते' इति। न स दोषः, 'नहि सोमेनोच्छिष्टा भवन्ति' इति श्रूयते।

वा— दशपेये (राजसूयगते सोमविशेषे) 'शतं ब्राह्मणाः सोमान् भक्षयन्ति, दशदश एकैकं चमसमनुप्रसर्पेयुः' इति। तत्र राजन्यचमसोऽपि (यजमानचमसोऽपि इत्यर्थः) किं ब्राह्मणैरेव दशभिर्भक्षयितव्यः, उत राजन्यैः इति संदेहः। कः पुनः संदेहहेतुः? केचिदाहुः, वचनव्यक्तिभेद इति। यदि हि 'दशदश एकैकम्' इति विधिः, ततः तुल्यजातीयेषु सर्वत्र विहितेषु 'शतं ब्राह्मणाः' इति यथाप्राप्तानुवादः ब्राह्मणग्रामवत् भूम्ना भवति इति राजन्या दश। अथ पुनः 'शतं ब्राह्मणाः' इति विधिः, 'दशदश एकैकम्' इत्यनुवादः, ततो विधौ गौणत्वासंभवात् सर्वत्र ब्राह्मणैरेव भक्षयितव्यम्, इति ब्राह्मणा दश। किं तावत् प्राप्तम्? 'अनुप्रसर्पेयुः' इत्यस्य विधिसामर्थ्यात्, 'भक्षयन्ति' इति च अनुवादसामर्थ्यात् 'दशदश एकैकम्' इति विधौ सति, 'के दश' इत्यपेक्षायां तुल्यजातीयेषु संख्यावृत्तिस्वाभाव्यात् ब्राह्मणचमसेषु (ऋत्विक्चमसेषु) ब्राह्मणाः, राजन्यचमसे राजन्या दश इति गम्यते। 'सामान्यात्' इति च (सूत्रे) दशसंख्यां चोदयित्वा निवृत्तव्यापारे शास्त्रे, तत्पूरणार्थे अश्रुतासु व्यक्तिषु उपादीयमानासु यासां किञ्चित् प्रत्यायकमस्ति, ताः ग्रहीतव्याः। तुल्यजातीयानां च सामान्यं गमकं विद्यते, न जात्यन्तरानुगतानाम्। अथवा सामान्यात् इति विषयसामान्यात्। 'अर्थैकत्वे द्रव्यगुणयोः' इति हि फलचमसं प्रति उपादीयमानयोः क्षत्रियत्वदशत्वयोः परस्परनियमे सति, यावति विषये दशत्वं तावति राजन्यत्वं इत्यवगम्यते, इति बलात् दश राजन्या विज्ञायन्ते। अथवा सामान्यात् इति तुल्यकार्ये तुल्यजातीयं च तुल्यस्य बाधकं भवति। तत् यदि राजसूयचोदनातो राजन्यत्वं प्राप्तं प्रकृतितश्चैकत्वम्। तत्र दशत्वं विधीयमानं सामान्यात् आतिदेशिकत्वाच्च एकत्वं बाधते, न जातिम्,

भिन्नकार्यत्वात्। ततश्च अनिवृत्तजातिरेव यजमानचमसो दशत्वेन योजयितव्यः इति दश राजन्या भवन्ति। ननु च दशत्वे विधीयमाने यत् एकैकं चमसमनु प्रसर्पन्ति, इति विशिष्टानुवादात् वाक्यं भिद्यते। नैष दोषः। 'चमसम्' इति द्वितीयान्तं केवलमनूद्यते, तावता तु संस्कार्यत्वं गम्यते। न च चमसानां भक्षणं मुक्त्वा अन्यः संस्कारः। तेन स एव अनुप्रसर्पणशब्देन लक्ष्यते। तत्र च प्रत्येकमेव भक्षणं प्राप्तम्, इति तदपि अनूद्यते। तस्मात् न वाक्यभेदः।

**ब्राह्मणा वा, तुल्यशब्दत्वात्। ५३॥**

भाष्यम्— ब्राह्मणा वा राजन्यचमसमनुप्रसर्पेयुः। कथम्? 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इति विधिः श्रुत्या ब्राह्मणगतामेव संख्यामाह। तस्मात् शतं ब्राह्मणाः। तेषां भक्षणार्थमनुप्रसर्पतां एकैकस्मिँश्चमसे दशदश उपदिश्यन्ते। तस्मात् ब्राह्मणशतस्य (मध्ये) दश ब्राह्मणाः राजन्यचमसमनुप्रसर्पेयुरिति।

वा— न वा राजन्या भक्षयेयुः। कुतः? 'शतब्राह्मणसंयुक्तो विधिरत्रावगम्यते। अन्यथा तदुपादानं गौणं व्यर्थं च ते भवेत्॥' तुल्येन ब्राह्मणशब्देन सर्वचमसेषु ब्राह्मणाः प्रतिपाद्यन्ते। तेन कुतश्चिदपि व्यावर्तयितव्याः। न च गौणत्वकारणं किञ्चिदस्ति। प्रमाणान्तरेण विस्पष्टराजन्यानुपादानात्। समस्तमेव चैतत् अनर्थकं पुनःश्रवणं भवेत्। अस्मत्पक्षे पुनः प्रयोगवचनादिभ्यो विधिशास्त्रमनुमाय ब्राह्मणशते विहिते 'दशदशमेकैकम्' इति विभागार्था पुनःश्रुतिः। अथवा 'समं स्यादश्रुतत्वात्' इति न्यायेन दशदश प्राप्ताः मुख्ययैव वृत्त्या अनुवदिष्यन्ते। ब्राह्मणशतेन च दशदशकैः अवस्थितेन दशस्वपि चमसेषु अवरुद्धेषु न कश्चित् राजन्यानामवकाशो विद्यते। तस्मात् ब्राह्मणा दश (राजन्यचमसं भक्षयेयुः) इति।

न तु इयं व्याख्या घटते। यदि हि 'शतं ब्राह्मणाः' इत्येष विधिः स्यात्, ततः अतिदेशप्राप्तभक्षानुवादात् विशिष्टविधानासंभवेन अन्यतरत्र विधीयमाने, यदि शतं विधीयते, (तदा) 'ब्राह्मणाः' इत्यनर्थकम्, सिद्धान्तहानिश्च। ब्राह्मणविधौ तु 'शतं' इत्यनर्थकम्। अथ 'यत् शतं भक्षयन्ति' इत्यनूद्य ब्राह्मणा विधीयन्ते (तदा), केन शतं प्राप्तं इति वक्तव्यम्। अथ 'यत् ब्राह्मणा भक्षयन्ति' इत्यनूद्य शतं विधीयते, ततो राजन्यव्यावृत्त्या ब्राह्मणश्रुतेः विशेषणत्वात् विशिष्टानुवादात् वाक्यभेदः, राजन्यचमसे न च किञ्चित् कृतं स्यात्। तत्र 'एकैकम्' इत्यस्य राजन्यचमसे अनुवादासंभवात् तत्रान्ये राजन्या दश विधीयेरन् इतरत्र च ब्राह्मणशतं नवसु चमसेषु, न विद्मः केन विभागेन स्यादिति। अथ सोमसंबन्धात् 'ब्राह्मणाः' इति प्राप्तानुवादः कल्प्यते, तथापि फलचमसव्यावृत्त्या विशिष्टानुवादो दोषोऽस्त्येव, फलचमसे च पुनरपि न कश्चित् व्यापारः, इति पूर्ववदेव प्रसङ्गः। न च सोमशब्दब्राह्मणशब्दयोः अर्थान्तरेऽपि फलचमसे राजन्ये वा प्रयोगः इति किञ्चित् प्रमाणम्।

अविशेषितभक्षानुवादे पशुपुरोडाशादिभक्षेष्वपि शतप्रसङ्गः, नहि असौ प्रधानेन विशेष्यते, 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' इत्येवं अङ्गप्रधानार्थत्वप्रतीतेः, सोमशब्दश्च अत्यन्तमेव अनर्थकः स्यात्। अथ 'सोमान्' इत्येतावन्मात्रमनूद्य शतं विधीयते, ततः क्रयादारभ्य यावान् सोमसंस्कारः, स सर्वः शतेन कर्तव्यः, तत्र भक्षयतिरनर्थक एव स्यात्। अथ भक्षयतौ शतब्राह्मणसंबन्धो विधीयते, तथा पुरोडाशादिष्वपि प्रसङ्गात् सोमशब्दानर्थक्यं अस्त्येव। सोमे तु ब्राह्मणशतसंबन्धविधानं अक्रियाशब्दत्वादेव अशक्यम्। पुनरपि फलचमसे स्तिभीरूपत्वेन (स्तिभीनाम न्यग्रोधफलगुच्छः) असोमे राजन्यप्राप्तिः नैव वार्यते। तेन एतद्वाक्यमनुपपन्नम्। तथा 'दशदश एकैकम्' इत्यस्यापि अनुपहतविधिशक्तेः स्वतन्त्रविधित्वावधारितस्य अनुवादत्वं निष्फलं अप्रमाणकं च। कथं हि पूर्वेण वर्तमानापदेशः सन् विधिः स्यात्, अयं चानुवादः? न च निमित्तत्वादिभिर्विना अनेकाख्यातैकवाक्यत्वं घटते। न च यदिशब्दादिरहितस्य निमित्तत्वादिप्रतीतिरस्ति। न च 'दशदश एकैकम्' इत्यत्र काचित् स्तुतिः प्रतीयते, येन तदर्थः अनुवादः, एकवाक्यत्वं चोपपद्येत। तस्मात् पृथग्भूतस्य वाक्यस्य समस्तानुवादत्वमयुक्तम्, इति किञ्चित् विधातव्यम्।

तत्र यदि तावत् शतस्य अनियमप्रसङ्गे दशदश इति विधीयते, ततश्च 'एकैकं' इत्यनुपपन्नम्, (एकैकमित्यस्यापि—) विधाने वाक्यभेदप्रसक्तेः। वषट्कर्तॄणां च अनेकचमसप्राप्तौ सत्यां अनुवादत्वासंभवात् ग्रहेष्वपि पूर्वेण ('शतं ब्राह्मणाः सोमान् भक्षयन्ति' इति वाक्येन भक्षणस्य) प्राप्तत्वात् चमसशब्दः अनर्थकः, विशिंषंश्च वाक्यं भिन्द्यात्। न च 'दशदश एकैकं' इत्यनुवादः संभवति, शतस्यापि चमससंस्कारार्थं उपादीयमानस्य प्रतिचमसं सामस्त्येन प्राप्तेः। कर्तृसंस्कारार्थे हि सति दक्षिणावत् विभागप्राप्त्या 'समं स्यात्' इति 'दशदश एकैकं' इति प्राप्नुयात्। तत्र सत्यपि विधौ परिसंख्या स्यात्। अनेकस्मिन्नपि वा दशदश भक्षयितारः प्राप्नुवन्ति। एकस्मिन्नपि वा चमसे दशानांदशानां प्रसङ्गः, शतस्यैव दशदशकैर्गणैः स्थित्वा चमसे भक्षणं स्यात्।

तस्मात् वाक्यद्वयं अस्मिन् व्याख्याने अनुपपन्नम्, इति एवं व्याख्येयम्। द्वे अप्येते वाक्ये विधायके, तत्स्वरूपत्वात्। तत्रापि 'दशदश एकैकम्' इत्येतदेव पूर्वपक्षवत् प्रथममाश्रीयते। यथोक्तेन न्यायेन क्रमान्तरस्य अनुपपत्तेः। 'अनुप्रसर्पन्ति' इत्यनेन तावत् अतिदेशप्राप्तभक्षोपलक्षणसंबन्धात् यथा फलचमसभक्षणेन यागोपलक्षणमुक्तम्, तेन 'यत् चमसमनुप्रसर्पन्ति' इति अन्यतरस्य साकाङ्क्षत्वात् विशेषणविशेष्यभावमङ्गीकृत्य अनुवादः, 'दशदश' इति विधिः, चमसप्राधान्याच्च प्रत्येकं दशत्वभेदात् वीप्सा भवति। ततः पूर्वं 'शतं' इतरेण वाक्येन अनूद्य 'यत् शतं सोमान् भक्षयन्ति, तत् ब्राह्मणाः' इति विधिः। नहि विधिसंभवे समस्तवाक्यानुवादत्वं युक्तम्, ब्राह्मणशब्दस्य च गौणत्वम्। शतमात्रसंबन्धेन च कृतार्थत्वात् अतन्त्रमेव सोमशब्दः भक्षयतिश्च इति न विशिष्टानुवाददोषः। नापि सोमशब्दात् यागसाधनमात्रलक्षणया फलचमसप्रतिपादनेऽपि दोषः। तेन संख्यापूरणार्थं यावत् अश्रुतराजन्यकल्पना प्रक्रम्यते, तावत् ब्राह्मणश्रुत्या संख्यान्तरं विधाय नैराकाङ्क्ष्यं क्रियते। न च एवं सति ग्रहेषु प्रसङ्गः 'दशदश' इत्यस्य चमसविषयत्वात्। राजन्यचमसेऽपि दशकप्राप्तौ सत्यां ब्राह्मणदशकेनैव अवरोधः इति द्रव्ये संस्कृते कृतार्थत्वात् यजमानस्य नैव भक्षणेन भवितव्यम्। तस्मात् ब्राह्मणाः दश (राजन्यचमसे भक्षयितारः) इति सिद्धम्।

यत्तु भाष्यकारेण ब्राह्मणराजन्यानां सहभक्षणप्रतिषेधस्य 'न सोमेनोच्छिष्टा भवन्ति' इति (पूर्वपक्षग्रन्थे केचिदाहुरित्यादिना कृतायाः शङ्कायाः) उत्तरं दत्तम्, तत्र केचित् चोदयन्ति 'फलचमसे सोमत्वाभावात् कथमनुच्छिष्टत्वं संभवति' इति। न तु एष दोषः, स्थानापत्त्या सोमधर्मलाभात्। वक्ष्यति हि (सूत्रकारः) 'नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्' (इति) 'धर्मस्यार्थकृतत्वात्' इति च। ननु पुरुषधर्मोऽयं अनुच्छिष्टत्वं न युक्तं स्थानापत्त्या अन्यत्र कल्पयितुम्। (उत्तरयति—) न कल्प्येत, यदि पुरुषधर्मोऽयं स्यात्। न तु अयं पुरुषधर्मः, फलकल्पनागौरवप्रसङ्गात्। सोमभक्षविषये च उच्छिष्टत्वप्रसङ्गे अनुच्छिष्टत्वमभिहितम्। स च कर्मधर्मः इति स्थितम्। अतो यथैव सोमः संस्क्रियमाणः कर्तुः उच्छिष्टतां नापादयति, एवं तत्कार्यापन्नः फलचमसोऽपि। तस्मात् पूर्वयैव उपपत्त्या ब्राह्मणलाभसिद्धिः इति भावः।

**शा— (सिद्धान्तमाह) 'उच्यते विधिरेवायमर्थवत्त्वात् श्रुतेस्तथा। अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते॥ नहि कृत्स्नानुवादस्य किञ्चिदस्ति प्रयोजनम्। संभवन्त्यां श्रुतौ नैव लक्षणाप्युपपद्यते॥ तस्मात् शतानुवादेन ब्राह्मण्यमिह चोद्यते। तत्र च न्यायतः प्राप्ता राजजातिर्निवर्तते॥ स्यात् पञ्चमलकारेण विधिश्च समिदादिवत्। ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः॥' १९.**

**सोम—** फलचमसे राजन्यस्य भक्षे उक्ते, तस्य क्वचिदपवादः क्रियते इति **संगतिः**। दशवाक्यविधायकत्वस्य पक्षद्वयसाधारण्यात् किं 'शतं ब्राह्मणाः' इति विधिः, उत अनुवादः इति संशयनिष्कर्षः। **सूत्रार्थस्तु—** अनुप्रसर्पिषु राजन्यचमसे राजन्या एव तुल्यजातीयत्वात् ग्राह्याः इति।

वि— 'राजसूये क्वचित् (दशपेये) कर्तुश्चमसो दशभिर्जनैः। भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा

उत ॥, आद्यो भानात् संख्ययैकजातेर्, विप्राः शतं दश। चमसानग्रुरित्युक्त्या राजपात्रं च विप्रगम् ॥'

भाट्ट--राजसूये दशपेयो नाम सोमयागविकारो राजकर्तृकः। तत्र अतिदेशतो दशसु चमसेषु प्राप्तेषु यजमानचमसे राज्ञो भक्षणम्। तत्र अपरं 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' 'दशदशैकैकं चमसमनुप्रसर्पेयुः' इति वचनद्वयं श्रुतम्। तत्र न तावत् 'शतं ब्राह्मणाः' इति विधिः 'दशदश' इत्यनुवादः, भक्षानुवादेन गुणद्वयविधाने वाक्यभेदात्, एकैकस्मिन् भक्षे शतब्राह्मणप्राप्त्यापत्तौ दशदश इत्यस्य प्राप्त्यभावाच्च। अतो दशदशेत्येव लिङ्श्रवणात् विधिः। सोऽपि च न चमसोद्देशेन, दशत्वस्य प्राप्तत्वात्। नापि तदुद्देशेन भक्षाश्रितदशकर्तृविधिः, चमसोन्नयनादिक्रियाऽन्तरस्यापि आश्रयत्वप्रसङ्गेन भक्षस्यैव आश्रयत्वे प्रमाणाभावात्, याज्ञिकाचारसिद्धसमाख्याभक्षस्यैव नियमेन उपस्थित्यभावेन वषट्कारनिमित्तस्यापि आश्रयत्वापत्तेश्च, 'चमसम्' इति द्वितीयायाः अनुशब्दयोगनिमित्तत्वेन प्रतियोगित्वपरतया तस्य उद्देश्यत्वोपस्थापकत्वाभावाच्च। नापि चमसानुप्रसर्पणोद्देशेन दशकर्तृविधिः विशिष्टोद्देशे वाक्यभेदात्, चमसप्रतियोगिकर्त्विक्कर्तृकानुप्रसर्पणस्य अप्राप्तत्वाच्च, 'प्रयाजेभ्यस्तत्' इतिवत् सर्वचमसेषु एकस्यैव दशकस्य प्रसक्त्यापत्तेश्च। चमसेषु एकैकत्वविशेषणे पुनः विशिष्टोद्देशः। दशदश इति वीप्सार्थविधाने वाक्यभेदः, प्रतिचमसं विंशत्यापत्तिश्च। अतो दशकर्तृविशिष्टं प्रत्येकचमसप्रतियोगिकं अनुप्रसर्पणमेव अत्र विधीयते। तयोश्च पार्ष्ठिकान्वये एकैकस्मिन् चमसे दशदश कर्तारो भवन्तीति वीप्सानुवादः। अनुप्रसर्पणस्य च प्रयोजनापेक्षायां वैमृधन्यायेन चमसपदान्तर्गतचमिधातुप्रतिपाद्यसमाख्यानिमित्तभक्षस्यैव स्ववाक्योपस्थितत्वात् तद्वाचकपदान्तरकल्पनया प्रयोजनत्वम्। अतश्च समाख्यानिमित्तभक्षार्थं प्रतिचमसं दशानामनुप्रसर्पणे चमसानां दशत्वात् शतसंख्यासंपत्तेः शतवाक्यमनुवादो विधेयदशत्वस्तुत्यर्थः, न तु ब्राह्मणत्वविधायकः, वाक्यभेदापत्तेः। अतो ब्राह्मणग्रहणं सोमपद्वदेव भूम्ना गौणमिति यजमानचमसे राजत्वजातेरेव न्यायप्राप्तत्वात् राजन्या दश भक्षयेयुः। इति प्राप्ते, ब्राह्मणत्वस्य सर्वचमसेषु प्राप्त्यभावेन 'उपरि हि देवेभ्यो धारयति' इतिवत् विधेयत्वोपपत्तेः गौणत्वे प्रमाणाभावात् ब्राह्मणत्वमेवेह शतोद्देशेन विधीयते। 'सोमान् भक्षयन्ति' इत्यनुवादमात्रम्। वस्तुतस्तु भक्षयतिना पूर्ववाक्ये समाख्याभक्षस्य उद्देश्यत्वेन उपस्थितस्यैव उपादानात् तदुद्देशेनैव ब्राह्मणत्वविधानमिति दशत्वेन एकत्वबाधवत् ब्राह्मणत्वेन राजत्वबाधः, इति यजमानचमसेऽपि ब्राह्मणा एव फलचमसं दश भक्षयेयुः। न च 'स यदि सोमम्' इत्यनेन राजकर्तृकभक्षस्य निमित्तत्वावगतेः कथं तदभावे फलचमस इति वाच्यम्। निमित्तत्वद्वयाङ्गीकारे वाक्यभेदापत्तेः आद्येनैव यदिशब्देन यागगतराजकर्तृकत्वस्य निमित्तत्वप्रतिपादनात्। अयं तु यदिशब्दो निःसंदिग्धत्वार्थकोऽनुवाद इत्युक्तम्।

मण्डन--'सोमपा ब्राह्मणाः शतम्।'

शंकर--'ब्राह्मणा दश भक्षेयुः।' दशपेये यजमानचमसम्।

* दशममहः द्वादशाहे। 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति। नात्र पत्नीसंयाजान्तता किंतु मानसान्तत्वम्। दशमेऽहनि मानसाय प्रसर्पन्ति। दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति। भा. १०।६।१३।३९-४०. * दशमस्य अह्नो द्वादशाहगतस्य समापनं मानसग्रहेण वाचनिकम्। वि. ९।१।९. * दशमस्य अह्नो मानसमङ्गम्, न स्वतन्त्रं द्वादशाहे। भा. १०।६।१३।३४-४४.

* दशमे अध्याये चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता। एकादशे इयत्ताविशेषश्चिन्त्यते। दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ। टुप्. ११।१।१।१. * दशमेऽध्याये प्राप्तबाधः, तृतीये तु अप्राप्तबाधः। के. * दशमेऽध्याये बाध उच्यते। वि. १०।१ प्रास्तावश्लोके. * दशमेऽध्याये बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ता। टुप्. ७।१।१।१. * दशमे अहनि द्वादशाहगते ऐन्द्रवायवाग्रत्वम्। वि. १०।५।२३.

* दशमाध्यायार्थः। 'द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः। ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः॥' प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद्यथा 'स्वयं-

कृता वेदिर्भवति' इत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेन अवघातस्य बाधः। **द्वितीये पादे** संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। **तृतीये** बाधकारणं कार्यैकत्वम्। तद्यथा प्रकृतौ गवाश्वादिदक्षिणायाः ऋत्विक्परिक्रयः कार्यम्। तथा विकृतिरूपे भूनाम्नि एकाहे धेनुरूपायाः दक्षिणायाः तदेव कार्यम्। ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। **चतुर्थे** नक्षत्रेष्टिविहिता उपहोमाः चोदकप्राप्तैर्नारिष्ठहोमैः सह समुच्चीयन्ते इत्यादिः समुच्चयः। **पञ्चमे** षोडशिग्रहः प्रकृतिगामी। स च आग्रयणपात्रादेव ग्रहीतव्यः इत्यादिः बाधप्रसङ्गागतो ग्रहादिविचारः। **षष्ठे** 'साम तृचे गेयम्' इत्यादिर्बाधप्रसङ्गागतः सामविचारः। **सप्तमे** पश्वङ्गेषु प्रत्यङ्गं हविर्भेदः, न कृत्स्नः पशुः हविः। 'गृहमेधीयमपूर्वं कर्म' इत्यादिः बाधप्रसङ्गागतः प्रकीर्णविचारः। **अष्टमे** 'नानुयाजेषु' इति पर्युदासः, 'न सोमे' इत्यर्थवादः, 'नातिरात्रे' इति प्रतिषेधः इत्यादिः बाधोपयुक्तो नञर्थविचारः। वि. प्रस्तावना. श्लोकः २२.

* **दशमाध्यायार्थविचारः।** (न्यायरत्नमालास्थः)। दशमे बाधाभ्युच्चयद्वारेण विकृतिषु पदार्थेयत्ता चिन्त्यते। कथं पुनः वचनप्राप्तस्य बाधः अध्यवसीयते? यथा चैतत् तथा वक्ष्यामः। प्रथमं तावत् इदं तत्सिद्ध्यर्थं चिन्त्यते किं प्राकृतमङ्गजातं अनादृतोपकारं स्वरूपेणैव विकृतौ अतिदिश्यते 'सौर्येण कुर्यात्, कथम्? आग्नेयस्य स्वकार्यसाधने यः प्रकारः, स सौर्यस्य स्यात्' इति अतिदिश्यते। ततः तत्सिद्ध्युपायत्वेन अवान्तरापूर्वाणि प्रयाजादिजन्यानि प्रोक्षणजन्यं चादृष्टं जातिद्रव्यगुणावघातादिजन्यं च नियमादृष्टानुविद्धं दृष्टं अतिदिश्यते। ततः तत्साधनभूताः पदार्थाः, तेषां च तथाविधानामेव प्रतीत्युपायतया वचनानि अतिदिश्यन्ते इति।

**तत्र पूर्वपक्षः।** प्रकृतिवत् सर्वमेव अङ्गकाण्डं विकृतेरपि वाक्यशेषो भवति, तेन तेषु सर्वेषु विहितेषु प्रकृतिवत् यथासंभवं दृष्टमदृष्टं वा प्रयोजनं कल्प्यते इति नास्ति बाधः। यद्यपि न शास्त्रातिदेशः, तथापि पदार्था एवातिदिश्यन्ते नोपकारः। प्रकृतौ उपकारस्य पदार्थपूर्वकत्वात् विकृतावपि तत्पूर्विकैव तस्य प्रतीतिः। तत्र प्रथमप्रतिपन्नपदार्थातिक्रमेण न युक्तं जघन्यप्रतिपन्न उपकारः अतिदिश्यते इति। तस्मात् पदार्थानामेव कार्यनिरपेक्षाणामतिदिष्टानां इहैव दृष्टादृष्टप्रयोजनकल्पनात् नास्ति बाधः। इति प्राप्ते, अभिधीयते **'प्रकारस्यातिदेशः स्यात् पूर्वं यस्मादपेक्षितः। ततोऽवान्तरकार्याणामङ्गानां वचसां क्रमात्॥' १॥** यद्यपि प्रकृतानामुपकारः शास्त्रपदार्थपूर्वक एव, तथापि विकृतौ अतिदेशावस्थायां सर्वेषां शास्त्रपदार्थकार्याणां क्लृप्तत्वाविशेषेऽपि कथंभावापेक्षा विकृतिभावनाप्रकारमेव प्रथमं स्वीकरोति। नहि तस्याः शास्त्राणि पदार्था वा स्वरूपेणापेक्षिताः, किन्तु प्रकारः प्राकृतः। स एव तावदङ्गीक्रियते। स च पदार्थविशिष्टावान्तरकार्यविशिष्टः सन् विशेषणानि च अर्थात् प्रापयति। तेन तत्सिद्ध्यर्थं अवान्तरकार्याणि, तदर्थं चाङ्गानि, ततः शास्त्राणि। यद्यपि प्रथमावगताः (प्रधानगताः) पदार्थाः तथैव आलोचयितव्याः, तथापि अनपेक्षितत्वात् पदार्थान् उपेक्ष्य प्रकारमेव विकृतिर्गृह्णाति। तस्मात् तत्पुरःसर एव अतिदेशः, तदतिदेशेन च अर्थात् प्राप्यमाणेषु पदार्थेषु व्रीहीणां प्रत्यक्षश्रुतकृष्णलचरौ निवृत्तिः, वितुषीकरणस्य च तेषु असंभवात् निवृत्तिः, तन्निवृत्तौ च तद्द्वारस्य अवघातस्य निवृत्तिः, इति तदतिरिक्तविशेषणयुक्तस्यैव उपकारस्यातिदेशः इति। **'प्रकृतस्योपकारस्य विकृतावुपदेशतः। अन्वयं कश्चिदाचष्टे पितृयज्ञे नियोज्यवत्॥' २॥** उपदेशो हि ग्रन्थसंदर्भः स च अर्थान्तरान्वितं विध्यर्थं कार्यतया (कर्मतया) प्रतिपादयति। स तावत् तथाभूत एव औपदेशिकः। तेनापि यत् अपर्यवस्यता आक्षिप्यते, तदपि औपदेशिकमेव, यथा पिण्डपितृयज्ञे नियोज्यः। यथा च प्रकृतौ उपकारः, तेन विकृतावपि विध्यर्थकल्पितस्य उपकारस्य भवति औपदेशिकत्वम्, इति कश्चित्। तन्न युक्तम्, **'उपकारकभेदात् स्यादुपकारविशेषधीः। पूर्वमेव त्वपेक्षा स्यात् पदार्थेष्वपि सा समा॥' ३॥** उपकारकपदार्थविशेषाधीनसिद्धिः उपकारविशेषः न अनवधारितेषु तेषु विशिष्टरूपेण निरूपयितुं शक्यते। भवितव्यं हि केनचित्

९।२।२०।६०, * द्रव्यदेवतक्रिये यजतिशब्दो वर्तते। ६।१।१।२ पृ. १३५१. * द्रव्यदेवतासंयोगस्तु न कथञ्चित् यागादिना सिध्यति। वा. २।२।६।१८ पृ. ५१६. * न च शब्दमात्रं देवता इति नवमदशमयोरभिधास्यते। २।१।५।१५ पृ. ४१७, * न तु अस्माकं देवता पित्रति, किं तर्हि? संकल्पविषयत्वेनैवोपयुज्यते। ३।२।१७।४१. * यमर्थं प्राधान्येन मन्त्रोऽभिधत्ते सा देवता। सु. पृ. ६५४. * यं चार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण, एकदेवत्येऽपि मन्त्रे अनेकदेवताऽन्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात्। वा. १।२।४।४३. * यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा देवता भवति इति विधिशब्दाधिकरणे लक्षणं वक्ष्यते। सु. पृ. ७४२. * येषां शब्द एव देवता तेषां......। वा. ६।१।२।५, * यां चोद्दिश्य द्रव्यं त्यज्यते सा देवता। ३।१।१५।२७. * देवताः चतुर्थ्या तद्धितेन वा निर्दिश्यन्ते। 'यदग्नये सायं जुहुयात्' अत्र चतुर्थी। 'आग्नेयोऽष्टाकपालः' अत्र तद्धितः। वि. ९।२।२०. * देवताः नहि माद्यन्ति। भा. ३।२।१५।३७, * देवताः विग्रहादिमत्यो न सन्ति। देवताऽधिकरणम्। ९।१।४।६–१०, * देवतामुद्दिश्य यस्त्यागः स यागो भवति। न हि उद्देशमात्रेण देवता भवति। या यस्य श्रूयते सा तस्य देवतेति। ९।४।९।३२. * देवतां च विना होमायोगात्। सु. पृ.४५७. * देवतां प्रति द्रव्यस्योत्सर्गः कर्म। भा. ८।१।१७।३२. * 'देवतां यां यदुद्दिश्य द्रव्यं स्वत्वेन गृह्यते। तस्यास्तदेव संबन्धि, नान्यत् तन्मध्यपात्यपि॥' शास्त्रलक्षणो हि देवतासंबन्धः। वा. ३।२।१२।३२. * देवतां विना यागो नहि भवति। तेन स देवतामाकाङ्क्षति। तस्मात् देवता यागार्था। भा. १०।१।८।१८, * न हि देवतामन्तरेण यागो भवति। न च वचनमन्तरेण देवता। न चान्यस्य विहिता देवता अन्यस्यावकल्पते। १०।८।१७।५०. * यागो देवतामपेक्षते देवताश्च यागमन्तरेण न संभवन्ति इति यागमपेक्षन्ते। तयोः संनिधानेन प्रमाणेन संबन्धो भवति। टुप्. १०।४।२।३ पृ. १९१३. * न हि एकस्य कर्मणः अनेकया देवतया अनेकया (च) अनुवाक्यया कार्यमस्ति। वा. २।२।३।३ पृ. ४७९. * देवताभिरप्रत्यक्षाभिः संलापे न कश्चिद्यज्ञस्योपकारः। भा. १।२।४।३२. * देवतायै दातुं द्रव्यं त्यजन्ति। वा. ३।४।१४।४१ पृ. ९७९. * देवतायै संकल्पितं यजमानेन न स्वयमुपयोक्तव्यम्। तस्मान्न तस्योपयोक्तृत्वमृत्विज ईशते, नो खल्वपि यजमानः। भा. १०।२।९।३१, * देवतायै संकल्पितेन शिष्टाः न स्वेनेव व्यवहरन्ति। ३।४।१७।५०, * देवतायाः अभिधानं वनस्पतियागे वनस्पतिशब्देनैव। १०।४।१६।३२–३९, * देवतायाः असति विधाने अभावात्। २।२।३।६. * देवतायाः ऐश्वर्यम्। 'देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम्' इत्यादौ ब्राह्मणादिवत् देवताया अपि ऐश्वर्यप्रसिद्धेः 'यस्यै वा कस्यै देवतायै पशुरालभ्यते सैव मेधपतिः' इत्यर्थवादेभ्यश्च देवतात्वस्य ऐश्वर्यरूपत्वप्रसिद्धेः प्रतिग्रहाभावेऽपि तदुद्देशपूर्वकेण त्यागेन तदधीनत्वापादनात् मुख्यैश्वर्याभावेऽपि औपचारिकमैश्वर्यमस्ति। सु. पृ. ८३२, * देवतायाः कर्मसंप्रदानातिरिक्तकारकत्वस्य कथंचिदपि अयोगः। पृ. ७५१, * देवतायाः कारकत्वाभावेऽपि अङ्गत्वाभ्युपगमः। पृ. १३७, * देवतायाः त्यज्यमानद्रव्योद्देश्यत्वमात्रेण यागनिष्पादकत्वम्। पृ. ८००. * देवतायाः नास्ति प्रतिनिधिः। भा. ६।३।५।१८–१९. * देवतायाः। 'न वाऽतिथिवदेतस्याः पूज्यतेति च वक्ष्यते' रूपासमवायित्वात् नातिथिवत् पूज्यमानतां प्रतिपद्यते। नैतस्यास्तादृशं संप्रदानत्वमप्यस्ति प्रतिग्रहीतृत्वाभावात्। वा. २।२।४।१० पृ. ४९२. * देवतायाः नवमे विग्रहाभावस्य वक्ष्यमाणत्वेन क्रियया वृत्रहननायोगात् मन्त्रस्य स्तुतिमात्रार्थत्वावगतेः न वृत्रहन्तृत्वानुवादेन अग्निशब्दवाच्यत्वविधिर्युक्तः। सु. पृ. ३७२. * देवतायाः पशुयागीयायाः संस्कारः पशुपुरोडाशयागः। भा. १०।१।९।१९–३३. * देवतायाः प्रतिग्रहीतृत्वं न च संभवति। वा. २।२।९।२३ पृ. ५३६. * देवतायाः प्रतिग्रहीतृत्वाभावेन तत्स्वत्वापादनलक्षणदानायोगात् न तेन द्रव्यदेवतान्वयः संभवति। सु. पृ. ८३१, * देवतायाः प्रतिग्रहीतृत्वाभावेन रूपासमवायात् उद्देश्यत्वमात्रेण उपकारित्वात् उद्देशस्य च शब्दाधीनत्वात् केन

शब्देन उद्देष्ट्व्या देवता इत्यपेक्षायां श्रुतशब्दत्यागेन अश्रुतशब्दकल्पनाऽयोगात् विधिगतेनैव शब्देन देवतात्वचोदनाऽवगतेः न शब्दान्तरवत् न्यूनशब्दोच्चारणेऽपि देवतात्वप्रसिद्धिः। पृ. ६५१, * देवतायाः प्रतिग्रहीतृत्वाभावेन संप्रदानत्वाभावः। पृ. ७४९, * देवतायाः भोक्तृत्वाभावेऽपि स्तुतिभोक्तृत्वलक्षणस्य देवतात्वस्य यागकल्पकत्वम्। पृ. ९२९. * देवतायाः भोजनं हीदं यागो नाम (पूर्वपक्षे)। भा. ९।१।४।६. * देवतायाः विग्रहाद्यभावेन रूपासमवायात् पूज्यत्वं निरस्तम् 'अपिवा शब्दपूर्वत्वात्' (९।१।४।९) इति सूत्रे। सु. पृ. ७५०. * देवतायाः शब्दद्वारैव यागोपकारकत्वम्। संकर्ष. २।४।२, * देवतायाः शब्दरूपत्वात्। १।३।१६. * देवतायाः संस्कार्यत्वं विनाऽपि आरादुपकारित्वात् यागस्य प्रयोजनवत्त्वोपपत्तिः। सु. पृ. ८३४. * देवतायाः सकाशात् पुरोडाशपिण्डद्रव्यं अन्तरङ्गम्। संकर्ष. १।३।१६. * देवतायाः स्वेन रूपेण कर्मणि साधनभाव इत्युक्तम्। भा. १०।४।१४।२८. * देवतायाः स्वरूपेण कर्मणि समवायनिषेधः 'विधिशब्दस्य मन्त्रत्वे' (१०।४।२३ सू.) इति दाशमिके देवताधिकरणे उक्तः। सु. पृ. १३४२. * शब्देन प्रत्यासन्नस्य यागस्य फलसाधनत्वात् प्राधान्यम्, देवतायाश्च गुणत्वं विज्ञायते। टुपू. ९।१।४।९ पृ. १६५४. * देवतानां अनुयाजीयानां प्रकाशनार्थे चातुर्मास्येषु प्राकृतावाहनमन्त्रस्याविकारेणैव प्रयोगः। भा. १०।४।२५।५०–५९. * देवतानां विग्रहाद्यभावः। संकर्ष. २।४।१.

**देवतानां विधिगतशब्देनैव प्रकाशनं सौर्यादिविकृतौ आवाहनादिनिगमेषु ॥**

**तथोत्तरस्यां ततौ तत्प्रकृतित्वात्। १०।४।१३। २५ ॥**

**भाष्यम्**— अस्ति चरुः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति। सन्ति सूर्यस्याभिधानानि 'सूर्य आदित्यो भास्करः सविता दिवाकरः' इति। तत्र किं व चिषु निगमेषु येनकेनचिच्छब्देन अभिधानं कर्तव्यम्, उत विधिशब्देन सूर्यशब्देनेति। किं प्राप्तम्? अग्निशब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन प्राप्ताः, न सूर्यशब्देनेति। सूर्यशब्दो हि चरौ, नोज्जिल्यादिषु। ते यथार्थं विपरिणमयितव्याः। सूर्यार्थश्च तेषु संकीर्तयितव्यः। स च येनकेनचित् सूर्यवाचिना शब्देन संकीर्त्यते। तस्मादनियमः। ये च प्रकृतौ अग्निशब्दसंयुक्ता निगमास्ते इहोदाहरणम्, नासंयुक्ताः। एवं प्राप्ते, ब्रूमः। तथोत्तरस्यां ततौ तत्प्रकृतित्वादिति। यथा प्रकृतौ, तथोत्तरस्यां ततौ विकृतौ कर्तव्याः। तत्प्रकृतित्वात्तेषाम्, चोदकानुग्रहाय। प्रकृतौ च विधिशब्दाभिप्रायोऽग्निशब्दः प्रयुक्तो नान्यभिधानपरः। इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः। न चायं चरुणा सूर्यशब्दस्य संबन्धः। किं तर्हि? प्रयोगेण। सौर्यं निर्वर्तयेदिति प्रयोगेण संबन्धो न सौर्यश्चरुरिति। कारकविभक्तिर्हि द्वितीया। सा आख्यातेन संबध्यते। तस्मात् तत्रापि सूर्यशब्देन संयुक्ताः कर्तव्या इति।

**टुप्**— ननु नैवेदमधिकरणमारभ्यम्। य एव शब्दश्चोदितः स एव अन्यत्राप्युच्चार्यः। उच्यते। यत्र शब्दो विद्यते, तत्रैव पर्यायशब्दानामप्रसङ्गः। यत्र शब्दो नाम्नायते तत्रार्थः प्रत्याययितव्यः। स च येनकेनचित् प्रत्याय्यते इति पूर्वः पक्षः। सिद्धान्तस्तु— सूर्यशब्दो यागानुमितप्रयोगभावनया संबध्यते। अन्यः शब्दो यदि उच्चार्येत, तथा सति शब्दः प्रयोगे अश्रुत एवोच्चार्येत। एवं प्रकृतावपि।

**सोम**— पूर्ववैषम्येण उत्थानात् संगतिः। **सूत्रार्थस्तु**— यथा प्रकृतौ विधिशब्दनियमः, तथा उत्तरस्यां ततौ विकृतावपि, तत्प्रकृतित्वादिति। १४.

**वि**—'सौर्यादिनिगमे कोऽपि शब्दः स्याद् वैध एव वा।, चरौ सूर्यान्वयादाद्यः, प्रयोगान्वयतोऽन्तिमः ॥' १५.

**भाट्ट**— विकृतौ 'सौर्यं चरुम्' इत्यादिना यागे सूर्यशब्दस्यैव पूर्वाधिकरणवत् विधानेऽपि आवाहनादिमन्त्रेषु अग्न्यादिपदैः तदर्थस्यैव प्रकाशनात् इहापि तस्यैव कर्तव्यत्वात्, तत्र च प्रकृतिप्राप्ताग्निपदे निवृत्ते तत्प्रकाशकसूर्यपदोहवत् तत्पर्यायादित्यादिपदोहेऽपि बाधकाभावः। न च अनेकपदप्राप्तौ उपस्थितत्वात् सूर्यपदस्यैव नियमः इति शङ्क्यम्। तथात्वे प्रैयङ्गवे पुरोडाशे धानासु वा

'व्रीहीणां मेध' इति मन्त्रे यवप्रियङ्ग्वादिपदस्यैव नियमेनोहापत्तेः। न च विधिवाक्ये सूर्यदेवताया भावनायामेव सप्तमनवमाद्यन्यायेन अन्वयात् यागमात्रे तस्याः विधानाभावेन प्रयोगान्वयित्वावगतेः साङ्गप्रधाने तत्प्राप्तौ आवाहनादौ प्राकृततत्पाठस्य इतराङ्गेषु तत्परिसंख्यार्थत्वेऽपि प्रकृतौ आवाहनादिमन्त्रेषु अग्निपदनियमवत् विकृतावपि तेषु सूर्यपदनियमोपपत्तिरिति मूलोक्तं शङ्क्यम्। द्रव्यवद्देवतायाः सत्यपि प्राथमिके भावनाऽन्वये अरुणान्यायेन उत्तरकालिकान्वयस्य यागमात्रे एवाङ्गीकारात् आवाहनादौ तदप्राप्तेः। इतरथा द्रव्यस्यापि साङ्गप्रधानसंबन्धापत्तेः देशकालकर्तृभिन्नानां द्रव्यदेवतादीनां उत्पत्त्यन्वयित्वस्य वक्ष्यमाणत्वाच्च। किञ्च,साङ्गयागभावनायां गुणत्वेन देवताऽन्वयेऽपि आवाहनादेर्देवतासंस्कारार्थत्वान्न आग्नेयम्, सौर्यमित्यादितद्धितेन आवाहनादौ तद्विनियोगः शक्यते कर्तुम्। अतः आवाहनादिमन्त्रस्य लिङ्गादेव देवतासंस्कारार्थत्वप्रतीतेः, विकृतौ च अग्निपदनिवृत्तौ जातायां सूर्यवाचियावत्पदप्राप्तौ न किञ्चित् बाधकम्। इति प्राप्ते, नावाहनादिमन्त्रेषु प्रकृतौ लिङ्गकल्प्या श्रुतिः 'तत्तत्प्रकृतापूर्वसंबन्धिनीं देवतां तत्तदग्न्यादिपदैः प्रकाशयेत्' इति एवंविधा, येन विकृतौ अग्निपदस्य लोपे सूर्यप्रकाशकयावत्पदप्राप्तिर्भवेत्, न त्वेतदस्ति, अनेकश्रुतिकल्पनाऽऽपत्तेः। किन्तु 'प्रकृतापूर्वसंबन्धिनीं देवतां विधिगतशब्देन प्रकाशयेत्' इत्येवंविधा एकैव। अतश्च तदर्थे विकृतावपि विधिगतशब्दप्रयोगः एवावश्यक इति न सूर्यपर्यायाणां प्रयोगः। अत एव द्रव्ये नैवंविधश्रुतिकल्पनासंभवः। तथात्वे 'व्रीहीणां मेध' इत्यादौ प्रकृतावेव यवपदप्रयोगापत्तेः। अपितु प्रकृतापूर्वसाधनीभूतं द्रव्यं व्रीहिपदेन प्रकाशयेत् इत्येवंविधा। ततश्च धानाऽऽदिषु व्रीहिपदे निवृत्ते यवप्रतिपादकसकलपर्यायपदप्राप्तिरविरुद्धा। अस्तु वा प्रकृतावेव नान्तरीयकसिद्धस्यापि अर्थस्य यागाङ्गतया तत्प्रकाशनस्यानुपयोगात् यागाङ्गभूतस्य शब्दस्यैव विनाऽपि लक्षणामावाहनादिमन्त्रगताग्न्यादिपदेन अर्थस्मरणद्वारा स्मरणम्। तथा चैवं लिङ्गकल्प्या श्रुतिः विधिगतशब्देन स्वनिष्ठशक्तिप्रयोज्यशाब्दबोधोपधायकशक्त्याश्रयत्वरूपसंबन्धप्रयोज्यस्मृतिद्वारा अपूर्वसाधनीभूतदेवतात्वाश्रयत्वावच्छिन्नं संस्कुर्यादिति। संभवति हि उक्तविधशाब्दबोधविषयस्य अर्थरूपस्यैकस्य संबन्धिनः शाब्दबोधात्मकेन दर्शनेन तादृशबोधोपधायकशक्त्याश्रयत्वसंबन्धेन अपरसंबन्धिनः शब्दस्य स्मरणम्। एवं च उद्देश्यताऽवच्छेदके लाघवमपि। ततश्च विकृतावपि पर्यायाणामप्रसक्तिरेव। न वा 'अग्नये पावकाय' इत्यादिविकृतौ शब्दद्वयस्य आवाहनादिमन्त्रेषु अप्रयोगप्रसङ्गः। अर्थस्यैव उद्देश्यतामङ्गीकृत्य प्रकाशकत्वपक्षे हि तस्य एकेनैव स्मरणसिद्धेः इतरवैयर्थ्यमित्यपि शङ्क्येत। १४.

मण्डन—'सौर्ये सूर्यपदं वदेत्।' १६.

शंकर—'विकृतावपि तत् तथा।' १६. तत् देवतापदं तथा विधिगतमेव।

* देवतानां सवनीयपुरोडाशीयानामप्युत्कर्षः—आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेणोत्कृष्यमाणे सूक्तवाके। भाट्ट. ११।३।१५.

## ⌛ देवताऽग्निशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न ग्राह्यः॥

**न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात्। ६।३।५।१८॥**

**भाष्यम्**— देवताः 'आग्नेयोऽष्टाकपालः' इत्येवमाद्याः। अग्निः 'यदाहवनीये जुहुति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। शब्दः मन्त्रः 'बर्हिर्देवसदनं दामि' इत्येवमादिः। क्रिया: 'समिधो यजति, तनूनपातं यजति' इत्येवमाद्याः। तत्र संदेहः देवताऽग्निशब्दक्रियाणां अपचारे प्रतिनिधिः उपादेयः, उत नेति। किं प्राप्तम्? पूर्वाधिकरणन्यायेन प्रतिनिधाय अन्यत् प्रयोगः कर्तव्यः इति। एवं प्राप्ते, ब्रूमः। न देवताऽग्निशब्दक्रियाणां अपचारे प्रतिनिधिना भवितव्यमिति। कुतः? अन्यार्थसंयोगात्। प्रतिनिधीयमानं अन्यदेतेभ्यः तेषामर्थं (बिबलकरीयपाठोऽयम्, आनन्दाश्रमीये तु अन्यच्च तेषाम् इति पाठः) न शक्नुयात् कर्तुम्। कश्च तेषामर्थः? देवता तावत् उद्देशेन अर्थं साधयति। अग्निमुद्दिश्य अष्टाकपालः पौर्णमास्याममावास्यायां च त्यज्यते। यच्च अन्येषु हविःषु विहितम्, न ततो दर्शपूर्णमासौ भवतः। तत्र अन्या उद्दिश्यमाना न

श्रुताया उद्देश्याया अर्थं कुर्यात् । नहि अन्यस्यामुद्दिश्यमानायां दर्शपूर्णमासौ भवतः । तस्मात् न देवता प्रतिनिधीयते ।

तथा 'यदाहवनीये जुह्वति' इत्याहवनीयापचारे नान्योऽग्निः प्रतिनिधातव्यः, अन्यत् वा द्रव्यमिति । कुतः? अन्यार्थसंयोगात् । प्रतिनिधीयमानं आहवनीयकार्ये न वर्तते । कथम्? अदृष्टं आहवनीयस्य कार्यम् । आहवनीयस्य उपरि त्यज्यमाने यत् भवति, न तत् अन्यस्योपरि । नहि यजतिशब्देन सामर्थ्यात् तत् गृह्यते, यस्योपरि त्यज्यते । नहि उपरि त्यज्यमानस्य देशः किञ्चिदुपकरोति इति । तस्मात् नाग्नेः प्रतिनिधिः ।

तथा मन्त्रापचारे नान्यो मन्त्रः प्रतिनिधीयते । कुतः? अन्यार्थसंयोगात् । मन्त्रस्य हि एतत् प्रयोजनम्, यत् स्मारयति क्रियां साधनं वा । असति स्मरणे न क्रिया संवर्तेत । तत् अपचरिते मन्त्रे यदि तस्यार्थे अन्यं शब्दमुच्चारयति ( पूरयितुम् ), पूर्वप्रतीतेऽर्थे ( पूर्वं इत्यानन्दाश्रमीये ) शब्दमुच्चारयेत्, न शब्देनार्थं प्रतीयात् । अथ प्रतीतमपि पुनः प्रतिनिधिशब्दोच्चारणेन प्रतीयात् शब्दात् प्रतीतिं कुर्यात् । ( अत्र शब्दात् इत्यादि, प्रतीयात् इत्यस्यैव व्याख्या स्यात् । सा च बहिर्लिखिता सती कायस्थेन ग्रन्थे एव लिखितेति प्रतीमः) एवं च प्रतिनिधिशब्दोच्चारणानुरोधः अनर्थकः स्यात् । नहि 'शब्देन प्रत्याययितव्यम्' इति किञ्चित् प्रमाणमस्ति । यदस्ति, तत् विशेषेणैव 'अनेन शब्देन बर्हिरादिना' इत्येवम् । तदभावे शब्दान्तरानुरोधः अनर्थकः स्यात् । तस्मात् न शब्दस्य प्रतिनिधिः ।

क्रियाऽपचारे न क्रियाऽन्तरं प्रतिनिदध्यात् । अन्यार्थसंयोगात् । समिद्यजिमन्तौ दर्शपूर्णमासौ कर्तव्यौ । तौ अन्यस्यां क्रियायां ( विवलकरीये पाठः ) क्रियमाणायां न तद्वन्तौ भवतः । तस्मात् क्रियायां न प्रतिनिधिरिति ।

**टुप्**— ( सिद्धान्तमाह– ) अर्थो वाचनिकया श्रुत्या उच्यमानो देवतात्वं प्रतिपद्यते नान्यथा । तद्वाचकाभावे च कथमर्थो देवता स्यात् ( द्वाराभावात् ) । नीवारैस्तण्डुलनिर्वृत्तिः प्रत्यक्षा, न तु देवतात्वम् ( प्रत्यक्षम् ) । किञ्च सदृशं प्रतिनिधातव्यम् । देवताऽभावश्च शब्दनाशे । अतो देवताशब्दं स्मृत्वा उत्तरकालं ( तत्सदृशशब्दस्य– ) स्याद्युपादानम् । तत्तु मुख्येनैव सिद्धम् ( तस्मात् न प्रतिनिधिः ) । मन्त्रेऽपि एष एव प्रकारः ( टुप्-पुस्तकेषु तु प्रसङ्गः इति पाठः । प्रकारः इति रत्नपाठस्तु युक्तः ) । इयांस्तु विशेषः, ( देवतातो मन्त्रस्य– ) अर्थेन स्मृतेन–न मुख्येन ( मन्त्रेण ) न ( अपि तत्– ) सदृशेन ( शब्दान्तरेण ) – प्रयोजनमस्ति । न च शब्देन स्मरणं कर्तव्यमिति ( वचनमस्ति ) । किं तर्हि ( मन्त्रविशेष– ) आम्नानसामर्थ्यात् उपद्रष्ट्रादिनिवृत्तिः मन्त्रनियमात् । तदभावात् ( तस्य नियतस्य मन्त्रस्याभावात् ) उपद्रष्ट्रादि केन वार्यते ( तेन अस्ति शब्दान्तरं प्रतिनिधिः । अग्नीनां नास्ति प्रतिनिधिः इत्याह– ) आहवनीयो यागहोमाभ्यामनाक्षिप्तः अदृष्टोपकारित्वात् ( दृष्टोपकारित्वाभावात् । आहवनीये जुहोति इति– ) वचनात् ( अदृष्टार्थतया ) विधीयते, ( अतः ) तयोः (यागहोमयोः आहवनीयस्य– ) अभावे नास्ति आक्षेपः । आक्षेपाभावाच्च न प्रतिनिधिः । ( क्रियायामपि दर्शयति– ) यत् प्रयाजादिभिः ( अदृष्टम् ) क्रियते, तत् अन्या क्रिया करिष्यति इति नास्ति प्रमाणम् । हन्त्यादीनां तु दृष्टार्थत्वात् अस्ति ( प्रतिनिधिः । सूत्रोक्तं हेतुमनुसंधत्ते– ) अन्यार्थसंयोगात् इति किमुक्तं भवति? प्रतिनिधिकारणासंयोगात् इति यावत् । ( नायमर्थशब्दः प्रयोजनवाची किन्तु वस्तुपर्यायः ) ।

## देवतायां च तदर्थत्वात् । १९ ॥

**भाष्यम्**— देवतायामपरो विशेषो येन न प्रतिनिधीयते । देवता नाम यदर्थे किंचिच्चोद्यते सा । अन्या तस्याः स्थाने प्रतिनिधीयमाना न देवता स्यात् । चोदिता हि देवता भवति, नाचोदिता । संबन्धिशब्दश्चैषः । या यदर्थं चोद्यते, सा तस्यैव देवता, नान्यस्य । देवतेति संबन्धिशब्दो न जातिशब्दः । तस्मादपि न देवतायाः प्रतिनिधिरिति ।

**सोम**—सूत्रार्थस्तु– देवतादिकं न प्रतिनिधेयम्, अन्यार्थसंयोगात् प्रतिनिधिन्यायात् न्यायान्तरसंयोगात् इति ।

वि — 'देवाऽग्निमन्त्रोक्षणादावस्ति प्रतिनिधिर्न वा।, पुरेवास्तीह, यन्मुख्ये कार्ये तन्नेति नास्त्यसौ॥'

भाट्ट— एवं सर्वत्र प्रतिनिधौ प्रसक्ते देवतायां स न भवति। यदि हि अर्थमात्रस्यैव देवतात्वं त्यागकालीनोच्चारणकर्मभूतशब्दप्रतिपाद्यत्वरूपं भवेत्, तदा तस्य शब्दविशेषापेक्षायां प्रतिपादकत्वेन विधिगतस्य उपस्थितस्य शब्दस्य नियमेऽपि रोगादिना तत्पदोच्चारणासंभवे तादृशार्थस्य यागाङ्गत्वानपायात् तद्बोधकश्रौतलाक्षणिकशब्दान्तरप्रसक्त्या भवेदपि प्रतिनिधिः। यदा तु दाशमिकाधिकरणवक्ष्यमाणरीत्या विधिगतशब्दविशिष्टस्यार्थस्य तादृशशब्दमात्रस्य वा देवतात्वम्, तदा कः प्रसङ्गः शब्दान्तरस्य। नहि हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतं अखण्डोपाधिरूपं वृद्धव्यवहारसिद्धं देवतात्वं शब्दान्तरे समस्ति। यदि तु अर्थस्यापि देवतात्वं कथञ्चिदङ्गीक्रियेत, ततस्तत्रापि तादृशविधिगतशब्दप्रतिपाद्यत्वसमनियतमेव तदङ्गीकृत्य प्रतिनिध्यभावः समर्थनीयः। अत एव यागस्य देवतात्वाक्षेपकत्वेऽपि विधेयत्वघटिततद्विषये आक्षेपकत्वासंभवात् देवताविधिरपूर्वविधिरेव। तदसंभवे च यागपदार्थस्य लोप एव। यदा तु देवताऽपचारे प्रजापतिरिति वचनं तदभावे विधिविधया प्रामाणिकम्, तदा तथैवानुष्ठानम्। एवमग्नेरपि होमाधिकरणस्य न प्रतिनिधिः। तत्राहवनीयादेस्तावत् आधानविधिसिद्धत्वादेव क्रतुप्रयोगविध्यविषयत्वात् तेषामधिकारिविशेषणत्वप्रतीतेः यथाशक्तिन्यायाविषयत्वादेव न प्रतिनिध्याशङ्का। यत्र तु लौकिकाग्नेरेव वाचनिकमधिकरणत्वं यत्र वा पदादेः, तत्रापि सत्यपि तस्य प्रयोगविधिविषयत्वे अदृष्टार्थत्वात् न तत्प्रतिनिधिः। नहि पूर्वदेशविभागानुकूलव्यापाररूपप्रक्षेपमात्ररूपस्य होमस्य आधारापेक्षाऽस्ति। अत एव तद्विधिरपि अपूर्वविधिरेव। पदादिना आहवनीयादिबाधस्तु पतनप्रतिबन्धकत्वरूपाधिकरणताया एवं अदृष्टोत्पादकत्वात् एकेन तत्सिद्धेः समुच्चयायोगादनुसंधेयः। अतश्च तत्रापि तत्प्रतिनिधेरदृष्टोत्पादकत्वे प्रमाणाभावान्न सः। क्वचित्तु वाचनिको ब्राह्मणपाण्यादिरभावे विधिरेव।

एवमर्थप्रकाशनार्थेष्वपि मन्त्रेषु न प्रतिनिधिः शब्दान्तरस्य मन्त्रान्तरस्य वा। स हि उपायान्तरेण ध्यानादिना अर्थे अनवगते तत्प्रतिपादकत्वज्ञानाभावादेव अनाशङ्क्यः। अवगते तु तस्मिन्न स्मारकानपेक्षत्वादेव न तदुपादानम्। न चैवं यत्र स्वत एवार्थः स्मृतः, तत्र विहितमन्त्रपाठानापत्तिः, तत्र नियमादृष्टसिद्ध्यर्थे मन्त्रजन्यस्मृतेरेव अभ्युदयकारित्वकल्पनेन मन्त्रपाठावश्यकत्वात्। प्रतिनिधेस्तु कर्मचोदनाऽऽक्षिप्तस्य नियमादृष्टजनकत्वे प्रमाणाभावात् न पाठ इति वैषम्यम्।

एवमन्यस्मात् तददृष्टोत्पत्तौ प्रमाणाभावेन अदृष्टार्थप्रयाजादिक्रियाया अपि न प्रतिनिधिः। दृष्टार्थावघातादिक्रियायास्तु स समस्त्येव।

यत्तु अत्र कैश्चिददृष्टार्थस्य षोडशिग्रहणाभावादेरपि न प्रतिनिधिः। तेन षोडश्यभावयुक्तक्रतुप्रयोगसंकल्पे कृते यदि दैवादनङ्गमपि तत्र षोडशी कृतः, तदा षोडश्यभावस्याभावे तददृष्टार्थे नाभावान्तरं प्रतिनिधेयमित्युक्तम्। तन्न 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन षोडशिग्रहणाभावेऽपि इतराङ्गमात्रादेव क्रतूपकारसिद्धिरित्यवगमात् षोडशिग्रहणाभावस्य अदृष्टोत्पादकत्वे प्रमाणाभावात्। अत एव तत्र षोडशिग्रहणे वृथाचेष्टाकृतप्रायश्चित्तमात्रम्।

मण्डन—'न मन्त्रादौ प्रतिनिधिः।'

शंकर—'न देवताऽऽदेः स मतः।' स प्रतिनिधिः।

■ **देवताऽधिकरणम्।** देवतानयः। धर्मा न देवताप्रयुक्ताः। विग्रहादिमत्यो देवता न सन्ति॥

### देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्। ९।१।४।६॥

भाष्यम्— नैतदस्ति, अग्न्यादयः अप्रयोजका इति। सर्वा देवताः सर्वेषां धर्माणां प्रयोजिका भवितुमर्हन्ति। कुतः? भोजनस्य तदर्थत्वात्। भोजनं हीदं देवतायाः, यागो नाम। भोज्यं द्रव्यं देवतायै प्रदीयते, सा भोक्ष्यते इति। देवतासंप्रदानको ह्ययं यागः श्रूयते। संप्रदानं च नाम कर्मणोऽपि ईप्सिततमादभिप्रेततरम्। तस्माच्च गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्मणी। अपिच यागो नाम देवतापूजा। पूजा च पूजनीयं प्रति गुणभूता

लोके दृश्यते । तदेतत् अतिथिवत् द्रष्टव्यम् । यथा यावत्किंचित् अतिथेः परिचरणम्, सर्वं तदतिथिप्रयुक्तम् । एवमिदमपीति ।

आह । नन्वेवं ब्रुवता विग्रहवती देवता, भुङ्क्ते चेत्यभ्युपगतं भवति । उच्यते । बाढम् । विग्रहवती देवता, भुङ्क्ते च । कुतः ? स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति, विग्रहवती देवतेति । स्मृतिश्च नः प्रमाणम् । तथा, विग्रहवतीं देवतामुपचरन्ति । यमं दण्डहस्तमालिखन्ति, कथयन्ति च । तथा, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । उपचारादपि स्मृतेर्दृढिमानं कल्पयामः । तथा अन्यार्थवचनम्, विग्रहवतीं देवतां दर्शयति । 'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्' इति ( ऋसं. १०।४७।१ ) पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति । तथा 'इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित् ते' इति ( ऋसं. ३।३०।५ ) । काशिः मुष्टिः । सोऽपि पुरुषविग्रहस्यैवोपपद्यते । तथा 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते ॥' इति ( ऋसं. ८।१७।८ ) । ग्रीवा उदरं बाहू इति पुरुषविग्रहदर्शनं भवति । तस्मात् विग्रहवती देवतेति भुङ्क्ते च । कथमवगम्यते ? स्मृतेः उपचारात् अन्यार्थदर्शनाच्च । एवं स्मरन्ति 'भुङ्क्ते देवता' इति । तथा चैनां भुञ्जानामिव उपचरन्ति, यदस्यै विविधानुपचारान् उपहरन्ति । तथाच अन्यार्थदर्शनं भुञ्जानां देवतां गमयति । 'अद्धीन्द्र पिब च प्रस्थितस्य' इति तथाच 'विश्वा सनानि जठरेषु धत्ते' इति ( ऋसं. १।९५।१० ) । 'एकया प्रतिधा पिबत् साकं सरांसि त्रिंशतम्' इति ( ऋसं. ८।७७।४ ) । आह, न देवता भुङ्क्ते । यदि च भुञ्जीत देवतायै हविः प्रत्तं क्षीयेत । उच्यते, अन्नरसभोजिनी देवता मधुकरीवत् अवगम्यते । कथम् ? देवतायै हविः प्रत्तं नीरसं भवति । तस्मात् अन्नरसं भुङ्क्ते देवतेति गम्यते ।

टुप्— तत्र यागो देवताऽऽराधनार्थं इतिमन्यमानः पूर्वपक्षं करोति । न भाव्यमानार्थो यागः, किन्तु देवताऽऽराधनार्थः । कुतः ? तद्धितशब्दात् ( आग्नेयः इति अग्निर्देवता अस्येति ) । अग्निर्देवता अस्यशब्दस्य विशेषणम्, अस्यशब्दश्च द्रव्याभिधायी इतरत् तद्विशेषणम् । तत् ( द्रव्यम् ) यदि अग्न्युद्देशेन प्रदीयते, एवं अग्निशब्दो विशेषणं ( भवति ) नान्यथा । यदा च द्रव्यं ( अग्न्युद्देशेन ) प्रदीयते, तदा अग्निः संप्रदानं भवति । संप्रदानं च कर्मणोऽपि ( ईप्सिततमात् ) प्रधानतरम् । (कथम् ?) यजतिक्रियया द्रव्यं व्याप्यते, द्रव्येण च संप्रदानम् । तस्मात् अग्न्यर्थो यागः । यथा उपाध्यायाय गां ददाति इति । ( उपाध्यायार्थं दानमिति ) । अपिच देवपूजायां यजिर्वर्तते इति स्मरन्ति ( शाब्दाः 'यज देवपूजासंगतिकरणदानेषु' इति ) । तस्मात् 'यजेत स्वर्गकामः' इति देवतां यागेन आराधयेत्, ततः ( देवतायाः सकाशात् ) स्वर्गो भविष्यति इति ।

आर्थपत्याच्च । ७ ॥

भाष्यम्— यदि कस्यचिदर्थस्य ईशाना देवता, उपचर्यमाणा च प्रसीदेत्, ततः तदाराधनार्थं इयं देवतापूजा अभिनिर्वर्त्येत । न चैतत् उभयमपि अस्ति इति । तदुच्यते अर्थपतिर्देवतेति । कथमवगम्यते ? स्मृतेः उपचारात् अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति 'अर्थानामीष्टे देवता' इति । तथा देवग्रामो देवक्षेत्रं इत्युपचारः तामेव स्मृतिं द्रढयति । तथा अन्यार्थदर्शनं ईशानां देवतां दर्शयति 'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥' इति ( ऋसं. १०।८९।१० ) । तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः' इति । तथा स्मृत्युपचाराभ्यां प्रसीदति इत्यवगच्छामः । एवं हि स्मरन्ति 'प्रसीदति देवता' इति । तथा उपचरन्ति 'प्रसन्नोऽस्य पशुपतिः पुत्रोऽस्य जातः' 'प्रसन्नोऽस्य वैश्रवणः धनमनेन लब्धम्' इति । तथा अन्यार्थदर्शनं भवति 'आहुतिभिरेव हुतादो देवान् प्रीणाति' इति, 'तस्मै प्रीता इषमूर्जं नियच्छन्ति' इति ।

ततश्च तेन संबन्धः । ८ ॥

भाष्यम्— ततो देवतायाः तेन फलेन संबन्धः परिचरितुर्भवति । यो देवतां इज्यया परिचरति, तं सा फलेन संबध्नाति । कथमेतदवगम्यते ? स्मृत्युपचाराभ्याम् ।

स्मरन्ति हि 'देवता यष्टुः फलं ददाति' इति । तामेव उपचारेण स्मृतिं द्रढयति 'पशुपतिरनेन उपचरितः, पुत्रोऽनेन लब्धः' इति । तथा अन्यार्थदर्शनं इममेवार्थं दर्शयति 'स इद्धेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥' इति (तैसं. २।३।१४) । तथा 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति । तस्मात् हविर्दानेन गुणवचनैश्च देवता आराध्यते । सा प्रीता सती फलं प्रयच्छति । येन कर्मणा अग्निराराधितो यस्य फलस्य ईष्टे, तत् कर्त्रे प्रयच्छति । न तत् सूर्यः प्रदातुमर्हति । वचनात् एतदवगम्यते 'कः किं प्रयच्छति' इति । यथा अग्नौ वचनम्, न तत् सूर्ये ।

**अपिवा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद्, गुणत्वे देवताश्रुतिः । ९ ॥**

**भाष्यम्**— अपिवेति पक्षो व्यावर्त्यते । न च एतदस्ति यदुक्तम् 'देवता प्रयोजिका' इति । यज्ञकर्म प्रधानं स्यात् । यजतेर्जातमपूर्वम् । कुतः ? शब्दपूर्वत्वात् । यद्धि फलं ददाति, तत् प्रयोजकम् । 'इदं फलं ददाति' इत्येतत् ज्ञानं शब्दपूर्वकम्, न प्रत्यक्षादिभिरवगम्यते । शब्दश्च यजतिवाच्यात् फलमाह, न देवतायाः । कथमवगम्यते ? दर्शपूर्णमासयोः करणत्वेन निर्देशः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः । ननु द्रव्यदेवताक्रियं यजत्यर्थः । सत्यमेवम्, किन्तु गुणत्वे देवताश्रुतिः । द्रव्यदेवतं हि भूतम्, भावयितव्यो यजत्यर्थः । भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते । तस्मात् न देवता प्रयोजिका ।

अथ यदुक्तम्, कर्मणः ईप्सितादभिप्रेततरमिति । नास्याभिप्रेततां अपह्नुमहे । तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवताऽर्थस्य वाक्यात् अभिप्रेतता अवगम्यते । फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य । तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः । तत्र यद्यपि देवताऽर्थता यागस्य गम्यते, फलार्थताऽपि तेन न प्रतिषिध्यते । फलं च पुरुषार्थः । पुरुषार्था च नः प्रवृत्तिः । न चासौ देवतायाः । तस्मान्न देवताप्रयुक्ताः प्रवर्तिष्यामहे । या तु संप्रदानस्य अभिप्रेतता, सा फलवतो यजेः साधनत्वे सति उपपद्यते ।

यच्च 'यजिर्देवतापूजा, सा पूज्यमानप्रधानालोके लक्ष्यते' इति । न लोकवत् इह भवितव्यम् । इह पूज्यमानं पूजाप्रधानम् । यद्धि फलवत्, तत् प्रयोजकम् । तस्मात् यज्ञकर्म प्रयोजकम् । अपि च एतस्मिन् पक्षे विग्रहवती देवता, भुङ्क्ते च इत्यध्यवसनीयं भवति । नहि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा संभवतीति ।

यच्चोक्तं स्मृत्युपचारान्यार्थदर्शनैः विग्रहवती भुङ्क्ते चेति, तन्न । स्मृतेर्मन्त्रार्थवादमूलकत्वात् । मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यते इति प्रत्यक्षमवगम्यते । ते च मन्त्रार्थवादाः नैवंपराः इत्येतत् वक्ष्यामः । आह यदि नैवंपराः, न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानमिति । उच्यते । ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषां तत् स्मृतिमूलम् । ये पुनर्निपुणतः पश्यन्ति, तेषां तत् बाधितमपि च कस्यचित् स्मृतिमूलं भवति । तस्मात् तत एव स्मृतिः । उपचारोऽपि स्मृतिमूल एव ।

यत्तु अन्यार्थदर्शनमुक्तम् 'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्' इति नैतत् एवंपरम् 'इन्द्रस्य हस्तो विद्यते' इति । यस्तस्य दक्षिणो हस्तः, तं वयं गृहीतवन्तः इति । तस्मात् वाक्यात् इन्द्रस्य हस्तसत्ता न प्रतीयते । आह, यदि त्वसौ नास्ति, 'वयं ते हस्तं गृहीतवन्तः' इत्येवं नावकल्पते इति हस्तसत्ता अध्यवसीयते 'अस्त्यसौ हस्तः, वयं यं गृहीतवन्तः' इति । तन्नोपपद्यते । यद्यपि अस्य हस्तो भवेत्, तथापि न 'तं उपगृहीतवन्तः' इति प्रत्यक्षमेतत् । तथापि एतन्नावकल्पते एव । तत्र एतत् असंबद्धं वा कल्पयितव्यं स्तुतिर्वा । तच्च मत्पक्षेऽपि तुल्यम् । अथैवमुच्यते, तस्य एतत् वचनम्, यो गृहीतवान् तस्य हस्तमिति । उच्यते । नैतदध्यवसेयम्, आदिमत्ता दोषो वेदस्य प्रसज्येत । न च गृहीतवानासीत् इत्युच्यते, प्रमाणाभावात् । एतस्मादेव वचनात् अर्थात् कल्प्यते हस्तग्रहीता इति चेत्, तन्न । अयथार्थस्यापि उच्चारणं संभवत्येव यतः । यथा 'दश दाडिमानि, षडपूपाः' इति ।

यस्यापि चैष पक्षो 'विग्रहवानिन्द्रः' इति, तस्यापि इन्द्रशब्देन आमन्त्रणं संबोधनार्थम्, संबोधनमनुवचनाय। तत्र संबुद्ध इत्यवगते अनुवचनं न्याय्यम्। न चासौ केनचित् प्रकारेण संबुद्ध इत्यवगम्यते। अनवगते संबोधनं व्यर्थम्। वचनप्रामाण्यात् संबुध्यते इत्येवं गम्यते इति चेत्, उक्तम् 'अदृष्टकल्पनायां दृष्टादिकल्पनाऽनुपपत्तिः' इति। न चासौ संबुद्धः इत्यवधार्यते, प्रमाणाभावात्। तस्मात् संबोधनवचनं न संबोधनाय, निर्देशार्थमेव। अविग्रहपक्षेऽपि तत् निर्देशार्थमेव भविष्यति। तत्र आमन्त्रितविभक्तिवचनं स्तुतये। एवमिदं देवताऽऽख्यं साधनं साधयितृतमम्, यत् चेतनादिवत् संबुध्य (टिप्पणीपाठः) साधयतीति चेतनवदिव उपचर्यमाणः संबुद्धिशब्देन आमन्त्र्यते। तथा संबोधनशब्देन निर्दिश्य उच्यते 'गृहीतवन्तो वयं तव हस्तम्' त्वदाश्रया वयमित्यर्थः। 'अस्माभिः इन्द्रकर्म कर्तव्यम्' इत्येतदनेन स्मार्यते। तथा इमे द्यावापृथिव्यौ दूरे अपारे यत् संगृह्णासि मघवन् अहो ते पूजितो मुष्टिः इति सन्तमिव मुष्टिं स्तुत्यर्थेन वदति। तस्यापि भावे न प्रमाणमस्ति। नेदं वचनम्, इत् महान् काशिरस्तीति। किं तर्हि? यस्तव काशिः, स महानिति। अन्यार्थः 'तव काशिरस्ति' इति, अन्यः 'तव काशिर्महान्' इति। सता हि स्तुतिरुपपद्यते इति चेत्, नैतत्। नियोगतो यस्यापि पौरुषविधिकैः अङ्गैः नास्ति संयोगः, पौरुषविधिकैरङ्गैः तस्यापि स्तुतिर्भवति यथा 'एते वदन्ति (ग्रावाणः) शतवत् सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत॥' इति (१०।९४।२) तथा 'सुखं रथं युयुजे सिन्धुरश्विनम्' इति (ऋसं. १०।७५।९)। तस्मात् न स्तुतिवचनादर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः।

तथा 'तुविग्रीव इन्द्रः' इति नैतत् युक्तं भवति ग्रीवावान् इन्द्र इति। किं तर्हि? या अस्य ग्रीवा, सा महती। ग्रीवासत्त्वे नास्ति प्रमाणम्। न च ग्रीवास्तुतिरर्थापत्तिः, अपुरुषविधत्वेऽपि स्तुत्युपपत्तेः। अपिच 'इन्द्रो वृत्राणि जिघ्नते' इत्येताभ्यां पदाभ्यां इन्द्रशब्दः संबद्धो न शक्नोति तुविग्रीवादिभिः संबन्धं यातुम्। द्विरुच्चारणमस्य प्रसज्यते 'तुविग्रीवावान् इन्द्रो वेदितव्यः, वृत्राणि च इन्द्रो हन्ति' इति। तथाहि सति भिद्येत, अभिन्नं च वाक्यमुपलभ्यते। तदेवमवकल्पते, यदि तुविग्रीवादयः अस्य नोपदिश्यन्ते इति। स्तुत्यर्थं संकीर्त्यते तुविग्रीवादिः। अन्धसो मदे, ईदृशो वृत्राणि हन्ति इति एषा तु वचनव्यक्तिः। वृत्रवधोपदेशपरमिदं वचनमिति।

यदपि वचनम्, 'बाहू ते इन्द्र रोमशौ'। 'अक्षी ते इन्द्र पिङ्गले' इति। तदपि बाह्वोः रोमशत्वं अक्ष्णोश्च पैङ्गल्यमाह, न बाहुसत्तामक्षिसत्तां च। यदपि अक्षिसत्तां वदतीति गम्यते 'चक्षुष्मते शृण्वते ते ब्रवीमि' इति, तदपि न चक्षुःसंबन्धार्थम्, 'चक्षुष्मते ब्रवीमि' इति वचनसंबन्धार्थम्। तत् सतीमिव चक्षुष्मत्तां स्तुत्यर्थमुच्चारयति। कुत एतदवगम्यते? चतुर्थीनिर्देशात्। यदि प्रातिपदिकार्थः अध्यवसीयते, तथा वाक्यं भिद्येत। चक्षुष्मान् इत्येवं चोद्दिश्येत, 'चक्षुष्मते ते ब्रवीमि' इति च। तस्मात् न किञ्चित् अन्यार्थदर्शनं पुरुषविधतां देवतायामिदं ख्यापयति इति।

न चेदं भोजनम्। नहि देवता भुङ्क्ते। तस्मात् 'भोजनस्य तदर्थत्वात्' इति तत् असत् वचनम्। यदपि स्मृत्युपचारान्यार्थदर्शनैः भुङ्क्ते इति, तत् अविग्रहत्वेन प्रत्युक्तम्। अपिच भुञ्जानायै देवतायै प्रत्तं हविः क्षीयेत। न च मधुकरीवत् अन्नरसभोजिन्यो देवता इति प्रमाणमस्ति। मधुकरीषु प्रत्यक्षम्। न च तद्वत् देवतायाम्। तस्मात् न भुङ्क्ते देवतेति। यदुक्तं देवतायै हविः प्रत्तं नीरसं भवतीति, नैष दोषः। वातोपहतं नीरसं भवतीति शीतीभूतं च।

न चासौ कस्यचिदर्थस्य ईष्टे। अनीशा कथं दास्यतीति। यदुक्तम् 'स्मृत्युपचारान्यार्थदर्शनैः ईशाना देवतेति अवगम्यते इति, तन्न, स्मृतेः मन्त्रार्थवादमूलत्वात् इत्युक्तम्। उपचारोऽपि देवग्रामो देवक्षेत्रमिति, उपचारमात्रम्। यो यदभिप्रेतं विनियोक्तुमर्हति तत् तस्य स्वम्। न च ग्रामं क्षेत्रं वा यथाऽभिप्रायं विनियुङ्क्ते देवता। तस्मात् न संप्रयच्छति इति। देवपरिचारकाणां तु ततो भृतिर्भवति, देवतामुद्दिश्य यत् त्यक्तम्। यदुक्तम्, अन्यार्थदर्शनं ईशानां देवतां ख्यापयति 'इन्द्रो दिव इन्द्र

ईशे ' इत्येवमादीनि, तत् प्रत्यक्षां अनीशानां देवतामुपलभ्य अध्यवस्यामः, भाक्त एष शब्दः इति। तत्राह वचनप्रामाण्यादेव अस्य ईशानता अवगम्यते, यदेव लोका अर्थान् विनियुञ्जते, तत् देवताऽभिप्रायादेव इति अध्यवस्याम इति। तन्न। प्रत्यक्षात् प्रमाणात् देवतापरिचारकाणामभिप्रायः इत्यवगम्यते। स न शक्यो बाधितुम्। येऽपि देवतामीशानां वर्णयन्ति, तेऽपि नापह्नुवते परिचारकाणामभिप्रायम्। किं चाहुः? तथा देवता करोति, यथा परिचारकाणामभिप्रायो भवतीति। न च स ईशानो भवति, यः पराभिप्रायमनुरुध्यते यस्य न स्वाभिप्रायात् विनियोगो भवति। अपिच न चैतद्वचनम्, वर्तमानकालोपदेशत्वात्। प्रत्यक्षविरोधात् स्तुतिवादः अवधार्यते। स्तुतिवादे च संभवति न वचनप्रामाण्यात् ईशिष्यते इति गम्यते।

न च देवता फलेन संबध्नाति, या तदर्थं परिचर्येत। यदुक्तं स्मृत्युपचारान्यार्थदर्शनैः ददाति प्रसीदति चेति, तत्र स्मृत्युपचारयोरुक्तम्। यत् अन्यार्थदर्शनम् 'तस्मै प्रीता इषमूर्जं प्रयच्छति' इति, तन्न। अन्यस्य विधेः आम्नानात् 'दक्षिणतः संपरिहर्तव्या इत्याह' इति। 'तथा तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति। अत्र ऐन्द्रस्य हविषो विधानम्। तस्मात् देवता न प्रयोजिका इति।

टुप्—( अपिवा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः ॥ ) 'यजेत स्वर्गकामः' इति ( अत्र ) यजेत इति उत्तरार्धात् ( भावनावचनात् ) तिस्रः आकाङ्क्षा जायन्ते। तत्र प्रथमं तावत् भाव्यमाकाङ्क्षते 'भावयेत् किम्' इति। तत् फलपदेन निराकाङ्क्षीक्रियते। तत् ( फलम् ) भाव्यमानं केन ( भाव्यते ) इति द्वितीयामाकाङ्क्षां पूर्वार्धो निराकाङ्क्षीकरोति। 'कथम्' इति तृतीयामाकाङ्क्षां अग्न्यन्वाधानादीनि निराकाङ्क्षीकुर्वन्ति, संनिधानात्। तदेवं अस्मात् वाक्यात् यागात् फलं श्रूयते, न देवतायाः। ननु देवतासंप्रदानम् ( प्रधानम् ) इत्युक्तम्। उच्यते। यागः फलाय ( फले इति आनन्दाश्रमीये रत्ने च ) निर्वृत्तिमपेक्षते। सा च द्रव्यदेवतामन्तरेण न संभवति। अपेक्षमाणं च द्रव्यदेवतं कारकांशेनैव अपेक्ष्यते, न भाव्यांशेन। तत्र द्रव्यं तृतीयया कारकं भवति, देवता ( च ) तद्धितेन चतुर्थ्या वा। तच्च देवताकारकं यागं प्रति प्राधान्यं यदि न प्रतिपद्येत, तथा सति यागो नैव निर्वर्तेत। यागनिर्वृत्त्यभावाच्च कारकमेव न स्यात्। यदि च यागः तस्य गुणतां न प्रतिपद्येत आत्मानमेव न लभेत। तस्मात् यागेन नान्तरीयको गुणभावः प्रतिपत्तव्यः। देवताकारकेणापि नान्तरीयकः प्रधानभावः। न च नान्तरीयको व्यापारो गुणभावे प्रधानभावे वा कारणम्, अचोदितत्वात्। यागेन हि फले चोदितः सन् अहं नान्यथा फलं साधयामीत्येवं नान्तरीयकव्यापारेण देवतां प्रति गुणभूतेन भवितव्यम्।

तस्मात् सर्वत्रांशद्वयमस्ति। तत्र किं विवक्षितं किमविवक्षितमिति विज्ञेयम्। तत्र लोके अर्थकृता विवक्षा भवति। वेदे तु शब्दकृता। शब्देन च प्रत्यासन्नस्य यागस्य फलसाधनत्वात् प्राधान्यम्, देवतायाश्च गुणत्वं विज्ञायते। न चोपकारलक्षणं शेषत्वम्। किं तर्हि? चोदनालक्षणं तत् इति स्थितम्।

किं भवति प्रयोजनं चिन्तायाः? यदि देवताऽऽराधनार्थो यागः, ततः पूज्यमाना देवता, यागश्च पूजा। पूजा च लौकिकः पदार्थः। तत्र येन प्रकारेण अग्निः पूज्यते, तेनैव सूर्यः पूज्यते इति क आश्वासः। विपरीतमपि कदाचित् स्यात्। अपि च सूर्यः एकाकी सन् अग्निपूजया तृप्यति, देवताऽन्तरसहितस्तु अग्निः अग्नीषोमपूजया इति नैतत् संभाव्यते। नहि देवदत्तः अत्यन्तमधुरमधुपयःप्रभृतिभिः प्रीयमाणो यज्ञदत्तसाहचर्यात् सौवीरप्रियो भवति। **सिद्धान्ते** भाव्यमानेन धर्माः संबध्यन्ते, तत्र सौर्ये भाव्यमानेनैव धर्मा आकाङ्क्ष्यन्ते। तत्र सादृश्यात् धर्मप्राप्तिर्भवति, अलौकिकत्वात् धर्माणाम्। अथवा यदा देवताऽऽराधनार्थो यागः, तदा यदुक्तम् ( 'विप्रतिपत्तौ हविषा नियम्येत' इत्यत्र– ) द्रव्यदेवताविरोधे द्रव्यसामान्यात् विध्यन्तः इति (– सिद्धान्ते। पूर्वपक्षे तु ) देवताऽऽराधनार्थत्वात् यागस्य देवतासामान्यमेव बलीयः, विप्रकृष्टत्वात् द्रव्यसामान्यस्येति।

**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् । १०॥**

भाष्यम्—यदुक्तं अतिथिवदिति । तत् परिहर्तव्यम् । आतिथ्यं अतिथिप्रयुक्तं स्यात् । आतिथ्ये हि तत्प्रीतिर्विधीयते । अतिथिः परिचरितव्यः । यथा प्रीयते, तथा कर्तव्यमिति । दानं भोजनं वा कार्यमिति । यद्यत् अतिथये रोचते, तत्कर्तव्यम् । यत्तस्मै न रोचते, न तद्बलात् कारयितव्यमिति । इह तु कर्मणि अभावः प्रीतिविधानस्य । तस्मात् विषममतिथिनेति ।

शा— ( पूर्वः पक्षः– ) 'इन्द्रादेः संप्रदानत्वात् कर्मणोऽपि प्रधानता । यागः पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥' एवं प्राप्ते, ब्रूमः 'यागस्यैव पदश्रुत्या फलसाधनतोच्यते । देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः॥ यागश्च साध्यरूपत्वात् साधनत्वेन देवताम् । गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥' तस्मात् अपूर्वप्रयुक्ता धर्माः ।

सोम— प्राधान्येऽपि प्रयोजकता न स्यात् इति पूर्वोक्तापूर्वप्रयोजकत्वमाक्षिप्य समर्थ्यते इति संगतिः । सूत्रार्थस्तु—देवतैव सर्वान् धर्मान् प्रयोजयेत् भोजनस्य यागस्य इदं हविः देवता भोक्ष्यते इति क्रियमाणत्वात् यागस्य भोजनशब्देन निर्देशः । देवताऽर्थत्वात् भोजनस्य भोक्त्रर्थत्वे दृष्टान्तः अतिथिवदिति ।

वि— 'देवः प्रयोजकोऽपूर्वं वा, ऽऽद्योऽस्य फलदत्वतः ।, न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥'

भाट्ट— एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम् । इह तु तदनङ्गीकृत्य देवताप्रसादः एव प्रयोजकोऽस्तु इत्याशङ्क्य प्रसङ्गान्निराक्रियते । तत्र देवतायाः संप्रदानत्वात् तस्य च कर्मकारकापेक्षयाऽपि अभिप्रेयमाणत्वेन प्राधान्यात् यागस्य पूजारूपस्य तत्संस्कारकत्वावगतेः, तस्याश्चोपयोगापेक्षायां 'स एवैनं भूतिं गमयति' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादानुसारात् प्रसन्नायाः फलदातृत्वावगतेः, यागस्यैव फलजनकत्वे प्रमाणाभावे अपूर्वसाधनत्वे सुतरां प्रमाणाभावः । अस्तु वा देवताया अभिप्रेयमाणत्वोक्तावपि तस्य 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणस्य फलदातृत्वासंभवेन उपयोगाभावात् प्राधान्यासंभवेन प्राधान्यव्यभिचारेण तत्कल्पनाऽनुपपत्तेः, प्रत्युत भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयात्, देवताया अपि संस्कार्यत्वे उद्देश्यत्वानेकत्वनिमित्तवाक्यभेदापत्तेः देवताया एव यागाङ्गत्वम्, तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पनाऽपेक्षया रात्रिसत्रवत् आर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः । प्रसादस्य च विग्रहभोगादिव्यतिरेकेण अनुपपत्तेः अर्थवादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोषः । इति प्राप्ते, प्रसादो हि यदि इच्छारूपः, तदा तस्येच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवतु इत्येवमाकारकेच्छात्वेन तद्वाच्यम्, तथा च कारणताऽवच्छेदके गौरवम् । दर्शादिजन्यफलभोगे जातेऽपि तत्कर्तृत्वानपायात् अन्यकृतदर्शपूर्णमासजन्यप्रसादात् अन्यस्य फलापत्तिश्च । अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवतु इत्येवमाकारकेच्छात्वेन कारणत्वं वाच्यम् । तथा चानेककार्यकारणभावकल्पनं कारणताऽवच्छेदके गौरवं च ।

किञ्च एतादृशप्रसादो यदि ब्राह्मणतर्पणान्ते, तदा यागानां नष्टत्वादेव उत्पत्त्यनापत्तिः । यदि तु तत्तद्यागेभ्योऽपि अवान्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवतु इत्याकारिका इष्यन्ते, तदा देवतानां अमोघेच्छत्वस्य अर्थवादेषु प्रतिपादनात् दैवादग्नीषोमीयाद्यकरणेऽपि फलापत्तिः । अथैतस्यार्थवादत्वमेव अभ्युपगम्य तादृशमहाप्रसादस्य विजातीयेच्छात्वेनैव अपूर्ववादिन इव विजातीयफलत्वावच्छिन्नं प्रति कारणता, अवान्तरप्रसादानां च विजातीयतत्तदिच्छात्वेनैव महाप्रसादं फलं च प्रति कारणता, कारणताऽवच्छेदकसंबन्धश्च स्वजनकयागसमवायित्वम्, कार्यताऽवच्छेदकसंबन्धश्च फलांशे समवायः, नातः कर्त्रन्तरे फलापत्तिः । अवान्तरप्रसादमहाप्रसादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयागसमवायित्वमेव । देवतानिष्ठमेव वा तं कार्यकारणभावमङ्गीकृत्य समवायः एव प्रत्यासत्तिरस्तु इति चेत्, संबन्धगौरवस्यैव दोषत्वात्, यागनिष्ठकारणतानिरूपितकार्यता-

घटकसंबन्धस्य भवता निर्वक्तुमशक्यत्वाच्च । मन्मते तु सर्वकार्यकारणभावानां समवायः एव संबन्ध इति लाघवम् । एतेन प्रसादो नाम सुखविशेष इत्यपि पक्षः प्रत्युक्तः ।

न च अस्य गौरवस्यार्थवादिके प्रसादाख्ये व्यापारे सिद्धे फलमुखत्वमिति वाच्यम् । अर्थवादस्य स्तावकतयाऽपि उपपत्तौ स्वतस्तत्कल्पकत्वाभावात् , व्यापारापेक्षायां रात्रिसत्रन्यायेन तद्वाचकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारत्वस्य कारणताघटितत्वेन तस्याः संबन्धावगमपूर्वकत्वात् संबन्धगौरवस्य फलमुखत्वानुपपत्तेः । अतो ये तावत् प्रसादादिप्रतिपादकाः , ते देवस्यत्वादिमन्त्रवदेव प्रसादादिविशिष्टदेवताप्रकाशनार्थाः सन्तो विशेषणांशे प्रकाशनस्य अदृष्टार्थत्वात् नानुपपन्नाः । वैशिष्ट्यघटकसंबन्धश्च आहार्यो वा अनाहार्यो वेत्यन्यदेतत् । अर्थवादाश्च तेनैव संबन्धेन स्तावका इति तेष्वपि न स्तुतिलक्षणा , अतोऽन्या काचिल्लक्षणा । अस्तु वा सा , तथाऽपि विधौ गौरवापत्तेः सा न दोषः ।

न च एवं विध्यनपेक्षितत्वात् आर्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्यापि अर्थवादस्य असति प्रमाणान्तरविरोधे स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमात् विग्रहभोगप्रसादादिस्वीकारात् अपूर्वान्ते एव प्रसादस्वीकरणमस्त्विति वाच्यम् । अन्यतात्पर्यकस्य वाक्यस्य अन्यत्र प्रामाण्यायोगात् । अन्यथा शुद्धपुरुषतात्पर्यके 'यष्टीः प्रवेशय' इत्यादौ परान्नभोजननिवृत्तितात्पर्यके 'मृदं भुङ्क्ष्व' इत्यादौ च प्रमाणान्तराविरोधात् स्वशक्यार्थेऽपि प्रामाण्यापत्तिः । अतः सकृदुच्चरितस्य शब्दस्य अनेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः ।

न च तथापि शक्यार्थविशिष्टप्राशस्त्ये एव लक्षणया अर्थवादानां तात्पर्यात् विशेषणांशेऽपि प्रामाण्योपपत्तिः , लक्ष्यताऽवच्छेदके गौरवापत्तेः । अन्यथा व्रीहित्वादेरपि विवक्षाऽऽपत्त्या ऊहानापत्तिः । अतः कथमपि न विग्रहादिस्वीकारः । किन्तु शब्दमात्रं देवता । अर्थस्तु प्रातिपदिकानुरोधात् चेतनोऽचेतनो वा कश्चित्स्वीक्रियते । न तु विग्रहादिमान् । उपासनाऽऽदौ परं ध्यानमात्रमाहार्यं तस्येति जैमिनिमतनिष्कर्षः । मम तु एवंवदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम् ।

मण्डन— 'न देवता कर्मणि तु प्रधानम् ।' ५.

शंकर—'देवताविग्रहादि न ।' प्रधानम् । १०.

* देवताऽधिकरणे दाशमिके ( १०।४।१२।२३ ) देवतायाः स्वरूपेण कर्मणि समवायनिषेध उक्तः । सु. पृ. १३४२, * देवताऽधिकरणे देवताप्राधान्यस्य निषेध्यमानत्वात् । पृ. ४३८. * देवताऽधिकरणे (ब्र.) वक्ष्यमाणेन न्यायेन 'एतस्यैव रेवतीषु वारवन्तीयम्' इति वाक्ये रेवतीनां वारवन्तीयस्य च आधाराधेयभावस्येव यज्ञादीनां विविदिषायाश्च क्रियाकारकभावस्यापि समभिव्याहारादेव सिद्ध्युपपत्तेः । परिमल. १।१।१ ब्रसू. पृ. ६१. * देवताऽधिकरणे विग्रहादिपञ्चकाभावस्य प्रतिपादनात् । सोम. ६।१।२. * आगमनस्वरूपस्य देवतासांनिध्यस्य देवताऽधिकरणे निराकृतत्वात् । श्राद्धमयूखः पृ. ७१. * क्रममुक्तिनिर्वाहाय देवतानां विग्रहवत्त्वस्थापनेन ब्रह्मविद्याऽधिकारस्तासामुक्तः , अन्यथा उपासनादिकर्मभिः तत्तद्देवतास्वरूपप्राप्त्या मुक्तिफलोपपादिकानां श्रुतिस्मृतीनामप्रामाण्यमेव प्रसज्येत इति शारीरकमीमांसायां देवताधिकरणे (ब्र.) स्थापितम् । वैजयन्ती. १।१।१. * तत्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शनसहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानात् अचेतनानां कार्यारम्भकत्वमिति, तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुं इत्यपि स्पष्टं निरटङ्कि देवताऽधिकरणे । भामती. ३।२।८।४१ ब्रसू. * ननु एवं अन्यपरस्यापि 'वज्रहस्तः पुरंदरः' इत्याद्यर्थवादस्य स्वार्थेऽपि प्रामाण्ये देवताऽधिकरणविरोध इति चेन्न, देवताऽधिकरणे सूत्रकृता ( जैमिनिना ) याग एव फलस्य प्रयोजकः, देवता तु यागस्य गुणः, न तु यागाराधिता देवता फलं प्रयोजयति इत्येवं 'देवताया गुणभावो यागं प्रति' इत्येतावदेव व्यवस्थापयिष्यते , देवताविग्रहादिकं तु भाष्यकृतैव उत्सूत्रं निराकरिष्यते प्रौढिवादेन । कु. १।१।८।३२. * नहि प्रमाणान्तरयोग्यविषयकत्वं इत्येतावता अर्थवादादीनां प्रमाणान्तरमूलकत्वं

संभवति । तदुक्तं देवताऽधिकरणे भामत्याम् । सना. प्रा. प्रकाशे पृ. ९५. * शास्त्रदीपिकायां 'लक्ष्मीकौस्तुभवक्षसं. ... वन्दे मुकुन्दं मुदा' इति मङ्गलं कृतम् । तत्र सिद्धान्तचन्द्रिका—न चैवं देवताऽधिकरणविरोधः उद्देश्याया एव तद्विषयत्वात्, सोमाय स्वाहा इत्येवंरूपा या देवता कर्माङ्गभूता तस्या एव देवताऽधिकरणे विग्रहादिपञ्चकनिराकरणात् । उक्तं च 'नास्माकं शब्द एव देवता, नाकसदामिन्द्रादीनां देवतात्वाङ्गीकारात्' इति । अत एव वार्तिककारैः 'विशुद्धज्ञानदेहाय' इत्यादिना ग्रन्थादौ महादेवो नमस्कृतः । के.

**देवताऽधिकरणन्यायः** । यत्तु केचिन्मन्यन्ते विग्रहबोधकश्रुत्यादेः उपासनापरत्वात् आरोपितविग्रहेणापि उपासनासिद्धेः नेशस्योक्तविग्रहसिद्धिरिति,—तन्न । उपासनापरेभ्योऽपि अविरोधे देवताऽधिकरणन्यायात् प्रतीयमानार्थसिद्धेरनिवार्यत्वादित्युक्तं संग्रहे । ( देवताऽधिकरणं द्रष्टव्यम् ) । साहस्री. ८४५.

* **देवताऽधिकरणन्यायेन** ( ब्र. ) 'उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च । उभयत्रापि तात्पर्यमात्मोपासाऽऽदिके विधौ ॥' इति प्रतिवाद्युक्तस्मृतेः विधेः स्तावकत्वे स्वार्थपरत्वे चेति उभयसिद्धिपरत्वात् । अद्वैत. २।४।१९३. * देवताऽधिकरणन्यायेन भूतार्थवादतया व्यवस्थाहेतुता अस्या– ( शुको मुक्तः इत्यादेः ) स्थेया । संक्षेपशा. टीका. २।२।७. * देवताऽधिकरणन्यायेन मन्त्राणामपि प्रतीयमानार्थप्रामाण्यमङ्गीकरणीयमेव । सना. विवाह. पृ. २८६. * अत्र विश्वसत्यत्वस्य पारमार्थिकस्य देवताऽधिकरणन्यायेन कल्पनीयतया, तन्न्यायस्य च श्रुतिविरोधे अप्रवृत्तेः न प्रतिप्रसवार्थत्वम् । चतुर्ग्रन्थी. पृ. ४३९. * अन्यपदादपि परामर्शात् आश्रमान्तराणि प्रतीयमानानि देवताऽधिकरणन्यायेन आत्मनोऽपि सिद्धिसंभवात् । आभरणम्. ४।१।१।२ ब्रसू. * असति बाधके देवताऽधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । भामती. ३।३।१५।२६ ब्रसू. * देवतावत् भागधर्मत्वानुपपत्तेः यागद्वारा अपूर्वधर्म एवायं ( पौष्णपेषणे ) देवताऽधिकरणन्यायेन विज्ञायते । वा. ३।३।१५।४४ पृ. ८८७. * स्तुतिपराणामपि उक्तश्रुतीनां देवताऽधिकरणन्यायेन ( ब्रसू. ) विश्वसत्यत्वेऽपि तात्पर्यस्य अङ्गीकरणीयतया बाधकत्वस्य संभवात् । चतुर्ग्रन्थी. ४३८. * नागमबाधिताः द्रव्यत्वादयः प्रत्यक्षादिसिद्धतात्त्विकसत्त्वपरत्वकल्पनाया अयुक्तत्वेन देवताऽधिकरणन्यायाप्रवृत्तेः । पृ. ४३९.

* **देवताऽन्तरत्वं** ( इन्द्रः महेन्द्रः इत्यत्र ) सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणात् । वा. २।१।५।१७ पृ. ४२४.

* **देवताऽन्वाधानं** अग्न्यन्वाधानात् पृथङ् न विद्यते । वि. १२।१।१२.

* **देवताऽपनयः** अभ्युदितेष्टौ उपांशुयाजेऽपि । भा. ६।५।२।१०–११, * देवताऽपनयो दर्शे अभ्युदयेष्टौ नैमित्तिकः । ६।५।१।१–९.

* **देवताऽभिधानं** आवाहनादौ विधिगतशब्देनैव अतिदेशस्थले । भाट्ट. १०।४।१४. * देवताऽभिधानं वनस्पतियागे ( ज्योतिष्टोमेऽग्नीषोमीये पशौ ) विधिगतवनस्पतिशब्देनैव निगदेषु । भा. १०।४।१६।३२–३३.

* **देवताऽर्थे** कृत्स्नस्य हविषः संकल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावात् न युक्तः परिक्रयः । वि. ३।४।२१. * **देवताऽर्थता** हविषः आहवनीयप्रक्षेपेण भवति । वा. ३।४।१४।३७.

* **देवताऽऽदेः** दृष्टमात्रापेक्षत्वेन अदृष्टोपकारानपेक्षता । भाट्ट. ४।१।७.

* **देवताऽऽयतनेषु** महायात्रा सदाचारः । वा. १।३।३।७ पृ. २०५.

* **देवताऽऽराधनार्थो** यदि यागः, ततः पूज्यमाना देवता । यागश्च पूजा । पूजा च लौकिकः पदार्थः । तत्र येन प्रकारेण अग्निः पूज्यते, तेनैव सूर्यः पूज्यते इति क आश्वासः । विपरीतमपि कदाचित् स्यात् । ( पूर्वपक्ष इदम् ) । टुप्. ९।१।४।९ पृ. १६५५. * देवताऽऽराधनार्थः सर्वोऽयं प्रयासः । साऽस्य प्रसन्ना फलं ददाति । इति चेन्न । यागादेव फलम् 'स्वर्गकामो यजेत' इति हि श्रूयते । 'तृप्त एवैनमिन्द्रः' इति तु गुणत्वेन देवताश्रुतिः । गुणभूतायां तु देवतायां स्तुत्या दातृत्ववादः । तस्मात् देवता न फलं प्रयच्छति । भा. ८।१।१७।३४.

* देवताऽऽवाहनार्थः निगदः 'अग्निमग्न आवह' इत्यादिः होत्रा सामिधेनीप्रयाजयोर्मध्ये पठ्यते । वि. १०।१।१ वर्णकम् ३. * देवताऽऽवाहनकाले वैश्वदेवचरौ विष्णोरुरुक्रमस्यावाहनं न कार्यम् । भा. १०।१। १।१-३ वर्णकं ३.

* देवताऽऽश्रयं द्रव्याश्रयेण बाध्यते यथा ऐन्द्रपुरोडाशे देवतासामान्यात् सांनाय्यविध्यन्तः प्राप्तः, स तु द्रव्यसामान्यात् प्रवृत्तेन आग्नेयविध्यन्तेन बाध्यते । बाल. पृ. १४१.

* देवतोपलक्षणार्था याज्या । भा. १२।३।१५।३५.

* देवतैक्ये पशुगणे वपाहोमस्य तन्त्रम् । भा. ११।२।५।२४.

* देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यस्य बलीयस्त्वम् । भा. ८।१।१७।३२-३४.

* देवतात्वं अग्नीषोमयोर्व्यासज्यवृत्ति । संकर्ष. ४।४। ६. * देवतात्वं त्यज्यमानद्रव्योद्देशकर्मत्वम् । सु. पृ. ७४९. * देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वम् । मीन्या. * देवतात्वं त्यागकालीनचतुर्थ्यन्तपदोच्चारणकर्मत्वरूपम् । रहस्य. पृ. १०२. * देवतात्वं नाम यस्यैव शब्देनोक्तम्, तस्यैव योग्यस्यायोग्यस्य वा भवति, इति न जातिनिमित्तम् । वा. २।२।९।२३ पृ. ५३७. * देवतात्वं मन्त्रप्रतिपाद्यत्वम् । संकर्ष. २।४।२. * देवतात्वं व्यासज्यवृत्ति अखण्डोपाधिरूपम् । भाट्ट. ३।१।१५.

* देवतात्वं शब्दमात्रस्य निरस्तम् । ननु शब्दमात्रस्य देवतात्वात् इन्द्रमहेन्द्रशब्दयोश्च भेदात् कथं देवतैक्यं इत्याशङ्क्याह–– नचेति ( न च शब्दमात्रं देवता इति नवमदशमयोरभिधास्यते । वा. पृ. ४१७ ) । नवमे 'अपिवा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः' इति सूत्रे ( ९।१।९ ) भूतभव्यसमुच्चारणन्यायेन देवतायाः यागं प्रति गुणत्वे अभिहिते, 'ननु कर्मणोऽपि ईप्सितादभिप्रेतत्वं देवताया गम्यते' इत्याशङ्क्य 'नास्या अभिप्रेतताम पह्नुमहे । तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतता गम्यते' ( भा. पृ. १६५२ ) इति भाष्येण अनर्थकवर्णसमूहस्य प्रातिपदिकत्वाभावे तद्धितचतुर्थीसंयोगायोगात् तत्संयोगाभिधानेन अर्थग्रहणेन (च) शब्दमात्रस्य देवतात्वं निरस्तम् । दशमे च 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना' (१०।४।२३) इत्यत्र 'आवाहनादौ येनकेनचित् पर्यायेण देवताऽभिधानसिद्धेः विधिगताग्न्यादिशब्दानादरः' इति पूर्वपक्षयित्वा "आग्नेयोऽष्टाकपालः' इतिविधिगतेन अग्निशब्देन देवताया हविःसंबन्धविधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यम्' इति सिद्धान्तिते, 'का पुनरियं देवता नाम' इति पृष्ट्वा इन्द्रादीनां द्युस्थानानां वेदे वा यत्र 'अग्निर्देवता वातो देवता' इत्यादिर्देवताशब्दः प्रयुक्तः, सा देवता इति परमतद्वयं अहःशार्दूलादीनां अनुपसंग्रहापत्तेः निरस्य, स्वमतेन 'सूक्तभाजो हविर्भाजश्च देवताः' ( भा. पृ. १९२७ ) इति भाष्येण 'अग्निर्देवत्यं सूक्तम्' 'अग्निर्देवत्यं हविः' इत्यादिप्रयोगात् 'आहुतिभाजो वा अन्या देवता अन्याः स्तोमभाजश्छन्दोभाजः' इति लिङ्गाच्च सूक्तस्तुत्यत्वस्य त्यज्यमानहविरुद्देश्यत्वस्य च देवतात्वाभिधानादर्थस्यैव स्तुत्यत्वोद्देश्यत्वावगतेः 'मूर्तानाममूर्तानां चेतनानामचेतनानां च श्रुत्या कश्चिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं भविष्यति' ( भा. पृ. १९२७ ) इति च भाष्येण मूर्तानां चेतनानां देवतात्वाभिधानात् 'यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा (देवता) भवति ( तत्र )' ( भा. पृ. १९२७ ) इति च भाष्येण उच्चारणार्थत्वात् दिशेः उच्चार्यमाणेन शब्देन 'प्रजापतिं मनसा यजेत' इत्यादिविधौ वा स्मर्यमाणेन वाच्यस्य देवतात्वाभिधानात्, 'ननु एवं सति सुतरां येनकेनचित् अग्नेः शब्देन निर्देशः करणीयः' इति चाशङ्क्य 'भवेदेतदेवं यदि अग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत' इत्युपक्रम्य ( भा. पृ. १९२७ ) 'देवतायाश्च यज्ञसाधनभावो न रूपेण भवति । केन तर्हि ? संबन्धिना शब्देन' इत्यादिना भाष्येण ( भा. पृ. १९२८ ) शब्दसंबन्धितद्व्यतिरिक्ताभिधानात् शब्दस्य देवतात्वं निरस्तं भवति । सु. पृ. ६४३. * देवतात्वं हविर्भाक्त्वम्, स्तुतिभाक्त्वम् । पृ. ६५९. * अर्थो वाचिकया श्रुत्या उच्यमानो देवतात्वं प्रतिपद्यते, नान्यथा । वा. ६।३।५।१८. * नहि द्रव्योद्देश्यत्वमेव देवतात्वम् । तथा

सति 'मैत्रावरुणाय दण्डं प्रयच्छति' 'आत्रेयाय हिरण्यं ददाति' इत्यादौ मैत्रावरुणात्रेयादेरपि द्रव्योद्देश्यत्वसद्भावेन देवतात्वापत्तेः। किञ्च उद्देश्यत्वमात्रस्य देवतात्वे प्रतिनिधीयमानस्यापि देवतात्वसंभवात् षष्ठे वक्ष्यमाणो देवताप्रतिनिध्यभावो विरुध्येत। सोम. १।४।४ पृ. ६३. * शब्दस्यैव देवतात्वम्। भाट्ट. ९।३।१२. * संप्रदानद्वैविध्यमभ्युपगम्य प्रतिग्रहणात्मकस्य संप्रदानस्य देवतात्वाभावेऽपि अनिराकरणात्मकसंप्रदानस्य देवतात्वमिच्छन्ति केचित्। सु. पृ. ८३२. * 'अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः। मनागपि ततोऽन्यत्वे देवतेति न गम्यते॥' देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वात् चोदनैव एकं प्रमाणम्। सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैव अनुष्ठानेऽपि संपाद्येत, ततः तत्प्रमितोऽयं इत्यवसीयते। किञ्चिदपि चेत् इह अन्यथा जातं निवृत्तव्यापारायां चोदनायां प्रमाणान्तरं मृग्यम्। न च तदस्ति इत्यप्रमाणता। वा. २।१।५।१७ पृ. ४२२, * मन्त्रेषु प्राधान्याभिधानात् अग्न्यादयः देवतात्वेन प्रज्ञाताः। १।४।६।९ पृ. ३४०, * देवतात्वस्य अनुष्ठानसंपाद्यत्वात्। २।३।५।१४ पृ. ६०१, * देवतात्वस्य द्विदेवत्ये व्यासज्यित्वात् (व्यासज्य वृत्तित्वात्)। ३।३।१९।४१. * 'देवतात्वस्य शब्दनिष्ठत्वेन' इत्यादिना एकदेवतात्वलक्षणमुक्त्वा 'अर्थस्य देवतात्वपक्षे' इत्यादिना अन्यथा लक्षणमुक्तम्। (भाट्टे ८।२।७)। के. * त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वम्। सु. पृ. ९२९, * भोक्तृत्वरूपदेवतात्वावगमात्। पृ. ९२६, * यागं विना देवतात्वानुपपत्तेः। पृ. ९२८, * विधिं विना देवतात्वाभावः। पृ. ७५५.

* देवतात्वबोधकानि च देवताशब्दः, तद्धितः, चतुर्थी, द्वितीया, मन्त्रवर्णश्चेति। 'देवतास्तर्पयति प्रजापतिर्ब्रह्मा देवताः' इत्यादौ 'रात्रिदेवतामेके, नक्षत्रदेवतामेके' इत्यादौ च द्रव्यत्यागोद्देश्यत्वरूपदेवतात्वस्य देवतापदवाच्यस्य अन्वयः। धात्वर्थत्यागांशे अनुवादः। एवं आग्नेयः इत्यादितद्धितस्य देवतात्वविशिष्टद्रव्यविशेषवाचित्वम्। न च द्रव्यविशेषवाचित्वमसिद्धं इति वाच्यम्। बुद्धिस्थप्रकारावच्छिन्नबोधकसर्वनामार्थे 'साऽस्य देवता' (पा० ४।२।२४) इति तद्धितविधेः। एवं च तद्धितस्य देवतात्वविशिष्टे बुद्धिस्थप्रकारे अष्टाकपालत्वादौ तद्व्यक्तित्वादौ वा शक्तिः। तदवच्छिन्नस्य तु व्यक्तिन्यायेन लाभः। बुद्धिस्थत्वेन भानाभावात्तु न बुद्धिस्थत्वे शक्तिः। तेषां प्रकाराणां नानात्वेऽपि बुद्धिस्थत्वस्य उपलक्षणत्वेन शक्तिग्रहसंभवः। शक्तिग्रहोपलक्षणस्य न शक्यतावच्छेदकत्वं इति दिक्। मणि. पृ. १६२–१६३.

* देवताद्रव्येण स्वकार्याणि न कर्तव्यानि। भा. १०।७।२।७. * देवताद्रव्ययोः संनिपाते द्रव्यं बलीयः। भाट्ट. ८।१।८. * देवताद्रव्यादीनां प्राकृतानां विकृतौ उपदिष्टदेवताद्रव्यादिभिः बाधः। भा. १०।७।१७। ५८–६०, * देवताद्रव्यसंयोगः यागविधेः प्रयोजकः। 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्'। २।३।५। १२–१५.

* देवताध्यानं वषट्कारात् प्रागेव होत्रा कर्तव्यम्। संकर्ष. ४।३।६.

**⌛ देवताध्यानं वषट्कारात् प्राक् 'तां ध्यायेद् वषट्करिष्यन्' इति लट्प्रयोगात्॥**

'यस्यै देवतायै वषट्कुर्यात् तां ध्यायेत्' इति विहितं देवताध्यानमविहितकालनियमेन यदाकदाचन कुर्यात्। इति प्राप्ते, 'जातमञ्जलिना गृह्णाति' 'जातमभिप्राणिति' इत्यादौ जननाव्यवहितोत्तरकालस्य सामर्थ्येनापि नियमदर्शनात् देवताऽर्चनविधौ ध्यानस्य प्राथमिकदर्शनाद् वषट्कारात् पूर्वमेव देवताध्यानम्। वस्तुतो 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति' इति वचनान्तरेणैव कालनियमः। संकर्ष. ४।३।६.

* देवतानयः। देवताऽधिकरणं द्रष्टव्यम्। भा. ९।१।४।६–१०. * प्रमाणान्तराविरोधे एव देवतानयः (ब्रसू.) प्रवर्तते। अन्यपराया अपि (भेदश्रुतेः) देवताऽधिकरणन्यायेन स्वार्थपरत्वमपि किं न स्यात्। संक्षेप. रामतीर्थ. ३।२८३.

* देवतानिर्देशः इदममुष्य अमुष्य च इत्यादिरीत्या समुच्चित्य कार्यः, यत्र चरवः पुरोडाशाश्च व्यतिषक्ताः। संकर्ष. १।३।२३.

साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् । २० ॥

भाष्यम्— अथवा एतदपि न युक्तम् । कुतः ? साङ्गकालश्रुतित्वात् । यदि अत्र प्रधानानामेव कालश्रुतिः स्यात् नाङ्गानाम्, तत एवं स्यात् । अत्र तु साङ्गानां कालः श्रुतः । ( 'द्वादश दीक्षाः, द्वादशोपसदः' इति दीक्षाणां उपसदां च पृथक्पृथक् कालः श्रुतः । यदि चतुरहे क्रियेत, ततो बाध्येत । तस्मात् स्वस्थानानां विवृद्धिः ।

टुप्— ( द्वादशाहशब्दो न गुणविधिः, किन्तु नामधेयमित्याह– ) भावयेत् प्रजाम् ( प्रजाः इति मुद्रिते पाठः ) । केन ? यागेन । कतरेण ? द्वादशाहसंज्ञकेन । ( इत्येवं याग– ) सामानाधिकरण्यात् अहःशब्दः कर्म ब्रवीति । संख्याशब्दः ( अपि ) 'संख्यया कर्मभेदः' इत्यनेन न्यायेन द्वादश यागान् प्रतिपादयति । तत्र एकैको यागः चोदकेन धर्मान् गृह्णाति । तत्र प्रत्यक्षेण ( द्वादश दीक्षाः इत्यादिना ) संख्यावचनेन ( बाध्यते इत्यन्वयः ) चोदकेन या दीक्षोपसत्संख्या प्राप्नोति, सा बाध्यते । ( ननु एवं द्वादश पञ्चविंशतिरात्राः स्युः, अत आह– ) दक्षिणैक्यात् तन्त्रेण प्रयोगः । तस्मात् दीक्षाणामुपसदां च स्वस्थानविवृद्धया प्रयोगः । द्वादशसंख्या च या द्वादशश्रुतेः ( शब्दस्येत्यर्थः ), सा कर्मोपकर्मभेदेन उपपन्ना भवति ( कर्मशब्देन प्रधानस्याभिधानम्, उपकर्मशब्देन अङ्गस्य ) एवं च 'षट्त्रिंशदहो वा एष यद् द्वादशाहः' इति दर्शनमनुगृहीतं भवति ।

तदपेक्षं च द्वादशत्वम् । २१ ॥

भाष्यम्— दीक्षोपसत्सुत्याऽपेक्षम् । प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वम् । तत उपसदः, तासामपि तद्देशानामेव ( द्वादशत्वम् ) । अन्ते सुत्या, तस्या अपि तत्स्थानाया एव विवृद्धिः । तदपेक्षं द्वादशत्वम् ।

दीक्षोपसदां च संख्या पृथक्पृथक्, प्रत्यक्षसंयोगात् । २२ ॥

भाष्यम्— अपि च 'द्वादशाहेन प्रजाकामं याजयेत्' इत्युक्त्वा त्रिवृदादीनि अनुक्रान्तानि । तस्मादपि तदपेक्षा द्वादशसंख्या ।

वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् । २३ ॥

भाष्यम्— एवं च वसतीपरीपर्यन्तानि पूर्वाणि अस्वकालत्वात् अगृह्यमाणविशेषाणि तन्त्रं भवन्ति । अवभृथादीनि चोत्तराणि । तस्य दीक्षाविसर्गार्थत्वात् । स हि दीक्षोन्मोचनार्थः । एवं ह्याह 'अप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोकमायन् । यदप्सु स्नाति, तामेव दीक्षामालभते । अथ यदपोऽवभृथमभ्यवयन्ति, तामेव दीक्षां पुनरप्सु प्रवेशयन्ति' इति । तन्त्रं च दीक्षोत्पन्ना । सा तन्त्रमेवोत्स्रक्ष्यते । विशेषाग्रहणात् ।

तथा चान्यार्थदर्शनम् । २४ ॥

भाष्यम्— एवं च सति अन्यार्थदर्शनमिदं युक्तं भविष्यति, 'षट्त्रिंशदहो वा एष द्वादशाहः' इति ।

चोदनापृथक्त्वे त्वैकतन्त्र्यम्, समवेतानां कालसंयोगात् । २५ ॥

भाष्यम्— यच्च आग्नेयाग्नीषोमीयवदिति । युक्तं यत् आग्नेयाग्नीषोमीययोः चोदनापृथक्त्वेऽपि ऐकतन्त्र्यं सहप्रयोगः । कुतः ? समवेतानां कालसंयोगात् । समवेतानामङ्गप्रधानानां कालसंयोगात् । पौर्णमास्यां पौर्णमास्या यजेत साङ्गयेति । तस्मात्तन्त्रम् । पौर्णमास्यामेवाङ्गानि च प्रधानानि च क्रियन्ते । इह पुनः, साङ्गकालश्रुतित्वादित्येवं अपदिष्टो हेतुः । तस्मादत्र द्वादशाहे अङ्गप्रधानानि पौर्णमासीवत्सह कार्याणि ।

सोम— पूर्ववत् इहापि तन्त्रता इत्युत्थितेः संगतिः । सूत्रार्थस्तु— द्वादशाहे एकैकमहः सदीक्षोपसत्कं अपवृज्येत, कर्मणां पृथक्त्वेन तेषां प्रत्येकं ज्योतिष्टोमप्रकृतिकत्वात् इति ।

वि— 'द्वादशाहे सदीक्षोपसदहे दिनमानकम् । शतत्रयं– द्वादश वा – षट्त्रिंशद् वा, ऽग्रिमो यतः ॥ एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारता । एकैकं तदनुष्ठानं दिनानां पञ्चविंशतिः ॥ अह्नां द्वादशताश्रुत्या मध्यपक्षस् तदाऽपि किम् । कार्या द्वादश साद्यस्काश्चतुष्काणामुत त्रिकम् ॥ एकैकस्यैव यागस्य विकृतित्वादिहादिमः । अमुख्यकालाङ्गबाधाच्चतुष्कं भिद्यते त्रिधा ॥, दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः । साङ्गस्य द्वादशाहस्य

षट्त्रिंशद् दिवसा मता: ॥' अतिदिष्टानामुपसदां दीक्षाणां च प्राकृतसंख्याबाधनाय पृथक् द्वादशत्वं श्रुतम् । ततो दीक्षोपसदर्थे चतुर्विंशतिर्दिनानि, सुत्याऽर्थमेकं दिनमिति पञ्चविंशतिः । ईदृशस्य कर्मविशेषस्य द्वादशभिरावृत्तिभिः ( दिनानाम्– ) शतत्रयं स्यात् । इत्याद्यः पक्षः । तथा सति अह्नां द्वादशत्वं श्रूयमाणं बाध्येत । तस्मात् द्वादश दिवसाः इति मध्यमः पक्षः । तदाऽपि दीक्षोपसद्भ्यामुपेतस्य एकैकस्याह्नः साङ्गज्योतिष्टोमविकारत्वात् तत् सर्वं सद्यः एव कर्तव्यम् ( इति द्वादश साद्यस्क्राः ) । इत्येकः पक्षः । प्रकृतौ दीक्षोपसदोर्मुख्यकालात् प्रागेव अनुष्ठितत्वात् इहापि तथैवानुष्ठानं प्राप्तम् । तच्च मुख्यकाले अनुष्ठाने बाध्येत । तस्मात् अङ्गद्वयस्य प्रधानस्य च द्वादश दिनानि विभज्य अनुष्ठानम्, इति पक्षान्तरम् । 'द्वादशैव दीक्षाः, द्वादशोपसदः' इति अङ्गयोः मुख्यवत् पृथक् द्वादशत्वश्रुत्या षट्त्रिंशत् इति सिद्धान्तः ।

भाट्ट— द्वादशाहे द्वादशदीक्षाः द्वादशोपसदः द्वादशसुत्याश्च विहिताः । तत्र 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यनेन द्वादशानां सुत्यानां फलसंबन्धे अवगते प्रत्येकातिदेशप्राप्तदीक्षोपसदनुवादेन द्वादशत्वसंख्याविधौ एकैका सुत्या प्रत्येकं द्वादशसंख्याकदीक्षोपसद्युक्ता कर्तव्येति द्वादश पञ्चविंशतिरात्राः संपद्यन्ते । न च द्वादशाहपदस्य द्वादशदिनात्मककालविधायित्वात् कथमेतावद्दिनसाध्यतेति वाच्यम् । अहःशब्दस्य सुत्यात्मकक्रतुवाचित्वेन द्वादशसंख्याकसुत्यात्मकत्वस्य प्राप्तत्वेन तस्य नामधेयत्वादिति प्रथमः पक्षः । न अहःशब्दस्य क्रतौ रूढिः, अपि तु दिने एव शक्तस्य क्रतुविशेषे निरूढलक्षणया प्रयोगात् । अतो लक्षणायां प्रमाणाभावात् द्वादशदिनात्मककालविधिरेवायम् । अतश्च सांतपनीयान्यायेन ( ५।१।१७ ) आतिदेशिककालबाधात् साङ्गानां द्वादशसुत्यानां द्वादशदिनसमाप्यत्वावगतेः एकस्मिन्नहनि द्वादशसंख्याकदीक्षोपसद्युक्तैकैका सुत्या समापनीयेति द्वादश साद्यस्क्राः कर्तव्या इति द्वितीयः । साहित्येन एक फलसाधनानां द्वादशानामपि सुत्यानां प्रयाजवत् तन्त्रेणैव निरुक्तसंख्याकदीक्षोपसत्करणोपपत्तेः तदावृत्तौ प्रमाणाभावः । अतश्च औपदेशिककालानुरोधात् आद्यदिने एव निरुक्तसंख्याकदीक्षोपसदादिकं ससुत्यं सर्वं समाप्य द्वादश सुत्या एकैकस्मिन्दिने कर्तव्याः इति तृतीयः । यत्तु अस्मिन् पक्षे 'चतुरहे दीक्षाः, चतुरहे उपसदः, चतुरहे सुत्याः' इति मूले अनुष्ठानमुक्तम्, तत् प्रमाणाभावादुपेक्षितम् । सिद्धान्तस्तु— अहःपदस्य कालपरत्वे द्वादशाहमित्यापत्तेः यागसामानाधिकरण्येन अहःशब्दस्य निरूढलक्षणया यागपरत्वावश्यम्भावात् तस्य च सुत्यात्मकत्वेन अहःसाध्यत्वस्य प्रमाणान्तरेणैव प्राप्तेः नानेन साङ्गे कालविधिः । अपितु सर्वप्रधानानां द्वादशदिनात्मककालसाध्यत्वात् तत्प्रख्यन्यायेन नामधेयमेव द्वादशाहशब्दः । अतश्च अतिदेशानुरोधात् सुत्यातो बहिरेव द्वादशाहं दीक्षाः द्वादशाहं चोपसदः कृत्वा द्वादशाहं द्वादश सुत्याः कर्तव्याः । एवं च 'षट्त्रिंशदहो वा एषः यद् द्वादशाहः' इति लिङ्गमप्युपपद्यते ।

मण्डन— 'स्वस्थानवृद्धिर्दीक्षाऽऽदेः ।'

शंकर— 'द्वादशाहः षट्त्र्यहः स्यात् ।' षट् च त्रीणि च अहानि यस्य सः षट्त्र्यहः 'अङ्कानां वामतो गतिः' इति रीत्या षडङ्कस्य त्र्यङ्कस्य च निवेशे ३६ इति षट्त्रिंशद्दिनात्मकत्वं सिध्यति ।

* द्वादशाहे दीक्षोपसत्सुत्यानां स्वस्थानानां विवृद्धिः । प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वम् । ततः उपसदः, तासामपि तद्देशानामेव । अन्ते सुत्या, तस्या अपि तत्स्थानाया एव विवृद्धिः । भा. ११।४।५।१८. * द्वादशाहे दीक्षावाक्ये 'पदार्थोच्चारणात् यः क्रमः प्रतीयते, स एव विधीयते' । टुपू. ५।१।१।१ पृ. १२८८. * द्वादशाहे 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' । अत्र प्रागुत्तमादह्नः यानीतराण्यहानि तेष्वेव दशमवर्जं पत्नीसंयाजान्तत्वं व्यवतिष्ठते । तत्रापि न पत्नीसंयाजोत्तरस्य लोपः किन्तु तादृशस्य हारियोजनादेः बर्हिःप्रहरणान्तस्य द्वादशेऽहनि पत्नीसंयाजान्ते अनुष्ठानम् । पूर्वेषु तु अहःसु पत्नीसंयाजैरुपरमः । वि. ९।१।९. * द्वादशाहे पुरस्तात् पर्यासात् आगन्तवो भवन्ति बहिष्पवमाने । भा. ५।३।४।७ । द्वादशाहस्य षाडहिके द्वितीयेऽहनि स्तोत्रियानुरूपौ पठित्वा अपूर्वास्तृचाः पठ्यन्ते, तत उत्तरः पर्यासः पठितः । तस्मात् पर्यासात् पूर्वमेतेषां

निवेशो दृष्टः। 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तृच उत्तमः पर्यासः' इति। टुप्. ❋ द्वादशाहे 'पृश्निप्राणग्रहान् व्यतिषजति' इति श्रुतम्। तत्र 'वायुरसि' इत्यादयः दश मन्त्राः पृश्नयो नाम, 'अयं पुरो भुवः' इत्यादयः दश मन्त्राः प्राणा नाम। अत्र मन्त्रेषु ग्रहशब्दो गौणः। (इदम् 'पृश्निप्राणग्रहमन्त्राः' इति शब्दे द्रष्टव्यम्)। संकर्ष. ३।३।१९. ❋ द्वादशाहे पृष्ठ्यः षडह उत्पन्नः, स प्रकृतिरूपः। गवामयने पृष्ठ्यः षडहः तद्विकृतिः। वि. १०।६।३. ❋ द्वादशाहे प्रत्यहं सुब्रह्मण्याभेदः 'संस्थितेसंस्थिते अहनि' इति वीप्सावचनात्। भा. ११।४।६।२५. ❋ द्वादशाहे प्रथममहः प्रायणीयम्, उत्तममहः उदयनीयम्। इमौ द्वावपि आतिरात्रौ। वि. १०।५।४, ❋ द्वादशाहे प्रथममहः प्रायणीयम्, गवामयने च प्रथममहः प्रायणीयम्, तयोः प्रकृतिविकृतिभावो नास्ति। इति न धर्मातिदेशः। ७।३।२. ❋ द्वादशाहे प्रायणीयातिरात्रे ज्योतिष्टोमिको विध्यन्तः। वा. ७।४।३।१९. ❋ द्वादशाहे मानसो ग्रहः 'अनया त्वा पृथिव्या पात्रेण समुद्ररसया प्रजापतये त्वा जुष्टं गृह्णामि इति मानसं प्राजापत्यं गृह्णाति' इति विहितः। अयं मानसः दशमस्याह्नोऽङ्गं न भिन्नः इति दशमेऽहन्येव कर्तव्यः। वि. १०।६।१३. ❋ द्वादशाहे योगविमोकौ 'अहरहर्युनक्ति, अहरहर्विमुञ्चति' इति प्रात्यहिकयोगदर्शनं प्रधानमात्रार्थत्वे तद्भेदेन भेदोपपत्तेरुपपन्नम्। इतरथा सर्वाद्यन्तयोः सकृदेव अग्नियोगविमोकयोः प्राप्त्यापत्तेः इति भाष्यकारेण सिद्धान्तितम्। भाट्ट. ११।३।९. ❋ द्वादशाहे व्यूढे त्र्यनीका 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे। अथैन्द्रवायवाग्रं अथ द्वे शुक्राग्रे। अथाग्रयणाग्रं अथ द्वे ऐन्द्रवायवाग्रे' इति। अत्र प्रथमे द्वितीये षष्ठे दशमैकादशद्वादशेषु च ऐन्द्रवायवाग्रत्वम्। तृतीये सप्तमाष्टमयोश्च शुक्राग्रत्वम्, चतुर्थपञ्चमयोर्नवमे च आग्रयणाग्रत्वम्। वि. १०।५।२४.

**⌛ द्वादशाहे व्यूढे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्रादिशब्दानामेव व्यतिक्रमो नार्थानाम्॥**

**छन्दोऽव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात्। १०।५।२६।८८॥**

भाष्यम्— अस्ति द्वादशाहः, समूढो व्यूढश्च। तत्र व्यूढः 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इति। तत्र व्यूढे इदं समामनन्ति 'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति। तत्र सन्ति भक्षपवमानपरिधिकपालानि। भक्षास्तावत् 'भक्षेहि (ओमाङोश्च इति पररूपम्) मा (मां प्रति) विश दीर्घायुत्वाय शंतनुत्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽसि, अश्विनोस्त्वा बाहुभ्यां सघ्यासम्, वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य (इति पदत्रयं सवनत्रये क्रमेण योज्यम्) सोम देव ते मतिविदः प्रातःसवनस्य माध्यंदिनस्य सवनस्य तृतीयसवनस्य (सवनत्रये यथायथं क्रमेण योजनीयानि) गायत्रच्छन्दसः त्रिष्टुप्छन्दसः जगतीछन्दसः (सवनत्रये क्रमेण योजनीयानि त्रीणि पदानि) अग्निष्टुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति। तथा पवमानः, 'श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीच्छन्दाः, अनु त्वाऽऽरभे स्वस्ति मा संपारय' इति च। तथा परिधयः, गायत्रो मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तरः इति। तथा कपालानि, अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यंदिनीयः, द्वादशकपालस्तार्तीयसवनिकः इति। तत्र संदेहः किं छन्दोऽव्यतिक्रमे व्यतिक्रमो भक्षमन्त्राणां भक्षणस्य च, पवमानमन्त्राणां पवमानस्य च, तथा परिधीनां कपालानां च, अथवा मन्त्राणां छन्दोऽव्यतिक्रम इति। किं प्राप्तम्? मन्त्राणां मन्त्रार्थानां च। कुतः? अविशेषवचनात्। अविशेषेण भवति वचनम्। 'छन्दांसि वा अन्योन्यस्य

लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति। न विशेषः श्रूयते मन्त्राणां व्यतिक्रम इति। तस्मान्मन्त्राणामर्थानां चेति। अतो मध्यमः परिधिर्दक्षिणस्थाने स्थापयितव्यः, दक्षिणः उत्तरस्य, उत्तरो मध्यमस्येति। अष्टाकपालो माध्यंदिनीयः कार्यः, एकादशकपालस्तार्तीयसवनिकः, द्वादशकपालः प्रातःसवनीयः इति। तथा, प्रातःसवनीयो भक्षो माध्यंदिनस्य भक्षणस्य स्थाने भक्षयितव्यः, माध्यंदिनस्तार्तीयसवनिकस्य, तार्तीयसवनः प्रातःसवनीयस्येति। तथा, बहिष्पवमानो माध्यंदिनस्य पवमानस्य लोके, [स्थाने] माध्यंदिन आर्भवस्य, आर्भवो बहिष्पवमानस्येति।

एवं प्राप्ते, ब्रूमः। नाविशेषेण छन्दसां व्यतिक्रमः स्यात्। मन्त्रगतो ह्येष व्यतिक्रमः। मत्रगतान्येव व्यतिक्रमेयुः। किं कारणम्? शक्यन्ते मन्त्रगतानि विपर्यसितुम्। भक्षादयः पुनर्विपर्यस्ता अपि त एवेति। माध्यंदिनस्य भक्षस्य कालेऽपि प्रातःसवनीयो भक्षो भक्ष्यमाणो नैव त्रैष्टुभः कृतः स्यात्। एवं सर्वत्र। कथम्? स्वकालेऽपि ह्यसौ न गायत्रः। गायत्री हि त्रिष्टुभः स्थानमभ्येति, नागायत्री। न भक्षादयो गायत्रादयः। तस्मादसंभवो भक्षादीनां व्यतिक्रमणस्य। मन्त्रगतानि तु छन्दांसि शक्नुवन्ति अन्योन्यस्य लोकं व्यतिक्रमयितुम्। तस्मात् मन्त्रगतानां छन्दसां व्यतिक्रमः इति।

**सोम**— पूर्वत्र प्रातिलोम्यबलात् उत्तरपक्षसि छन्दःप्रभृतीनां व्यतिक्रमः, तथेहापि भक्षपवमानादीनां व्यतिक्रमात् स्वस्थानबाधः इत्युत्थितेः संगतिः। **सूत्रार्थस्तु**— भक्षादीनां मध्ये यथाशक्ति छन्दःशब्दमुख्यवृत्त्यनुसारेण छन्दसामेव व्यतिक्रमात् तेषां वचनं ऊहवत् स्यादिति।

**वि**— 'व्यूढे भक्षादिमन्त्राणामर्थानां च व्यतिक्रमः। मन्त्राणामेव वा, ऽऽद्यः स्यादविशेषेण कीर्तनात्॥, छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगाः। गायत्र्याद्या विपर्यस्ता अर्थेषूक्तिः प्रशस्तये॥'

**भाट्ट**— व्यूढात्मके द्वादशाहे छन्दोव्यतिक्रमः समाम्नातः 'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्याः' इति। लोकं स्थानम्। त्रिष्टुप्स्थाने गायत्री कर्तव्या इत्यर्थः। सोऽयं छन्दोव्यतिक्रमः किं गायत्र्यादिरूपेण अर्थवादेषु मन्त्रेषु वा स्तुतानामर्थानामपि भवेत्, उत मन्त्राणामेवेति चिन्तायाम्, अर्थानामपि केषांचित् गौण्या वृत्त्या अर्थवादेषु गायत्र्यादित्वेन संकीर्तनात् तेषामपि व्यतिक्रमं मन्यते। तत्र 'गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः' इत्यर्थवादात् तेषामपि गायत्र्यादित्वम्। अतश्च 'स्थविष्ठत्वादिगुणको मध्यमः परिधिः दक्षिणस्य स्थाने, दक्षिणश्चोत्तरस्य उत्तरो मध्यमस्य' इति व्यतिक्रमः। तथा सवनीययागाङ्गभूतः प्रातःसवनिकोऽष्टाकपालः अष्टत्वसंख्यावत्त्वात् 'अष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इत्यर्थवादे गायत्रीत्वेन संस्तवाच्च 'गायत्रो माध्यंदिनस्यैकादशकपालस्य त्रैष्टुभत्वेन संस्तुतस्य स्थाने कर्तव्यः, स च तार्तीयसवनिकस्य द्वादशकपालस्य जागतत्वेन संस्तुतस्य स्थाने, स च प्रातःसवनिकस्य स्थाने' इति व्यतिक्रमः। एवं पवमानानामपि सवनत्रयस्थानां व्यतिक्रमः। तेषामपि 'श्येनोऽसि गायत्रछन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीछन्दाः' इति मन्त्रेषु गायत्र्यादित्वेन संकीर्तनात्। अत्र च स्तुतिस्वरूपस्य व्यतिक्रमः स्पष्ट एव। एवं च तत्तत्पवमानाङ्गभूतः सर्वोऽपि मन्त्रो व्यतिक्रमयितव्यः। एवं भक्षस्यापि सवनत्रयगतस्य व्यतिक्रमः। तस्यापि 'गायत्रछन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसः' इति मन्त्रे गायत्र्यादित्वेन संस्तवात्। यद्यपि च भक्षव्यतिक्रमे न भक्षस्वरूपे कश्चित् व्यतिक्रमः। तथापि तत्तद्भक्षमन्त्राणामेव पूर्वोत्तरपदोपेतानां व्यतिक्रमात् व्यतिक्रम इति ध्येयम्। सिद्धान्ते तु न पूर्वोत्तरपदानां व्यतिक्रमः, अपितु गायत्र्यादिपदानामेवेति विशेषः। एवमन्यत्रापि। इति प्राप्ते,

अर्थानां स्वतो गायत्र्यादित्वे प्रमाणाभावात् गौणार्थग्रहणस्य च सत्यां गतौ अन्याय्यत्वात् गायत्रीछन्दः एव त्रिष्टुप्स्थाने कुर्यादिति वाक्यार्थावगतेः यत्र मन्त्रे स्वातन्त्र्येण वा अन्यविशेषणत्वेन वा त्रिष्टुप् प्रकाशिता, तत्र गायत्रीप्रकाशनं कार्यम्। अतश्च तत्र त्रिष्टुप्पदलोपो गायत्रीप्रकाशनार्थं तत्पदप्रक्षेपश्चार्थिकः। तेन 'श्येनोऽसि

त्रिष्टुप्छन्दाः' इत्येवमादिमन्त्रप्रयोगः प्रातःसवनादौ कार्य इति न पदार्थेषु स्थानबाधः।

मण्डन— 'छन्दोविवृत्या न विवर्ततेऽर्थः।' २७.

शंकर— 'छन्दोऽन्यस्थानता मनौ।' मन्त्रे।

❀ द्वादशाहे षाडहिके द्वितीयेऽहनि, विवृद्धस्तोमके पञ्चदशे बहिष्पवमाने, चोदकप्राप्त—अनुरूप—पर्यासयोर्मध्ये वृषण्वन्तः तृचाः आगमयितव्याः 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तः तृचा भवन्ति, तृच उत्तमः पर्यासः' इति वचनात्। वि. ५।३।४. ❀ द्वादशाहे संस्थास्तोत्राण्य-नाम्नातानि इत्यतो यत्राम्नातानि तत आकाङ्क्षन्ति। वैकृतेषु अहःसु तानि नाम्नातानि। ज्योतिष्टोमे च तान्याम्नातानि। तस्माज्ज्योतिष्टोमादुपचयः। भा. ८।३।५।११, ❀ द्वादशाहे 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति श्रूयते। तत्र मधु सत्रिभिर्भक्षयितव्यं क्रत्वर्थत्वात्। १०।६।१२।३२–३३, ❀ द्वादशाहे सत्रे धर्ममात्रं ऋतुयाज्यावरणं आत्रेयाय हिरण्यदानं च कर्तव्यमेव। १०।२।२६।६२.

## ⌛ द्वादशाहे सत्रात्मके सत्रिभिः मधुभक्षणं कर्तव्यं क्रत्वर्थत्वात्॥

### मधु न दीक्षिताः ब्रह्मचारित्वात्। १०।६।१२।३२॥

भाष्यम्— द्वादशाहे श्रूयते 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वा' इति। तत्र संशयः किं सत्रिभिर्मधु भक्षयितव्यम्, नेति। किं प्राप्तम्? नेति। कुतः? दीक्षिता हि ते ब्रह्मचारिणः। ब्रह्मचारिणां च मधु प्रतिषिध्यते, 'मधु मांसं च वर्जयेत्' इति। तस्मान्न प्राश्नीयुरिति। नन्वेतद्वचनं सामान्यं प्रतिषेधं बाधेत। न बाधते इति ब्रूमः। कथम्? यदि अबाधमानमेतत् द्वादशाहेऽनर्थकं भवेत्, ततो बाधेत। न त्वनर्थकम्। कथम्? उभयविधं द्वादशाहमङ्गीकृत्य उभयमशितव्यं घृतं मधु वा। तत्र सत्रिणां घृतप्राशनं भविष्यति, अहीने मधुनः प्राशनमृत्विजाम्। एवमुभयं द्वादशाहसंबद्धं भविष्यति विषयभेदेन। न च विरुद्धस्य आचारो भविष्यतीति। तस्मान्न प्राश्नीयुरिति।

### प्राश्येत वा, यज्ञार्थत्वात्। ३३॥

भाष्यम्— न चैतदस्ति, सत्रिभिर्मधु न भक्षयितव्यमिति। किं तर्हि? भक्षयितव्यम्। कथम्? अविशेषेणोच्यते कर्तृमात्रस्य उभयप्रकारमङ्गीकृत्य द्वादशाहम्, 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वा' इति। उभयं विकल्पेन, न कर्तृव्यवस्थया। तस्मात् सत्रिणोऽपि मधु भक्षयेयुः। यत्तूक्तम्, विषयभेदेनार्थवत्त्वान्न बाधो न्याय्यः, द्वादशाहाङ्गभावश्चैवं सति न विरोत्स्यत इति। अत्रोच्यते। षडहे अतिवृत्ते सत्रसंबद्धे अहीनसंबद्धे वा अविशेषेण मध्वशने घृताशने चोच्यमाने केन व्यवस्थां ब्रूमः। विरोधेनेति चेत्। न। विषयभेदेन विधिप्रतिषेधयोः समाम्नानात्। पुरुषार्थेन प्रतिषेधः, कर्माङ्गत्वेन विधानम्। यदि च प्रतिषेधबलीयस्त्वमिहाङ्गीक्रियते, वचनमनर्थकमेव स्यात्। पक्षे अर्थवत्तेति चेत्। न। नानाविषयत्वात्। तुल्यार्थयोर्हि तुल्यविषययोर्विकल्पो भवति, न नानाऽर्थयोः। नानाऽर्थता चेहाधिगम्यते। कुतः? विधेः कर्मसाद्गुण्यप्रयोजनत्वात्। प्रतिषेधस्यापि नियमानुष्ठानात् पुरुषस्यादृष्टसिद्धिरिति। तस्मात् प्राश्नीयुरिति।

सोम— मध्वशनप्रसङ्गात् संगतिः। ब्रह्मणो वेदस्य चर्यं चरणं अध्ययनं इति व्युत्पत्त्या वेदाध्ययनम्, 'आहूतो ब्रह्मचारी' इत्यादिदर्शनात् मैथुनवर्जनं वा ब्रह्मचर्यशब्दार्थः। मधुमांसवर्जनादिकस्य ब्रह्मचर्यशब्दार्थत्वे 'ब्रह्मचारी मधु नाश्नीयात्' इत्यादिब्रह्मचारिपदेन इह तद्व्रतविधानानुपपत्तेः। व्रतं च वेदाध्ययनं दीक्षितस्य न विध्यर्हम्, कृतवेदाध्ययनस्यैव कर्मण्यधिकारात्, किंतु मैथुनवर्जनमेव। तथा च मधुनिषेधस्य ब्रह्मचर्यशब्दार्थत्वाभावेन मैथुनवर्जनरूपब्रह्मचर्यमात्रस्य क्रत्वर्थतया चोदकप्राप्तावपि न मध्वशनप्रतिषेधस्य प्राप्तिः। न च चोदकात् ब्रह्मचर्यमात्रप्राप्तावपि ब्रह्मचारिणं आहत्य मध्वशननिषेधादेव तत्प्राप्तिरस्ति इति वाच्यम्। आहत्यवचनस्य पुरुषार्थत्वेन तन्निषेधार्थकतया तद्बलेन क्रत्वर्थमध्वशनप्रापकवचनस्य संकोचायोगात्। 'अस्तु वा ब्रह्मचर्यशब्दस्य मधुमांसवर्जनादिव्रतसमुदायपरत्वम्, तथापि चोदकस्य आनुमानिकस्यैव संकोचः प्रत्यक्ष-

वचनात् युक्तः, न तु चोदकात् प्रत्यक्षवचनस्य संकोचः' इत्यभ्युपगमः ।

**वि**— ' मध्वभक्ष्यं भक्ष्यते वा सत्रिभिर्, ब्रह्मचारिणः । निषिद्धत्वादादिमो,ऽन्यः पुंस्कत्वर्थविभेदतः ॥'

**भाट्ट**— द्वादशाहे गृहपतिव्रतानि ' न बहु वदेत्, संस्थिते षडहे मध्वाशयेत् घृतं वा ' इत्यादीनि । अत्र आशयेत् इत्यस्य णिजन्तत्वात् प्रकृतान् अध्वर्य्वादीनिति संबध्यते । अतश्च अध्वर्य्वादिकर्तृकं मध्वशनमपि षडहाङ्गत्वेनादृष्टार्थं आर्थिकेन विधिना विधीयते । तच्च तेषां सत्रात्मकद्वादशाहे भवेत् न वा, इति **चिन्तायाम्**, सत्रे अध्वर्य्वादीनां यजमानत्वेन दीक्षितत्वात्, दीक्षितानां च ब्रह्मचर्यविधानात्, ब्रह्मचारिणश्च मधुभक्षणप्रतिषेधात्, षडहस्य च घृतभक्षणेनापि साङ्गतोपपत्तेः, मध्वशनविधेश्चाहीनविषयत्वेनाप्युपपत्तेः, न सत्रे मध्वशनम् । **इति प्राप्ते**, ब्रह्मचर्याश्रमपुरस्कारेणोक्तस्य मधुवर्जनस्य गृहस्थाधिकारके सत्रे अप्रसक्तेः, दीक्षितपुरस्कारेणोक्तस्य ब्रह्मचर्यस्य च मैथुनवर्जनरूपत्वेन मधुवर्जनरूपत्वाभावात्, तद्रूपत्वेऽपि वा रागप्राप्तमधुभक्षणविषयत्वेन तस्य वैधमधुभक्षणविषयत्वाभावात्, तद्विषयत्वेऽपि वा तस्येहातिदेशप्राप्तत्वेन औपदेशिकमधुभक्षणे अहीनमात्रविषयतायाः कल्पयितुमशक्यत्वात् अहीनवत् सत्रेऽपि मधुघृतयोर्विकल्पः ।

**मण्डन**— ' दीक्षितैः प्राश्यते मधु । '

**शंकर**— ' सत्रे मध्वशनं भवेत् । '

* द्वादशाहे सत्ररूपे दीक्षावाक्ये आनुपूर्व्येण कीर्त्यमानानां दीक्षाणां विततिविशेषः प्रतीयते स एव विधीयते । विततिविशेषैकार्थविधानादेकं वाक्यम् । अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वात् श्रुतिक्रम इत्युच्यते । यदा तु पौर्वापर्ये क्रमः तदा क्त्वाशब्देन तदभिधानात् अनभिधानं नास्ति प्रतिदीक्षं च तद्भेदात् नाना वाक्यानि इति विवेकः । **के.** ५।१।१।१.

* द्वादशाहे समूढे त्र्यनीका ' ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । अथैतरेषां नवानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम् ' इति । त्रयाणामनीकानां समाहारः त्र्यनीका । द्वितीयादिनवमान्तानि अष्टौ एकादशं चेति नवसु अहःसु मध्ये द्वितीये पञ्चमे अष्टमे चाहनि ऐन्द्रवायवाग्रत्वम् । तृतीये षष्ठे नवमे चाहनि शुक्राग्रत्वम् । चतुर्थे सप्तमे एकादशे चाहनि आग्रयणाग्रत्वम् । प्रायणीयं उदयनीयं दशमं चाहः ऐन्द्रवायवाग्रमेव इति । **वि.** १०।५।२३,

* द्वादशाहे सवनीयपश्वादिकमङ्गं भेदेनैवानुष्ठेयं न तु सकृत्, मुख्यकालानां भेदात् । ११।४।६.

## ⌛ द्वादशाहे सुत्याकालीनानामङ्गानामावृत्तिः ॥

**भेदस्तु तद्भेदात्, कर्मभेदः प्रयोगे स्यात्, तेषां प्रधानशब्दत्वात् । ११।४।६।२६ ॥**

**भाष्यम्**— अथ यानि प्रधानैः अपृथक्कालानि अङ्गानि तेषु चिन्त्यते किं तान्यपि तन्त्रं अथवा भेदेनेति । किं प्राप्तम् ? तन्त्रमिति । किं कारणम् ? एवं सहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते ' द्वादशाहेन प्रजाकामं याजयेत् ' इति । तदुक्तं ' विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ' ( ११।१।१०।६५ ) इति । **एवं प्राप्ते, ब्रूमः ।** भेदस्तु स्यात् । कुतः ? तद्भेदात् । तदित्यनेन पूर्वसूत्रनिर्दिष्टः कालः प्रतिनिर्दिश्यते । कालभेदात् । काले भिद्यमाने तन्त्रभेदो भवति । यथा दर्शे पूर्णमासेऽपि । इहापि कालभेदः । अद्य श्वः परश्व इति । तत इहापि कर्मभेदः स्यात् । करणभेदः इत्यर्थः । कथं पुनरङ्गानां कालभेदो विज्ञायते ? तेषां प्रधानशब्दत्वात् । प्रधानशब्दगृहीतान्यङ्गानि यत्र प्रधानं तत्र विज्ञायन्ते । यदद्य प्रधानं तस्याद्यकालान्यङ्गानि । यत् श्वस्तस्य श्वःकालानि । तस्माद्भेदः ।

**तथा चान्यार्थदर्शनम् । २७॥**

**भाष्यम्**— ' पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते ' इति भेदेनाह्नां पत्नीसंयाजान्ततां दर्शयति ।

**श्वःसुत्यावचनं तद्वत् । २८ ॥**

**भाष्यम्**— ' संस्थितेसंस्थितेऽहन्यग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति ' इति, संस्थितेसंस्थिते इति वीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति ।

पश्वतिरेकश्च । २९ ॥

भाष्यम्— पश्वतिरेकश्च दृश्यते 'य एकः पशुरतिरिच्यते, स ऐन्द्राग्नः कार्यः' इति । न तावदतिरिच्यते, यद्येकैको न भवति एकादश एते पशवः, द्वादशाहानि । तत्पश्वालम्भभेदः उपपद्यते । तन्त्रभावे सकृदेव ऐकादशिनानालभेत । तस्मादपि भेदः ।

सोम— दीक्षादिवत् सुत्याकालानामङ्गानामपि तन्त्रत्वं इत्युत्थितेः संगतिः । सूत्रार्थस्तु—यतः कालभेदात् प्रधानकर्मणामनुष्ठाभेदः, अतः प्रयोगे अङ्गानामपि भेदः स्यात्, तेषां प्रधानविधिविधेयत्वात् इति ।

वि— 'सवनीयादिकं तत्र सकृत् स्याद् भिद्यतेऽथवा ।, प्रयोगैक्यात् सकृ, न्नैवं मुख्यकाले विधानतः ॥'

भाट्ट— तदेवं सुत्याबहिर्भूतानां दीक्षोपसदादीनामग्नीषोमीयाङ्गानां तन्त्रत्वात्, पत्नीसंयाजोत्तरकालीनानां च तन्त्रत्वात्, एकोपक्रमावसानत्वेन द्वादशानामपि सुत्यानामेकप्रयोगत्वं तावदविवादम् । अहीनात्मकत्वे च तस्मिन् दक्षिणैकत्वस्य स्थापितत्वादपि तथा । अतश्च सुत्याकालीनानामपि आरादुपकारकाणामङ्गानां सवनीयपशुसवनीयहविरादीनामपि तन्त्रत्वमेव । न च गृह्यमाणविशेषत्वात् तेषामावृत्तिः, तज्जन्योपकारस्य अग्नीषोमीयादिजन्योपकारस्येव द्वादशाहपरमापूर्वं यावत् अवस्थितेरावश्यकत्वेन पुनःपुनः करणे प्रयोजनाभावात् । यदि तु प्रकृतौ परमापूर्वस्य अतिरिक्तस्याभावात्, सर्वाभ्यासापूर्वजन्यसुत्यापूर्वं प्रत्येव सर्वेषामुपयोगात्, द्वादशाहे तत्सुत्यापूर्वाणां भेदात् सुत्याकालीनाङ्गानामावृत्तिरित्युच्येत, ततस्तदकालीनाङ्गानामपि प्रकृतौ तदपूर्वप्रयुक्तत्वात् तद्भेदेन तद्भेदापत्तिः । अथ एतद्भेदेऽपि प्रयाजादाविव अन्तिमापूर्वेणैव अग्नीषोमीयादिजन्योपकारनाशात् सकृदेव करणमित्युच्येत, ततः सवनीयादिजन्योपकारस्यापि तेनैव नाशात् प्रतिसुत्यं करणे प्रमाणाभावः । नहि अग्नीषोमीयादौ परमापूर्वप्रयुक्तत्वं सवनीयादौ च सुत्यापूर्वप्रयुक्तत्वं इत्यत्र प्रमाणमस्ति, प्रकृतौ एकापूर्वं प्रत्येव सर्वेषामुपयोगात् । अभ्यासापूर्वाव्यवहितापूर्वत्वेनैव प्रकृतौ प्रयोजकत्वाच । इति प्राप्ते, 'प्रायणीयं प्रथममहः' इत्याद्युत्पत्तिवाक्येषु अहःपदेन अहःसाध्यसुत्याऽभिधानात् अहःकालविशिष्टसुत्याख्यकर्मविधिप्रतीतेः, कालविधौ च सत्यपि महाप्रयोगैक्ये सुत्यामात्रकालीनाङ्गविशिष्टसुत्याप्रयोगविधेरावश्यकत्वात्, तावत्प्रयोगविधिभेदादेव तत्कालीनाङ्गानामावृत्तिः । अत एव सुत्याकालबहिर्भूताङ्गानां अन्तिमसुत्याऽपूर्वेणैव नाशः । सुत्याकालीनाङ्गानां तु तत्तत्सुत्याऽपूर्वेणेत्यपि प्रयोगभेदादवसीयते । अत एव 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, संस्थितेसंस्थितेऽहनि अग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इत्यादिलिङ्गदर्शनान्यपि आरादुपकारकाङ्गावृत्तौ उपपद्यन्ते । संनिपत्योपकारकाङ्गावृत्तिस्तु अविवादैव ।

मण्डन— 'सुत्याहाङ्गं पृथग्भवेत् ।'

शंकर— 'सुत्याकालाङ्गमित् त्विह ।' इह द्वादशाहे । भित् भेदः ।

* द्वादशाहे सुत्याकालीनसुब्रह्मण्याह्वानस्यावृत्तिः । भा. ११।३।११।२२–३२. * द्वादशाहे सोमोपावहरणं द्वादशेऽहनि मानवासस्यैव, न तस्मिन् अहनि वासः पृथक् । इतरेषु अहःसु तु तत् प्रत्यहं भिन्नम् । के. १०।६।२१।७८.

* द्वादशाहान्तर्गतदशमाहाङ्गं मानसो ग्रहः । भा. १०।६।१३।३४–४४.

* द्वादशाहादौ अहर्गणे उपसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदेऽपि न भिद्यते, किन्तु तन्त्रम् । वि. ११।३।१०, * द्वादशाहादौ अहर्गणे प्रत्यहं क्रियमाणसोमोपावहरणवासः उपावहरणकाले एव कर्तव्यं न मानकाले । १०।६।२२, * द्वादशाहादौ अहर्गणे बहिष्पवमाने उद्गात्रपच्छेदे सर्वोऽहर्गणो नावर्तनीयः, किन्तु तदेवैकमहरावर्तनीयं यस्मिन्नपच्छेदः । ६।५।२१. * द्वादशाहादौ अहर्गणे सोमोपावहरणवस्त्रस्य ग्रावस्तुते दानविधानम् । भाट्ट. १०।६।१९. * द्वादशाहादौ अहर्गणे हविर्धानशकटे अवस्थितात् सोमात् प्रत्यहं कियांश्चित् सोमभागः पृथक्कृत्योपावहर्तव्यः । तदर्थं पृथक् पृथक् वासः संपादनीयम् । तच्च वासःसंपादनं उपावहरणकाले एव न मानकाले, उत्तमाहनि तु मानवाससैवोपावहरणम् । वि. १०।६।२१–२२.

* द्वादशाहगतस्य दशमस्याह्नः मानसान्तता ( मानसग्रहान्तता ) वचनेनोक्ता । भा. ९।१।८।२९, * द्वादशाहगते पृष्ठ्ये षडहे चतुर्थेऽहनि त्रैशोकं नाम साम उत्तराग्रन्थपठितयोरुत्तरयोर्बृहत्योरेव गेयम् । ९।२। ५।२१–२४ वर्णकं २. * द्वादशाहगते पृष्ठ्ये षडहे प्रकृतिरूपे, षट्सु अहःसु क्रमेण रथंतर–बृहत्–वैरुप–वैराज–शाक्कर–रैवतानि सामानि विहितानि । वि. १०।६।३, * द्वादशाहगते पृष्ठ्ये षडहे मध्वशनं त्रयस्त्रिंशेऽहनि कर्तव्यम्, गवामयने उत्तरे पक्षसि तु त्रिवृत्संनिधौ कर्तव्यम् । १०।६।९.

* द्वादशाहगतप्रायणीयनाम्ना धर्माणां गवामयनगतप्रायणीये नातिदेशः । भा. ७।३।२।५.

* द्वादशाहधर्माणां षञ्चोक्थ्य–शतोक्थ्य–शताग्निष्टोम–शतातिरात्रादिषु संस्थागणेषु अतिदेशः, परन्तु तत्रतत्र तत्तत्संस्थता । भा. ८।३।४।८–९.

* द्वादशाहधर्मातिदेशः अहर्गणेषु । भा. ८।१।१०। १७.

* द्वादशाहन्यायः । सारस्वते हि ( सत्रे मित्रावरुणयोरयने नाम ) द्वादशाहन्यायेनैव उभयोः पक्षयोः ( दर्शनं ) ज्योतिष्टोमपूर्वकत्वात् । वा. २।४।२।२८.

* द्वादशाहप्रकरणे ' द्वादशोपसदः ' इति विहितत्वात् तत्प्रकृतित्वेन सर्वाहीनेषु तत्प्राप्तिः । वा. ३।३।८। १६ पृ. ८१४.

* द्वादशाहप्रकृतिकेष्वपि सत्राहीनेषु वृषण्वतामेव तृचानां चोदकवशात् प्राक् पर्यासन्निवेशः, अन्येषां तु पर्यासोत्तरमेव बहिष्पवमाने । रत्न. ५।३।४।९.

* द्वादशाहविकृतिषु रथंतरात्मकनिमित्ताभावेऽपि ऐन्द्रवायवाग्रत्वम् । वि. १०।५।२३.

* द्वादशाहसंबन्धिब्रह्मसामस्तोत्रोद्देशेन विहितं बार्हद्गिरादि नैमित्तिकं निमित्ताभावे अनुलोमाधिकारके प्रयोगे न ग्राह्यम् । निमित्ताभावेऽपि अनुष्ठाने निमित्तसंबन्धस्य वैयर्थ्यापत्तेः । भाट्ट. ४।३।२.

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत् । ७।४।३।१३॥**

गवामयने ज्योतिः गौः आयुः इति त्रीण्यहानि । एवं ज्योतिर्गौरायुः इति स्वतन्त्रा एकाहविशेषाः । तत्र गवामयनिकेषु ज्योतिरादिषु द्वादशाहिकधर्माः प्राप्यन्ते ऐकाहिकाश्च । तत्र ऐकाहिकैरविरुद्धाः द्वादशाहिका यथाप्राप्तं क्रियन्ते । विरुद्धेषु तु संशयः, किं द्वादशाहिकः स्यात् ऐकाहिको वेति । तत्र सूत्रेण पूर्वपक्षमाह । अहर्गणे गवामयनगते ज्योतिरादौ द्वादशाहिकं धर्मजातं स्यात् । तत्प्रकृतित्वात् गवामयनस्य द्वादशाहिकप्रकृतिकत्वात् । ननु तर्हि कथं तत्र ऐकाहिकसमाख्यायाः प्रवृत्तिः ? उच्यते । अधिकागमात् ऐकाहिकं तदाख्यं स्यात् । ऐकाहिकं एकाहसंबन्धि ज्योतिर्गौरायुः इति समाख्यानं ज्योतिष्टोमात् अधिकानां धर्माणां आगमात् स्यात् । एकाहवत् । यथा एकाहेष्वपि ज्योतिरादिषु ज्योतिर्गौरायुः इति आख्या ज्योतिष्टोमात् अधिकानां धर्माणां आगमादेव भवति, तद्वत् इहापि । तस्मात् अहर्गणे ज्योतिरादौ द्वादशाहिकं धर्मजातं स्यात् इति पूर्वः पक्षः ।

अत्र भाष्यम्– अधिकागमात् तदाख्यं स्यादेकाहवत् इत्यस्यापरा व्याख्या । ये द्वादशाहे अधिकाः ऐकाहिकेभ्यः केचिद्धर्माः ' अभिप्लवोऽन्वहं भवति ' ' गौरिवीतं ( साम ) अन्वहं भवति ' इति । तेषामधिकानां आगमात् तदाख्यं स्यात् एतत् द्वादशाहिकमहः, ज्योतिराख्यं आयुराख्यं वा । एकाहवत् । यथा षडहगतानां पृष्ठानां भावात् एकाहो विश्वजित् ' षडहः ' इत्युच्यते ' तमेकाहं षडह इत्याचक्षते ' इति तद्वत्–इति ।

**लिङ्गाच्च । १४ ॥**

पूर्वपक्षे हेत्वन्तरं लिङ्गमाह । ' द्वादशोपसदो भवन्ति ' इति द्वादशोपसत्तारूपात् लिङ्गात् द्वादशाहिक एव विध्यन्त इति ज्ञायते । पश्वेकादशिन्यां द्वादशाहिको धर्मः प्रत्यहमेकैक इति विभज्य विधानमपि विहारदर्शनरूपं लिङ्गम् ।

**न वा प्रत्यक्षत्वादधिकानामशब्दत्वम् । १५ ॥**

गवामयनगते ज्योतिरादिष्वहरूपे अहर्गणे द्वादशाहिकधर्माः कर्तव्या इति पूर्वपक्षं सूत्राभ्यां प्राप्तं न वा इति शब्दाभ्यां निषिध्य सिद्धान्तमाह । न वा द्वादशाहिकं धर्मजातं कार्यम्, किन्तु ऐकाहिकम् । चोदकेन द्वादशाहिकं

प्राप्तम्, नामधेयेन ऐकाहिकम्। नामधेयं च चोदकात् बलीयः, प्रत्यक्षत्वात्। प्रत्यक्षं नामधेयं चोदकं तु आनुमानिकम्, प्रत्यक्षं चानुमानाद्बलीयः। ननु अधिकार्थे नामधेयं इत्युक्तम्। उच्यते। अधिकानां अशब्दत्वम्। अधिकानां शब्दो नास्ति वाचकः। ज्योतिरादिशब्दाश्च कर्मनामधेयानीत्युक्तम् (१।४।१।२)। यत्तु 'अधिकागमात् तदाख्यम्' इत्युक्तं तत्र ब्रूमः। वचनादधिकागमो न नामधेयेन। तस्मात् द्वादशाहिक–ऐकाहिकधर्मविरोधे नामधेयेन ऐकाहिकं धर्मजातं कर्तव्यमिति सिद्धान्तः।

**लिङ्गं संघातधर्मः स्यात् तदर्थापत्तेर्द्रव्यवत्। १६॥**

लिङ्गमुपदिष्टं द्वादशोपसत्तारूपम्, परिहरति सिद्धान्ती। लिङ्गं संघातधर्मः अहःसंघातस्य धर्मः स्यात्। तदर्थापत्तेः, तस्य गवामयनस्य अर्थेन कार्येण आपत्तेः प्राप्तेः। गवामयनं द्वादशाहकार्यापत्त्या द्वादशाहधर्मान् गृह्णाति, न चोदकेन। तत्स्थानापन्नः तद्धर्मं लभते इति न्यायात्। द्रव्यवत्। यथा व्रीहौ ये धर्माः श्रुताः, ते व्रीहिकार्यापन्नेषु नीवारेषु द्रव्येषु भवन्ति तद्वत्। द्रव्ये इव द्रव्यवत्।

**न वाऽर्थधर्मत्वात् संघातस्य गुणत्वात्। १७॥**

द्वादशोपसत्तालिङ्गं संघातधर्मः इति यत् सिद्धान्तिना उक्तं तत् पूर्वपक्षी परिवर्तयति। न वा लिङ्गं संघातधर्मः। अर्थधर्मत्वात् अर्थस्य प्रधानस्य तत्तदहर्पूर्वस्यैव धर्मः द्वादशोपसत्ता। संघातस्य तु गुणत्वात् अहर्गुणत्वात्। अहानि प्रधानानि, संघातः तद्गुणः। एवं संघातस्य अहर्गुणत्वात् द्वादशोपसत्तायाश्च अर्थधर्मत्वात् न द्वादशोपसत्तालिङ्गं संघातधर्मः।

**अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात्। १८॥**

सिद्धान्तिना उक्तं दृष्टान्तं वैषम्येण परिहरति पूर्वपक्षी। व्रीहिकार्यापन्नेषु नीवारेषु द्रव्येषु धर्मलाभः व्रीहिधर्मलाभः अर्थस्य पुरोडाशनिष्पादनकार्यस्य आपत्तेः प्राप्तेः स्यात्। द्वादशोपसत्त्वं तु नैव संघातस्य धर्मः इति विषमो दृष्टान्तः।

**प्रवृत्त्या नियतस्य लिङ्गदर्शनम्। १९॥**

द्वादशोपसत्तारूपस्य लिङ्गस्य पूर्वपक्षिणा उक्तस्य गतिमाह सिद्धान्ती। 'द्वादशोपसदो भवन्ति' इति द्वादशोपसत्तारूपं इदं लिङ्गदर्शनं प्रवृत्त्या मुख्यानुसारेण या प्रवृत्तिस्तया नियतस्य द्वादशोपसत्त्वस्य स्यात्, न चोदकप्राप्तस्य। चोदकस्य नामधेयाद्दुर्बलत्वात्। तथाहि। गवामयने द्वादशाहिकं प्रायणीयोऽतिरात्रः प्रथममहः। तस्य धर्मो द्वादशोपसत्त्वम्। उत्तरभाविनां ज्योतिर्गौरायुर्नामकानामह्नां षडाद्युपसत्त्वम्। उभयोर्गवामयने संनिपाते प्रथमातिक्रमे कारणाभावात् द्वादशोपसत्त्वं नियतं इति। तथा च इदं लिङ्गदर्शनं उपसद्भिन्नविध्यन्तातिदेशे न नियामकम्। किन्तु ज्योतिरादिनामधेयेन एकाहविध्यन्तातिदेशे एवेति।

**विहारदर्शनं शिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात्। २०॥**

गवामयनगते ज्योतिर्गौरायुः इति त्र्यहे द्वादशाहिकविध्यन्तस्यातिदेशः इति पूर्वपक्षे विहारदर्शनरूपं लिङ्गं द्वितीयं 'लिङ्गाच्च' इत्यत्र प्रदर्शितम्। तस्य अन्यथोपपत्तिप्रदर्शनार्थं इदं सिद्धान्तसूत्रम्। शिष्टस्य विहारदर्शनं शिष्टस्य उपदिष्टस्य विहारस्य दर्शनं अनारभ्यवादानां प्रकृत्यर्थत्वात् उपपद्यते। न तेन ज्योतिरादिषु द्वादशाहिकविध्यन्तस्य प्राप्तिर्भवति। अनेन च विहारदर्शनरूपेणापि लिङ्गेन ज्योतिरादिषु द्वादशाहिकधर्माणां ऐकाहिकधर्माणां च विरोधे द्वादशाहिकधर्माणां अतिदेशः साधयितुं न शक्यते। तस्मात् ज्योतिरादिनामधेयेन एकाहधर्माणामेव अतिदेशः इति सिद्धान्तः। के.

* **द्वादशाहिकं** द्वादशोपसत्त्वं धर्मं गवामयने दर्शयति 'द्वाभ्यां लोमावद्यति' इत्यादिना। भा. ८।१।१०।१७, * **द्वादशाहिकानि** अहानि प्रायेण उक्थ्यसंस्थानि द्वावग्निष्टोमौ। ८।३।५।१०, * **द्वादशाहिको** धर्मो द्वादशोपसत्त्वम्। ७।४।३।१४, * द्वादशाहिको विधिस्तन्त्रदृष्टो वसतीवरीपर्यन्तः अवभृथादिश्च। ११।३।११।३१, * **द्वादशाहिकानामह्नां** सामान्येन पत्नीसंयाजान्तता। विशेषेण तु दशमस्याह्नो मानसान्तता उच्यते। १०।६। १३।४४.

* **द्वादशाहिकदशमाहाङ्गं** मानसो ग्रहः। मानसग्रहाधिकरणम्। भा. १०।६।१३।३४–४४.

* द्वादशाहिकदशाहधर्माणां द्विरात्राद्यहर्गणेषु अनुष्ठानम् । द्विरात्रन्यायः । भा. १०।५।४।१२-१३.

* द्वादशाहिकधर्माणां अहर्गणेषु अतिदेशः । भा. ८।१।१०।१७, * द्वादशाहिकधर्माणां शतोक्थ्यादिषु संस्थागणेषु अतिदेशः । ८।३।४।८-९.

* द्वादशाहिकसप्ताहधर्माणां जनकसप्तरात्रे अतिदेशः, तत्र अग्रिमचतुरहे त्रिवृत्ता विधीयते । जनकसप्तरात्राधिकरणम् । भा. ८।३।२।३-५.

* द्विरवदानं दध्नो गृहीत्वा पयसो ग्राह्यम् । उपस्तरणाभिघारणयोस्तु तन्त्रम् । कल्पसूत्रेषु तु पयसो द्विरवदानं गृहीत्वा पश्चात् दध्नः इत्युक्तम्, तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात् । होमस्तु तन्त्रेणैव । भाट्ट. ५।२।३.

⌛ द्विरुक्तत्वापत्तिलक्षणो न्यायः (३।६।१।२)।

'प्रकृतौ वा' (३।६।१।२) इति अनारभ्यवादाधिकरणसिद्धान्तसूत्रेण खादिरत्वादेः प्रकृतिविकृत्यर्थत्वे (बाधकतया) द्विरुक्तत्वापत्तिलक्षणो न्यायो य उक्तः, स एव 'तत्प्रकृत्यर्थम्' इति आधानाधिकरणपूर्वपक्षसूत्रेण (३।६।५।१४) आधाने अतिदेशात् दृढीकरणेन प्रतिपादितः । सु. ३।७ पृ. ४१.

⌛ द्विरुक्तत्वन्यायः । 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति सूत्रोक्तो हेतुरेवात्र न्यायः । सूत्रार्थस्तु अनारभ्याधीतं पर्णमयीत्वादि प्रकृतौ एव निविशते न विकृतौ । विकृतौ तु अतिदेशेनैव प्राप्नोति । एवं सति अद्विरुक्तत्वं भवति । विकृतावपि विधाने तु द्विरुक्तत्वं दोषः अतिदेशेन सिद्धे पुनर्विधानात् इति । के. ३।६।१।२.

* अनारभ्याधीतः प्रवर्ग्यः श्रुतः । तस्य च 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति ज्योतिष्टोमाङ्गत्वेन विनियोगः अव्यभिचरितक्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायेन तदुपस्थितेः । भाट्ट. ३।३।१२. * विधिः अतिदिष्टेष्वपि अङ्गेषु शस्त्रादिषु उपदेशात् एव प्रवर्तते न द्विरुक्तत्वन्यायात्, अतिदेशतः कर्तव्यत्वेन उद्दिश्य आचमनविधानात् कर्तव्यतायाश्च अतिदिष्टेष्वपि औपदेशिकत्वात् । बाल. पृ. ३६. * वस्तुतस्तु यूपोद्देशेन विहितस्य कालस्य द्विरुक्तत्वन्यायसहकृताव्यभिचरितक्रतुसंबन्धादेव दैक्षार्थत्वसंभवे । भाट्ट. ११।३।३.

⌛ द्विर्बद्धं सुबद्धं भवतीति न्यायः । स्पष्टाऽभिप्रायकोऽयम् । किञ्च- शब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणे द्योत्यविषये हि उक्तार्थानामप्रयोग इति पूर्वोक्तन्यायो न संचरतीत्यभिप्रेत्य हृदि व्यतिलुनीते इत्यादौ द्विर्बद्धं सुबद्धं भवतीति न्यायेन समुच्चयस्य दृष्टत्वादित्युक्तमिति । साहस्री. ५८१.

* 'द्विर्हविषोऽवद्यति' इत्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानम् 'हविषो द्विः' इति । के. ५।२।४।६. * 'द्विर्हविषोऽवद्यति' इति उपस्तरणाभिघारणाभ्यां सह यत् चतुरवत्तम्, तस्मिन् हविर्विषयं अवदानद्वित्वं विधातुं उच्यते । वि. ५।२।४.

* 'द्वौ अग्नी प्रणयतः ।' अयं कर्मतः वाचनिको व्यवस्थितविकल्पः । बाल. पृ. १६०. * द्वौ आनय इत्युक्तः यथा पुमांसौ आनयति न स्त्रीपुंसौ, तथा 'वसानौ' इत्युक्ते पुमांसौ इति गम्यते न तु स्त्रीपुंसौ । भा. ६।१।५।२२ पृ. १३६५.

⌛ द्वौ नञौ प्रकृतमर्थं गमयतः इति न्यायः । 'करणेषूपदिष्टेषु याऽर्थात् साध्यत्वकल्पना । ताभ्यां गुणविधाने न नास्ति मत्वर्थलक्षणा ॥' (वा. पृ. ३३७) करणेषु उपदिष्टेषु सत्सु या अर्थात् साध्यत्वकल्पना, तस्यां च गुणविधाने मत्वर्थलक्षणा न नास्ति, किन्तु अस्ति, इति 'द्वौ नञौ०' इति न्यायेन योज्यः । सु. पृ. ४४७.

* 'द्वाभ्यां लोमावद्यति द्वाभ्यां मांसम्' इत्यादिना द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति । भा. ८।१।१०।१७, * द्वयोः एकार्थत्वात् समुच्चयो न संभवति । ८।१।१५।२६. * 'द्वयोः प्रणयन्ति' इत्यनेन मध्यमयोर्द्वयोः पर्वणोः प्रणयनम् । बिन्दु. ७।३।९।२३-२५. * द्वयोर्हि साकाङ्क्षयोः संबन्धो भवति । टुप्. ११।१।२।६.

* द्व्यर्थत्वं च (वाक्यस्य) विप्रतिषिद्धम् । भा. ७।१।१।६.

* द्व्यवदानं यदैव आहवनीये निक्षिप्यते, तदैव याज्याऽनुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते। वा. ३।४।१४।४१ पृ. ९८२. * द्व्यवदानं होमसंबद्धम् 'द्व्यवदानं जुहोति' इति। भा. ६।४।१।२. * द्व्यवदानस्य हविःसंस्कारकस्यापि अवत्तोद्देशेन होमविधानात् लाघवेन अवत्तहोमस्यैव प्रयोज्यत्वे अवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनात् न पृथक्पदार्थत्वम्। भाट्ट. ५।२।७. * द्व्यवदाने अधिकमपि प्रक्षेपांशं गते सति उत्पत्तिवाक्यशिष्टं यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः। वा. ३।४।१४।४१ पृ. ९८२.

* द्व्यवदानमात्रेण अनुसमयं पूर्वपक्षयित्वा द्व्यवदानादिना प्रदानान्तेन अनुसमयं सिद्धान्तयिष्यति। 'मुष्टिकपालावदान' इत्यत्राधिकरणे (५।२।३।४)। सु. पृ. १३२७.

* द्व्यवदानवाक्यं (द्विर्हविषोऽवद्यति) नावदानविधायकं चतुरवत्तवाक्ये (चतुरवत्तं जुहोति) अवदानविशिष्टहोमविधानात्, किन्तु 'द्विः' इति संख्यामात्रमेव विदधाति। सोम. ५।२।३.

* द्व्यहकालता नाम प्रकृतौ दर्शे पर्वणि अग्न्यन्वाधानादिकं प्रतिपदि इष्टिः इति। वि. ५।१।११, * द्व्यहकालत्वं चोदकप्राप्तं विकृतिषु 'य इष्ट्या पशुना' इत्यादिवचनेन बाध्यते। ५।४।७, * द्व्यहकालत्वं पर्वण्यग्न्यन्वाधानं इध्माबर्हिषोः संपादनं च, प्रतिपदीष्टिः, इति प्रकृतौ दृष्टम्। ५।४।७.

**⌛ द्व्याधानं च द्वियज्ञवत्। ६।१।५।२२॥**

'क्षौमे वसानौ अग्निमादधीयाताम्' इति वाक्ये यत् अग्न्याधानमुक्तं तत् द्व्याधानम्, द्वयोः पुरुषयोः संभूय आधानं स्यात्। यथा दंपत्योः संभूय कर्म तद्वत् इति चशब्दार्थः। वसानौ आदधीयातां इति द्विवचनेन द्वयोः पुरुषयोरुक्तत्वात्। द्वियज्ञवत् इति दृष्टान्तः। 'एतेन द्वौ राजपुरोहितौ यजेयाताम्' इति राज्ञः पुरोहितस्य चेति द्वयोः कुलायः नाम याग उक्तः, तद्वत्। इति पूर्वः पक्षः।

**गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात्। २३॥**

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह। नात्र वाक्ये द्वयोः पुरुषयोः संभूय एकमाधानमुक्तम्। वसानौ आदधीयातां इति द्वितीयशब्दः द्वित्ववाचकद्विवचनरूपः शब्दः द्वितीयं पुरुषममिप्रेत्य न प्रयुक्तः स्यात् किन्तु पत्न्या द्वितीयशब्दः स्यात् द्वितीयां पत्नीममिप्रेत्य द्विवचनं प्रयुक्तम्। तत्र अग्न्याधानं अन्यतः प्राप्तम्। वस्त्रपरिधानं च लोकत एव प्राप्तम्। क्षौमत्वरूपो गुणस्तु अन्यतो न प्राप्तः। तदर्थमेतद्विधानम्। विधीयते इति विधानं विधानत्वं विधीयमानत्वं इत्यर्थः। 'अतसी स्यादुमा क्षुमा' इत्यमरः। अतसी तन्तुभिः (अतसी-आळशी, जवस) निर्मितं वस्त्रं क्षौमम्। वस्त्रगतस्य क्षौमत्वरूपस्य गुणस्य दंपत्योर्विधानार्थत्वात् वाक्यस्य नात्र द्वयोः पुरुषयोराधानस्य विधानं इति सिद्धान्तः। के.

**⌛ द्व्याधानाधिकरणम्।** आधाने स्त्रीसद्वितीयस्य एकस्यैव पुरुषस्याधिकारः॥

**द्व्याधानं च द्वियज्ञवत्। ६।१।५।२२॥**

भाष्यम्— अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति। तत्रेदमामनन्ति 'क्षौमे वसानौ अग्निमादधीयाताम्' इति। तत्रैषोऽर्थः सांशयिकः किं द्वौ पुरुषौ आदधीयाताम्, उत एकः पुरुष इति। कथं संशयः? उच्यते। इह एतत् श्रूयते 'वसानौ आदधीयाताम्' इति। तत्र वचनमर्थप्राप्तं पुनः श्रूयते। तत् किं पुंलिङ्गसंबन्धार्थम्, उत क्षौमविध्यर्थमिति। उभयोर्विद्यमानत्वात् भवति संशयः। यदि लिङ्गसंबन्धार्थम्, उभौ पुरुषौ आधास्येते। अथ क्षौमसंबन्धार्थम्, तत एकः। किं प्राप्तम्? द्व्याधानं तु द्वियज्ञवत् स्यात्। यथा 'एतेन द्वौ राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्वयोः पुरुषयोः द्वियज्ञो भवति, एवं द्व्याधानं द्वयोः पुरुषयोः स्यात्, ततः अविशेषात्। वसानौ इति श्रवणादेव पुरुषौ गम्येते। न पदान्तरगतेन क्षौमेण अस्य संबन्धः। श्रुत्यवगतं हि श्रवणादवगतम्, पदान्तरसंबन्धं वाक्यादवगतम्, श्रुतिश्च वाक्याद् बलीयसी।

वसानशब्दगतश्चार्थः आधानेन संबध्यते, न क्षौमशब्दगतः। आह, वसानौ इति नायं केवलं पुंलिङ्गे एव, स्त्रीपुंसयोरपि अभिधायको भवति। यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ, शूकरश्च शूकरी च शूकरौ इति। एवं वसानश्च वसाना च वसानौ स्यातामिति। अत्रोच्यते। यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः, तत्र द्वौ पुमांसौ गम्येते। यथा 'द्वौ आनय' इत्युक्तः पुमांसौ आनयति, 'द्वे आनय' इति स्त्रियौ। तेन स्त्रियो वाचकमेकारान्तं द्विवचनं इति गम्यते, औकारान्तमपि द्वयोः पुंसोर्वाचकमिति। यत्र इदानीं स्त्रीपुंसयोः प्रयुज्यमानं औकारान्तं दृश्यते तत्र किं पुमान् सद्वितीयः तस्य निमित्तम्, उत स्त्री सद्वितीया इति। उच्यते। पुंसि सद्वितीये दृष्टः, यथा 'ब्राह्मणौ आनय' इति। इहापि पुमान् सद्वितीयोऽर्थः। तस्मात् पुंनिमित्तः इति गम्यते। अत्राह, प्रयोगो यदि दृष्टं प्रमाणं द्वयोः पुंसोर्दृष्टः, कथमेकस्मिन् स्यात्? अत्रोच्यते। पुंसि च द्वित्वे च दृष्टः इति शक्यते वदितुम्, न द्वयोर्द्रव्ययोरिति। पुंभावं द्वित्वं च एष शब्दो न व्यभिचरति, द्रव्यं पुनर्व्यभिचरति। अपि च युगपदधिकरणवचनतायां द्वंद्वस्मृतेः द्विवचनबहुवचनोपपत्तेश्च। 'प्र मित्रयोर्वरुणयोः' इति च दर्शनात्। इतरेतरयोगे चार्थे समासविधानात् द्वंद्वापवादत्वाच्च एकशेषस्य। यथैव खदिरौ च धवौ च इति निदर्शनं क्रियते, एवमत्रापि द्रष्टव्यम्। तस्मात् पुंसि द्वित्वे च वर्तते इति गम्यते। न च स्त्रीद्वित्वे दृष्टः। अत्राह, ननु अत्रैव दर्शनात् स्त्रीपुंसयोर्वाचक इति गम्यते। अत्रोच्यते। उक्तमेतत् अन्याय्यश्चानेकार्थत्वमिति, इति पुमान् सद्वितीयः अस्यार्थो भविष्यति। स्त्रीपुंसौ चेत्यन्याय्यम्। अथ इदानीं सद्वितीयस्य पुंसो विधौ, कोऽन्यः सहा यः इति, स्त्रिया अनभिधेयत्वात् अवश्यम्भावित्वाच्च द्वितीयस्य, अपरः सद्वितीयः पुमान्। एवं इतरोऽपि इतरेण सद्वितीयः, इतरोऽपि इतरेण इति द्वावेव पुमांसौ उपादीयेते। तस्मादिह द्वौ पुमांसौ आधाने विधीयेते इत्युच्यते। ननु स्त्रीपुंसयोर्वाचकं औकारान्तं द्विवचनं स्मरन्ति। नैषा स्मृतिरस्तीति ब्रूमः। आह भगवतः पाणिनेर्वचनात् स्मृतिमनुमास्यामहे 'पुमान् स्त्रिया' (पा० १।२।६७) इति। उच्यते, न पाणिनेर्वचनम् 'कुक्कुटौ इति औकारः स्त्रीपुंसयोर्वाचकः' इति। कथं तर्हि? यत्र स्त्रीपुंसयोः सहवचनम्, तत्र सद्वितीयो वा पुमान् इति कृत्वा अकारान्तस्य औकारः प्राप्नोति, सद्वितीया वा स्त्री इति कृत्वा एकारः। पुंशब्दस्तत्र साधुः, न स्त्रीशब्द इति पाणिनेर्वचनम्। पुमान् शिष्यते इति च ब्रूते, तेन सुतरां गम्यते पुंसोर्वाचक औकार इति। तस्मात् द्वयोः पुंसोरधिकार इति। ननु क्षौमविधानपरमेतत् वाक्यम्, क्षौमसंबन्धस्य अर्थवत्त्वात्। इतरथा क्षौमवचनमनर्थकं स्यात्। अत्रोच्यते। वसानौ आदधीयातां इत्यस्ति संबन्धः, न क्षौमे आदधीयातामिति। तस्मात् संनिकृष्टमपि न तत् संबद्धमाधानेन। आह, वसानशब्देन सह संबध्यमानं अर्थवद् भविष्यति, वसानसंनिकृष्टे अपि क्षौमे न विधीयेते, विधायकस्य शब्दस्याभावात्। नहि वसानशब्दो विधायकः, न क्षौमशब्दः, नानयोः समुदायः। कस्तर्हि विधातुं शक्नोति? आदधीयातां इत्यत्र या लिङ्। आह, सा खलु विधास्यति, उच्यते, सा स्वशब्दगतमाधानं शक्नोति विधातुं श्रवणात्। विहितत्वादाधानस्य आनर्थक्ये, वसानौ इति शक्नोति वाक्येन विधातुम्। भवति हि वसानयोराधानसंबन्धः, तत्र नात्यन्ताय स्वार्थः परित्यक्तो भवति। क्षौमवसानसंबन्धे तु विधातव्ये 'आदधीयाताम्' इत्याधानं उत्सृज्य विदधानः अत्यन्ताय श्रुतिं जह्यात्। आधानसंनिकृष्टे च लिङ्गे विधातव्ये श्रुतिः विप्रकृष्टं न क्षौमवसानसंबन्धं विधातुमुत्सहते, अर्थविप्रकर्षात्। अपिच उत्सृज्य श्रुतिं क्षौमवसानसंबन्धे विधीयमाने क्षौमं वसानस्य अङ्गं स्यात्, नाधानस्य। तत्र क्षौमाभावेऽपि नाधानं विगुणं इति क्षौमाभावेऽपि आधानं स्यात्। आह, वसानगुणतायां तर्हि कोऽर्थो विवक्ष्यते? उच्यते। न कश्चित्। अत एव अस्य पक्षस्य परित्यागः। आह, क्षौमवसानश्रवणमिदानीं किमर्थमिति? उच्यते। न शक्यते उभयं विधातुं क्षौमं लिङ्गं च। भिद्येत हि तथा वाक्यम्। तस्मात् क्षौमाक्षौमयोः क्षौमशब्दोऽनुवादः। अर्थप्राप्ते च वसने, वसानौ पुमांसौ इत्यर्थः।

ते च प्रायेण विचेष्टमानस्य मलिने क्षौमसदृशे भवतः। विचेष्टमानस्य वा वसने शब्दवती भवतः। तस्मात् द्वयोः पुंसोरभिकार इति।

टुप्—(अवान्तरसंगतिमाह–) यजेत इति संख्या मिथुनाभिप्राया (इदं कारकशक्तेरपि उपलक्षणम्)। आधानेऽपि प्राप्तं वसानौ इति मिथुनद्वयम्, तत् निवार्यते। अत्र पूर्वः पक्षः। यत् आदधीयाताम् (इति अनूद्य) तत् वसानौ इति (पुंद्वयं विधीयते, वसनमपि अनूद्यते प्राप्तत्वात्। ननु क्षौमविधानं युक्तमत आह–) आधाने द्वित्वविधाने (सति) धात्वर्थे किञ्चित् विहितम्, इति श्रुत्यनुग्रहः (स्यात्। ननु क्षौमविधानेऽपि अस्ति श्रुत्यनुग्रहः इति चेत् तत्राह–) इतरत्रापि (पक्षे) यदि आधाने क्षौमं विधीयते, तत्र क्षौमं अधिकरणत्वेन प्राप्नोति (आदधातिना अन्वयार्थे सप्तम्येकवचनान्तत्वस्य स्वीकार्यत्वात्। ततश्च क्षौमोपरि अग्निराधेयः स्यात्)। अथ वसने क्षौमं विधीयते (नाधाने) ततः क्षौमं वसनमात्राङ्गं (सत्) आधानस्यानङ्गत्वात् अनर्थकं स्यात्। (किञ्च) वसानप्रातिपदिकस्यैव औकारेण श्रुत्या संबन्धः। (एवकारो भिन्नक्रमः औकारेणैव श्रुत्या संबन्धः इति) पदान्तरत्वात् (तु) क्षौमसंबन्धे वाक्यं स्यात् (तच्च दुर्बलं श्रुतेः। किञ्च) तादृशस्य (वाक्यगम्यस्य क्षौमवसानसंबन्धस्य विधि–)प्रत्ययेन परामर्शात् अत्यन्तं वाक्यम् (स्यात्)। वसानौ इति संख्यासंख्येयसंबन्धः (द्वित्वपुंस्त्वयोः संबन्धः) शब्देन (गम्यते) तत्र संख्यया नान्यत् संख्येयं ग्राह्यम् (किन्तु पुमानेव। तथा) संख्येयेन च नान्या संख्या, इति (द्वयोरपि एतयोः) इतरेतरनियमः यथा अरुणैकहायन्योः। तस्मात् द्वावत्र पुमांसौ (आधातारौ) प्राप्तौ। (संख्यापूरणार्थम्) स्त्रीग्रहणे (क्रियमाणे सति) संख्यासंख्येययोः (द्वित्वपुंस्त्वयोः) संबन्धो बाध्येत। (ननु स्त्रियाऽपि संख्यासंख्येयसंबन्धसिद्धिः, अत आह–) द्वितीयस्य पुंसः अस्ति पर्युपस्थापकः (औकारः) यथा घटौ आनीयेतामित्युक्ते द्वितीयो घट एवानीयते नाश्वादिः, एवमिहापि।

'आह। वसानौ इति नायं केवलं पुंलिङ्ग एव (पुंलिङ्गस्यैव), स्त्रीपुंसयोरपि अभिधाता (अभिधायकः। भाष्ये तु अभिधायकः इत्येव पाठः) भवति' इति (भाष्यम्)। अस्य (द्विवचनस्य) न पुंद्वित्वविशिष्टं द्रव्यमभिधेयम्, न च स्त्रीपुंसद्वित्वविशिष्टम् (चशब्दः अप्यर्थः)। तस्मात् उभयोः (अपि) यत् सामान्यम्, तत् वाच्यम्। किं तत्? पुंस्त्वं द्वित्वं च। तच्च प्राप्तम्, न विधेयम्। तस्मात् क्षौमं विधीयते इति अन्तर्णीताभिप्रायः परिचोदयति। अथवा शब्दार्थमेव उभयप्रकारं (स्त्रीपुंसयोर्द्वित्वं पुंद्वित्वं चेति) मन्यते, (उभयोः) प्रयोगदर्शनात्। (भाष्योक्तां शङ्कां पूर्वपक्षी परिहरति–) 'अत्रोच्यते। यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः' इति (परिहारभाष्यस्य–) कोऽभिप्रायः? (अभिप्रायं दर्शयति–) 'कुक्कुटौ आनय मिथुनं करिष्यामः' इत्यत्र सामर्थ्यात् द्वितीया स्त्री आनीयते। यत्र वा स्त्रीपुंसौ अधिकृतौ, यत्र वा औकाराभिधेयं प्राप्तत्वात् न विधीयते, तत्र स्त्रीपुंसौ गृह्येते। इह इदं त्रितयमपि नास्ति। अतः (कारणत्रयाभावात्) औकारः (स्वशक्त्या) द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुम्, न स्त्रियम्। अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयम्। (एतदेव व्यनक्ति–) द्वयोरपि पुंसोः प्रयुक्तः (द्वौ पुरुषौ इति, तथा) स्त्रीपुंसयोरपि। (तत्रोभयोर्वाच्यत्वे) अनेकशक्तिकल्पनाभयात् पुंस्त्वं द्वित्वं चास्य वाच्यं इत्यध्यवसीयते। युगपदधिकरणवचनतायां द्वंद्वस्मृतेः इत्येवमादिना (भाष्येण) विग्रहपर्यालोचनयाऽपि यथा संख्यापूरणी स्त्री न गृह्यते, तत् प्रतिपाद्यते। कथम्? (धवखदिरौ इत्यादौ) द्वंद्वे धवशब्दः आत्मीयमर्थं इतरापेक्षं (खदिरापेक्षम्) अभिधत्ते। इतरोऽपि (खदिरशब्दोऽपि) इतरापेक्षं (धवापेक्षं) इति ईदृशेऽर्थे (द्वंद्वः) स्मर्यते। 'द्विवचनबहुवचनोपपत्तेश्च' इति (भाष्यं व्याचष्टे–) यदि धवशब्दः खदिरनिरपेक्षमात्मीयमर्थं अभिधत्ते, तत एकत्वात् तस्य एकवचनबहुवचने न स्याताम्। दृश्येते च (द्विवचनबहुवचने)। तस्मात् तुल्यं द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिसंभवः। 'प्र मित्रयोर्वरुणयोः' इति च दर्श-

नात् ( ऋसं. ७।६६।१ ) इति । न द्वौ मित्रौ स्तः, न वरुणौ, तत्र (प्रत्येकम्) द्विवचनं नोपपद्यते, अन्योन्यापेक्षायाम् ( तु ) घटते ( ततश्च द्वंद्वे युगपद्वचनता निश्चीयते इति । इतश्चैवमित्याह– ) 'इतरेतरयोगे चार्थे द्वंद्वविधानात्' ( समासविधानात् इति भा–पाठः ) इति चकारः समुच्चय– अन्वाचय– इतरेतरयोग– समाहारेषु वर्तते । तत्र समुच्चयान्वाचययोः नास्ति समासः, समाहारेतरेतरयोगयोरेव ( तु समासः )। ततोऽपि युगपदधिकरणतायाम् ( एव ) द्वंद्वः ( एषितव्यः । प्रकृते किमायातं इत्यत आह– ) द्वंद्वापवादत्वाच्च एकशेषस्य इति । ( तद् व्याचष्टे– ) यो हि द्वंद्वस्य धर्मः (अनेकेषाम्) इतरेतरयोगो नाम, स एकशेषस्यापि । इयांस्तु विशेषः ( द्वंद्वैकशेषयोः ), एकत्र ( द्वंद्वे ) शब्दश्च अर्थश्च द्वावपि भिन्नौ, इतरत्र ( एकशेषे ) अर्थो भिन्नः, शब्द एक एव । ( यत्र शब्दश्च अर्थश्च द्वावपि भिन्नौ तत्र द्वंद्वः धवखदिरादौ । यत्र तु अन्यतरस्यापि ऐक्यम्, तत्र एकशेषः अक्षाः पादाः इत्यादौ वक्रदण्डौ इत्यादौ च )। वसानौ इत्येकशेषत्वात् द्वितीयेन पुंसा भवितव्यम् । पुमान् हि श्रूयते द्विवचनश्रवणात् । स इतरसव्यपेक्षः, तस्य पुमानेव द्वितीयः । पुंसः अस्ति पर्युपस्थापकम् ( औकारः ), न स्त्रियाः । यत्र स्त्रीपुंसौ सहोच्चार्येते, तत्र पुमान् सद्वितीयः इति औकारान्तः प्राप्नोति, स्त्री सद्वितीया इति एकारान्तः । ( वसानौ इत्यत्र तु– ) औकारः प्रयुज्यमानः ( पुंद्वित्वे ) साधुः, ( तस्य ) न स्त्रीपुंसौ वाच्यौ ।

[ अस्यैव सूत्रस्य टुप्टीकाकृतैव द्वितीया व्याख्या कृता । सा च आनन्दाश्रमीये पुस्तके चतुर्विंशसूत्रव्याख्योत्तरं मुद्रिताऽपि अस्माभिः योग्यतया अत्रैव लिख्यते । एवमुत्तरसूत्रेऽपि । सा चेयं व्याख्या अस्मदीये लिखिते पुस्तके नास्ति । तथापि तन्त्ररत्नेन व्याख्यातत्वात् संगृह्यते ]।

टुप्– ( एतदेव सूत्रं विस्पष्टीकरणाय वार्तिककारेण पुनर्व्याख्यातम् ) पूर्वाधिकरणे एकवचनं मिथुनाभिप्रायं संसर्गाभिप्रायं ( दंपती निष्कृष्यासङ्गवृत्तिकर्मत्वाभिप्रायम् ) वा इत्युक्तम् । इहापि ( वसानौ इति– ) द्विवचनं तथैव द्वे कारकशक्ती द्वे च ( वाशब्दार्थे चशब्दः ) मिथुने ब्रवीति इत्यनेन प्रसङ्गेन आरभ्यते । ( पूर्वापवादार्थम् । तदनेन अधिकरणसंगतिः पूर्वपक्षहेतुश्च प्रदर्शितः )। क्षौमाधानसंबन्धो न ( विधीयते ) वसान–( शब्द– ) व्यवधानात् । ( इतश्चैवमित्याह– ) 'वसानौ आदधीयाताम्' इति सामानाधिकरण्यात् उपपद्यते संबन्धः । 'क्षामे आदधीयाताम्' इति सामानाधिकरण्याभावात् नास्ति संबन्धः । ( दोषान्तरमाह– ) संबध्यमानं च आधानस्य अधिकरणं स्यात् ( क्षौमे इति सप्तमी स्यात्, तदधिकरणकं च अग्नेराधानम्, इति । तच्चानिष्टम् । शङ्कते– ) क्षौमवसानसंबन्धे ( सति ) न सामानाधिकरण्यम् ( बाधकम्, ) अधिकरणदोषश्च नास्ति, इति चेत् । ( उत्तरम्– ) वसनक्रिया कर्तुरुपसर्जनभूतत्वात् नान्येन संबन्धयितुं शक्यते । ( अथ प्रधानभूतेन कर्त्रैव क्षौमं संबध्यते, तत्राह– ) कर्त्राऽपि नास्ति संबन्धः । ( कुतः ? ) नहि कारकाणां मिथः संबन्धः । ( अथ– ) वसनक्रिया कर्तुरुपसर्जनभूताऽपि पुनर्विपरिवृत्य ( क्षौमेण ) संबध्यते इति चेत् ( उत्तरम्– ) न । ( कुतः ? ) विधीयमाना हि क्रिया भाव्यमानत्वात् ( कर्तव्यत्वात् ) कारकैः संबध्यते । अविधीयमानायाः ( तु ) न कारकैर्भवति संबन्धः । ( कस्मात् इत्यत आह– ) अविधीयमाने ( वसने ) क्षौमं संबध्यमानं लौकिकेऽपि स्यात् । तत्र अदृष्टार्थता ( क्षौमस्य ) स्यात् । ( तस्मान्न विपरिवृत्त्यापि संबन्धः )। किञ्च ( अस्मिन् पक्षे ) क्षौमवसानयोः संबन्धं आदधीयातां इति ( विधिः ) कुर्यात् । इति अत्यन्तं वाक्यम् ( स्यात् इति श्रुतिबाधः । बाधमेवाह– ) प्रत्ययः उपश्लेषलक्षणया ( एकपदप्रत्यासत्तिलक्षणया ) श्रुत्या धात्वर्थं विधत्ते, तदङ्गं वा ( किञ्चित् )। इह द्वयमपि न विधत्ते धात्वर्थम्, धात्वर्थस्य वा अन्यत्, तत्परायाः श्रुतेः ( धात्वर्थतदङ्गपरायाः विधिश्रुतेः ) अभावात् । ( मत्पक्षे तु आधानाङ्गतया ) वसानौ इति ( पुंद्वये ) विधीयमाने धात्वर्थे किञ्चिद्विधानात् श्रुतिः अनुगृहीता ( भवति । किञ्च ) वसानशब्दस्यापि एकपदोपात्तत्वात् औकारेण श्रुत्या संबन्धः । क्षौमेण ( तु संबन्धे ) पदान्तरोपात्तत्वात् वाक्यम् । श्रुतिश्च वाक्यात् बलीयसी।

माणो विधिः अपूर्वीयपदार्थविषय एवोचितः, द्वारकार्यस्य तु तन्निर्वाहकत्वम्। अतो नोचित एवायमौचित्यभ्रमो मन्दानामिति। नापि द्वितीयः, समभिव्याहारानुपपत्त्या हि लक्षणा भवति, यथा 'गङ्गायां घोषो वसति' इति। न चात्र स्रुक्पदार्थस्य शमीमयत्वसमभिव्याहारो नोपपद्यते। समभिव्याहृतपदार्थावगतविशिष्टार्थानुपपत्त्या तु यत् कल्पनीयं तल्लाक्षणिकम्। यथा 'पीनो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनम्। कल्पनाभयेन तु लक्षणायां तस्यापि लाक्षणिकत्वप्रसङ्गः। तेन अपूर्वीयशमीसमभिव्याहारानुपपत्त्या प्रकृतिवदेव स्रुचामपि अपूर्वीयत्वं लक्ष्यताम्, तदतिरिक्तं तु करणोपकारादिकमत्रापि कल्पनीयमेवेति। किञ्च स्रुक्कार्ये शमीविधौ पदश्रुतेरप्यानर्थक्यं (?) तद्विकारबाहुल्ययोरसंभवात्। अथैतद्दोषपरिहारार्थमेवमभिधीयते। यत्तु प्रकृतिक्लृप्तकरणोपकारसंबन्धिद्वारकार्यसाधनस्रुक्पदार्थप्रधानप्रकृतित्वेनैव शमी विधीयते इति, तेन करणोपकारसंबन्धिद्वारकार्यपुरस्कारेण स्रुचां शमीविधिरित्युच्यते। ननु स्रुगर्थपरित्यागेन निकृष्ट एव कार्यविधिरिति, एवं तर्हि सुतरामेव न कार्यलक्षणा। यतः समभिव्याहारानुपपत्त्या हि लक्षणा भवति। न च शमीसमभिव्याहारः स्रुक्पदार्थस्य करणोपकारसंबन्धिद्वारकार्यलक्षणामन्तरेण नोपपद्यते। अपूर्वीयत्वमात्रलक्षणयैव प्रकृतिविकाराभावस्योपपन्नत्वादेव हि उद्देश्यगतविशेषणान्तरगतविवक्षा, तदा वाक्यभेदप्रसङ्गः स्यात्। अतो न कथञ्चिदपि लक्षितकार्याश्रये विधिः, किन्तु यथाप्रकृति विकृतावपि अपूर्वीयपदार्थाश्रय एवाङ्गविधिः। तथा च सति वाक्यप्रकरणसामञ्जस्यानुरोधेन बर्हिर्वत् अङ्गप्रधानार्थत्वेन शम्यादिविधिरिति बर्हिर्मुद्रार्थः। भवतु वा प्रकृतिक्लृप्तकरणोपकारसंबन्धिद्वारकार्याश्रयो वैकृतांशो विधिः, तथापि होमाभिनिर्वृत्तिसंमार्गरूपकार्यद्वयस्यापि प्रात्यात्मिककरणोपकारसंबन्धिद्वारकार्यत्वेन प्रकृतिक्लृप्तत्वात् स्रुक्कार्यमात्रस्यैव द्वारकार्यत्वमिति न संमार्गस्रुग्वर्जनम्। न चैकरूप्यमेव परद्वारकार्यविधेः, अङ्गप्रधानगतनानाविधऋत्विगादिकार्येषु यजमानादिविध्यभावप्रसङ्गात्। न च भिन्नापूर्वगृहीतत्वात् नैकविधिविषयत्वमिति वाच्यम्। यतः प्रकृत्यनवगतस्वरूपपर्यालोचनेन हि विकृतौ कार्याश्रयत्वस्वीकारः। तत्र च यथा व्रीह्यादिपदार्थानुवादेन विहितानामवघातादीनां करणोपकारसंबन्धिद्वारकार्यनिष्पादनेन प्रकृतौ अपूर्वीयत्वनिर्वाहावगमात् विकृतावपि तस्मिन्नेव कार्ये अङ्गविधिः, तथा अङ्गप्रधानस्य धारणहविरासादनादिपदार्थानुवादेन विहितानां बर्हिराद्यङ्गानामङ्गप्रधानहविषां भिन्नापूर्वगृहीतत्वेन तथाक्षिप्तसाधनस्यापि भिन्नापूर्वगृहीतत्वे सत्यपि वाक्यप्रकरणानुरोधार्थं अपूर्वोपकारकतासाधर्म्येण अङ्गप्रधानसाधारणहविरासादनमात्रस्यैव बर्हिषां अपूर्वीयनिर्वाहाय करणोपकारसंबन्धिद्वारकार्यत्वस्वीकारात् विकृतावपि अङ्गप्रधानसाधारणस्रुक्त्वानुवादेन विधीयमाना शमी संमार्गस्रुचा अङ्गापूर्वगृहीतत्वेऽपि अपूर्वोपकारकतासाधर्म्येण स्रुक्कार्यमात्रमङ्गप्रधानसाधारणं स्रुक्शब्दलक्षितं करणोपकारसंबन्धिद्वारकार्यमाश्रयिष्यति। न च प्रकृतौ अङ्गहविषां नाङ्गापूर्वगृहीतत्वम्, 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्गृह्णाति' इत्यादिवाक्यैश्चतुर्गृहीतजौहवाज्यस्य दीक्षणीयावाङ्नियमन्यायेन केवलप्रयाजार्थप्रतिपादकत्वात् तद्बलेन प्रयाजापूर्वेणैव गृहीतत्वात्। एतदुक्तं भवति प्रकृतावेव अङ्गविधेः कार्यद्वयपर्यन्तत्वमवगतम्। यत्र साधारणानुवादेन अङ्गविधिः, तत्र साधारणमेव द्वारकार्यम्। अङ्गप्रधानसाधारणानुवादेन पुनर्यत्राङ्गविधिः, तत्रोपकारकतासाधर्म्येण साधारणमेव द्वारकार्यमिति लक्षितकार्याश्रयत्वेऽपि बर्हिर्मुद्रार्थः। अथोच्यते, अङ्गप्रधानसाधारणे हविरासादनसंबन्धे बर्हिषां न साधारणानुवादमात्रप्रयोजनम्, किं तर्हि? अङ्गाकाङ्क्षापि। न चात्र सा समस्ति, प्राकृतजातिनिराकाङ्क्षत्वात् इत्युक्तमेवेति। तदयुक्तम्, अङ्गहविरासादनस्यापि लोकानुसारेणैव हविराश्रयाद्दवत् किञ्चित्संनिहितद्रव्यनिराकाङ्क्षत्वेन असंबन्धप्रसङ्गात्। अथ लोकप्राप्तितो वैदिकप्राप्तेर्बलवत्त्वात् तद्बाधेनैव बर्हिः संबध्यते, तत् किमिदानीं आतिदेशिकप्राप्तेः औपदेशिकप्राप्तिर्न बलवती, यत औपदेशिकेन न बाध्येत। अथ लौकिकप्राप्तिः अनियताधारद्रव्यविषयत्वेन संदिग्धरूपत्वात् नाङ्गहविरासादनस्य नैराकाङ्क्ष्यम्। अतिदेशप्राप्तेस्तु नियतपर्णतादिविषयत्वात् सत्यपि दौर्बल्ये नैराकाङ्क्ष्यमेव संमार्गस्येति। तन्न, अतिदेशप्राप्तेर्निरन्तरं

औपदेशिकबाधदर्शनात् । यावदुपदेशो योग्यानुपलम्भो न भवति, तावत् संदिग्धत्वात् तस्यां चावस्थायां बलवदसंदिग्धप्रमाणेन बाध एवेति नास्ति बर्हिर्मुद्रानिःस्तरणम् । किञ्च यथा अङ्गप्रधानसाधारणानुवादेनापि विधीयमानस्य प्रकृतिलब्धसाधननिराकाङ्क्षे अङ्गे प्रदेशो न भवति, तावत् संदिग्धत्वात् तस्यां चावस्थायां बलवदसंदिग्धप्रमाणेन बाधात् 'ये यजमानास्त ऋत्विजः' 'यो होता सोऽध्वर्युः' इत्यत्र अङ्गकार्येषु प्राकृतऋत्विगध्वर्युनिराकाङ्क्षेषु यजमाने होतृसंबन्धो न स्यात् । तथा च सति वरणमानमनार्थत्वात् सैव (?) न स्यात्, 'विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्' इति न्यायविरोधः स्यात् । अतो यत्किञ्चिदेतदिति । अत एव आतिदेशिकबाधभयेनापि नोपदेशसंकोचः, तत्रापि अङ्गसंबन्धिनि ऋत्विगध्वर्युकार्ये बाधभयेनैव यजमानहोतृनिवृत्तिप्रसङ्गात् । सौमिकमहावेदिविधिस्तु दीक्षणीयाऽऽतिथ्यादेर्नेष्यते एव । 'चिकर्षया च संयोगात्' इत्यत्र महावेदिः सर्वाङ्गापि एतज्ज्योतिष्टोमार्थत्वस्यैव वार्तिककारपादैरुक्तत्वात् । वेदेरपि प्रसङ्गन्यायस्तु भाष्यकारोक्तप्रयोजनदूषणाय भाष्यकारमतेनैवोक्तः । न च तन्मतेऽपि अतिदेशबाधभिया महावेदिविधेर्दीक्षणीयाऽऽदिपरित्यागः, किन्तु क्वचित् बाधकत्वं क्वचित् बाधानपेक्षत्वं क्वचित् प्राप्तकार्याश्रयत्वमित्यादिविधिवैरूप्यभयेनैव । एवं 'षड्भिर्दीक्षयति' इत्यत्रापि नातिदेशबाधभयेन उपदेशसंकोचः । किन्तु प्राकृतषणमन्त्रकार्यासु दीक्षाऽऽदिषु वैकृतषणमन्त्रसंबन्धे 'द्वादश जुहोति' इति वैकृताभ्यस्ताः षड् जुहोतयः श्रूयन्ते । तत्र किं वैकृतैरेव मन्त्रैरभ्यासः क्रियताम्, प्राकृतैर्वा इति संदेहे उपदेशाभावेन कल्पनीयोऽयमभ्याससंबन्धः अतिदेशानुग्रहार्थं प्रकृतातिदिष्टमन्त्रषट्कस्यैव कल्प्यते । इह तु उपदेशत एव स्रुङ्मात्रसंबन्धो नातिदेशबाधभिया संकोचमर्हतीति वैषम्यम् ।

यत्तु कैश्चित् 'यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र विकृतौ अतिदेशप्राप्तस्य चतुर्मुष्टिनिर्वापस्य अन्यतरबाधेनोपपत्तौ नोभयबाधः इति मुष्टिमात्रबाधनमत्र दृष्टान्तत्वेन दर्शितम्, तदयुक्तम् । नहि तत्रौपदेशिको बाधः, किं तर्हि उभयाबाधे चतुर्मुष्टिव्रीहीणां पञ्चशरावौदनानिष्पत्तेः अर्थासंभवेन आवश्यके अन्यतरबाधे प्राथम्यात् संख्याऽनुग्रहेण मुष्टिमात्रबाधो युक्त एव । अत्र तु औपदेशिकत्वात् बाधस्य अतुल्यत्वमिति न किञ्चिदनुपपन्नमिति । अथ अङ्गानामेव आतिदेशिकी प्राप्तिः, अनङ्गानां तु संमार्गस्रुचां विकृतावपि औपदेशिकी, इतरथा पवमानेष्टेरपि अतिदेशप्रसङ्गः । तेन उपदेशयोस्तुल्यबलत्वात् दुर्बलातिदेशोपनीतप्रधानस्रुचामेव बाध इति । मैवम् । किमतिदिष्टाङ्गाक्षेपलभ्यत्वात् अङ्गानामौपदेशिकत्वम्, अथ संमार्गोद्देशेन विहितानां स्रुचां प्रकृतिविकृतिसाधारण एवोपदेशः इति । न तावदाद्यः कल्पः, अतिदेशाक्षेपलभ्यस्य अतिदेशातोऽपि जघन्यत्वेन सुतरां बाध्यत्वात् । नापि द्वितीयः, तथा च सति विकृतिश्रुतोऽपि प्रयाजोद्देशेन कृष्णलहोमः प्रकृतौ अप्रकृतावपि प्रसज्येत । न च पवमानेष्ट्यतिदेशप्रसङ्गः, प्रकृतावेव 'यदाहवनीये जुहोति' इति बर्हिर्निष्पन्नस्य आहवनीयस्य अङ्गत्वविधानात् विकृतावपि तथाभूतस्यैव तथा प्राप्तत्वात् । अथोच्येत आतिदेशकत्वेऽपि अस्ति प्राप्तिकालवैषम्यम्, यतः करणोपकारस्य अङ्गजन्यत्वेन प्रथमं संबन्धः, पश्चादङ्गाभिसंबन्धः । तत्र प्रथमप्राप्तहोमः स्रुङ्निराकाङ्क्षोऽयं शमीमयीविधिः न चरमभाविसंमार्गस्रुक्प्राप्तिकालमपेक्षते इति । तदयुक्तम् । तथा सति बर्हिर्विधिरपि ग्राहकप्रकरणाभ्यां प्रथमं प्राधानीयहविरासादनस्यैव प्राप्तत्वात् उपकारतामात्रेण चरमभाविनीमङ्गहविरासादनप्राप्तिं अतिलङ्घ्यात् (अतिलङ्घयेत्) बर्हिषां प्रधानमात्रसंबन्धः स्यात् । यथा च तत्र तथा अत्रापीति प्राप्तिकालवैषम्येऽपि च बर्हिर्मुद्रार्थः । विशेषतश्च अत्र प्राप्तिकालवैषम्यमपि न संभवति । यतो येन उपकारपृष्ठभावेन हि अङ्गसंबन्धो भवन् यथाभूतानामेव उपकारजननसामर्थ्यं प्रकृतौ अवगतम्, तथाभूतानामेव आतिदेशिकः संबन्धो वक्तव्यः । स्वाङ्गसहितस्यैव प्रकृतौ उपकारजनकत्वावगमात् सहैव प्राप्तेः । एतदपि यत्किञ्चिदिति । एतच्च सर्वं संमार्गस्रुचां दीक्षणीयावाङ्नियमवत् संमार्गापूर्वगृहीतत्वमभ्युपेत्योक्तम् । परमार्थतस्तु न एतत्संभवति, यतः अधिकारविधिसंनिधिश्रुतानामङ्गानां

प्रथममनभिव्यक्तस्यापूर्वाणामेव अधिकारविधिगृहीतत्वात् संमार्गस्रुचामपि अधिकारापूर्वीयत्वमेव। किञ्च एकवाक्योपात्तानां सर्वत्र एककार्यपरत्वव्युत्पत्तेः एकस्मिन्नेव 'स्रुचः संमार्ष्टि' इति वाक्ये संमार्गस्य प्रधानापूर्वपरत्वं स्रुचां संमार्गापूर्वपरत्वमिति व्युत्पत्त्यनुरोधादपि अयुक्तम्। तेन सर्वेषां प्रधानापूर्वपरत्वमेवेति।

यत्तु स्ववाक्यस्था हि कार्यावगतिर्बलीयसीत्युक्तम्। तत् एकवाक्यगतसर्वपदार्थानां श्रुत्यनुसारेण एककार्यपरत्वाविरोधे सतीति द्रष्टव्यम्। दीक्षणीयायां तु 'आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः' इति वाक्येन द्रव्यदेवताविशिष्टस्यैव दीक्षणीयायाः अधिकारापूर्वान्वयोत्तरकालं संभूयोपकारजननार्थे अपूर्वान्तराभिव्यक्तौ ज्ञातायां 'यावत्या वाचा कामयते, तावत्या दीक्षणीयायामनुब्रूयात्' इत्यनेन वाक्येन अन्तरङ्गलक्षणया अपूर्वान्वयमात्रपरेण युक्तं वाङ्नियमस्य तन्मात्रप्रतिष्ठितत्वम्, न चेह तथेति वैषम्यम्। एवं च सति संमार्गस्रुचामपि प्रधानापूर्वीयत्वात् होमस्रुचामपि अविशेषात् शमीमयीत्वमेवेति। यदपि प्रसङ्गन्यायनिराकरणार्थे स्रुचां प्रयोगात् बहिरुपादानं सौमिकवेदिवैधर्म्यमुक्तम्, तदयुक्तमुक्तम्, विकल्पासहत्वात्। तथाहि, यदेतत् प्रयोगानुपात्तानामपि नानावृक्षीयस्रुचां यज्ञदेशानयनम्, तत् किं संमार्गार्थेन प्रयोगविध्युक्तं संपातायातं वा? पूर्वस्मिन् कल्पे वरुणप्रघासार्थानीतानां शमीमयीनां तत्रापि प्रसङ्गो दुर्वारः। एवमेव अग्निहोत्रोपात्तानां यजमानगृहवर्तिनीनामपि नानावृक्षीयस्रुचां वरुणप्रघासदेशसंमार्गानयनं संपातायातत्वं च निराकरणीयमित्यलमतिविस्तरेणेति। तस्मात् यथावार्तिकमेव स्रुगुदाहरणप्रयोजनमभिधीयते। तथाहि स्रुक्संमार्गस्य प्रकृतौ कपिञ्जलन्यायेन तिसृभिः स्रुग्भिः साधितत्वात् पात्रविवृद्धावपि प्रकृतौ पशुचातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे। सिद्धान्ते तु प्रयोजनवत्त्वेन सर्वा एव स्रुचः संमार्ष्टव्याः, संस्कारस्य प्रतिप्रधानावृत्तित्वात्। उदाहरणान्तरप्रयोजनानि तु वार्तिके एव सुगमानीति। सूत्रं तु—अवहन्त्यादिवत् द्वितीयाश्रुतेस्तुल्यत्वात् इतरैरवहन्त्यादिभिः संमार्गादिसमानधर्मं स्यात् गुणकर्मेत्यर्थः। तौता.



* धर्ममीमांसाशास्त्रं षोडशभिरध्यायैः षट्सप्तत्या पादैः सिद्धम्। संकर्ष. ४।४।१०.

* धर्ममोक्षसंबन्धि यत् तद्वेदप्रभवम्, यत्तु अर्थसुखविषयं तल्लोकव्यवहारपूर्वकं इति विवेक्तव्यम्। वा. १।३।१।२ पृ. १६६.

**धर्मलक्षणम्। चोदनासूत्रम्॥**

**चोदनालक्षणोऽर्थो धर्मः। १।१।२।२॥**

भाष्यम्— स हि (धर्मः) निःश्रेयसेन पुरुषं संयुनक्ति इति प्रतिजानीमहे। तदभिधीयते। चोदनालक्षणोऽर्थो धर्मः। चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमि इति हि दृश्यते। लक्ष्यते येन, तत् लक्षणम्, 'धूमो लक्षणमग्नेः' इति हि वदन्ति। तया यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्ति इति प्रतिजानीमहे। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टं इत्येवंजातीयकमर्थं शक्नोति अवगमयितुम्, नान्यत् किञ्चन इन्द्रियम्। (अत्र वैद्यनाथी— "नान्यत् किञ्च इति पदच्छेदः। तथा च शब्दस्यैव तादृशार्थबोधनसामर्थ्यम्, न तु तद्व्यतिरिक्तप्रमाणसामान्यस्य। तत्रैव हेतुः नेन्द्रियं इति। अथवा 'नान्यत्' समर्थमित्यर्थः। 'किञ्च' इति प्रश्नार्थे कुतः इत्यर्थः। 'नेन्द्रियम्' इति तु पूर्ववदेव हेतुः।" इति। अथ 'नान्यत् किञ्चन इन्द्रियम्' इत्यत्र '**प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत्। नान्यत् किञ्चेति वा छेदः सामान्यार्थः प्रयुज्यते॥**' (१।१।२।२ श्लो. १५) '**तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम्। किञ्चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते॥**' १६॥ अत्र वार्तिके त्रेधा व्याख्यातम्। 'नान्यत् किञ्चन इन्द्रियम्' समर्थं इति। 'नान्यत् किञ्चन प्रमाणं समर्थं यथा इन्द्रियम्' इति। 'नान्यत् प्रमाणं समर्थम्। किञ्च कस्मात् इत्यर्थः, यस्मात् नेन्द्रियं समर्थम्, तस्मात् इन्द्रियपूर्वकत्वात् इतरस्य प्रमाणस्य न तत् समर्थम्' इति—के.)।

ननु अतथाभूतमप्यर्थं ब्रूयात् चोदना, यथा यत्किञ्चन लौकिकं वचनम् 'नद्यास्तीरे फलानि सन्ति' इति। तत् तथ्यमपि भवति, वितथमपि भवतीति। उच्यते।

विप्रतिषिद्धमिदमुच्यते 'ब्रवीति, वितथं च' इति। 'ब्रवीति' इति उच्यते 'अवबोधयति, बुध्यमानस्य निमित्तं भवति' इति। यस्मिंश्च निमित्तभूते सति अवबुध्यते, सोऽवबोधयति। यदि च चोदनायां सत्यां अग्निहोत्रात् स्वर्गो भवति इति गम्यते, कथमुच्यते 'न तथा भवति' इति। अथ न तथा भवतीति, कथमवबुध्यते। असन्तमर्थमवबुध्यते इति विप्रतिषिद्धम्। न च 'स्वर्गकामो यजेत' इत्यतो वचनात् संदिग्धमवगम्यते 'भवति वा स्वर्गो न वा भवति' इति। न च निश्चितमवगम्यमानं इदं मिथ्या स्यात्। यो हि जनित्वा प्रध्वंसते 'नैतदेवम्' इति, स मिथ्या प्रत्ययः। न च एष कालान्तरे पुरुषान्तरे अवस्थाऽन्तरे देशान्तरे वा विपर्येति, तस्मादवितथः (प्रत्ययः)। यत्तु लौकिकं वचनम्, तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा, अवितथमेव तत्। अथ अप्रत्ययितात् अनिन्द्रियविषयं वा, तावत् पुरुषबुद्धिप्रभवमप्रमाणम्। अशक्यं हि तत् पुरुषेण ज्ञातुम्, ऋते वचनात्। अपरस्मात् पौरुषेयात् वचनात् तदवगतमिति चेत्, तदपि तेनैव तुल्यम्। नैवंजातीयकेषु अर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु। ननु अविदुषामुपदेशो नावकल्पते, उपदिष्टवन्तश्च मन्वादयः। तस्मात् पुरुषाः सन्तो विदितवन्तश्च। यथा चक्षुषा रूपमुपलभ्यते, इति दर्शनादेव अवगतम्। उच्यते। उपदेशा हि व्यामोहादपि भवन्ति, असति व्यामोहे वेदादपि भवन्ति। अपिच पौरुषेयात् वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न 'एवमयमर्थः' इति। विप्लवते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति। ननु सामान्यतोदृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यात् इदमपि वितथमवगम्यते। न, अन्यत्वात्। नहि अन्यस्य वितथभावे अन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव। नहि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति। अपिच पुरुषवचनसाधर्म्यात् वेदवचनं वितथं इत्यनुमानं व्यपदेशात् अवगम्यते। प्रत्यक्षस्तु वेदवचनेन प्रत्ययः। न च अनुमानं प्रत्यक्षविरोधि प्रमाणं भवति।

तस्मात् चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया? उच्यते। य एव श्रेयस्करः, स एव धर्मशब्देनोच्यते। कथमवगम्यताम्? यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्' इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति। उभयमिह चोदनया लक्ष्यते, अर्थः अनर्थश्चेति। (अत्र वार्तिकानुसारेण न्यायरत्नाकरे उक्तम्—'भाष्यं चैवं योजनीयम्। उभयमिह चोदनया लक्ष्यते साध्यं साधनं च। साध्यमपि द्विविधं अर्थोऽनर्थश्च इति। श्लोवा. २२४। बृहत्यां तु नेयं कष्टता स्वीकृता, किन्तु सरलतयैव अर्थोऽनर्थश्चेति उभयं चोदनया लक्ष्यते' इत्यर्थकत्वेनैवोक्तम्। के.) कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः? यः प्रत्यवायाय श्येनो वज्रः इषुः इत्येवमादिः। तत्रानर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्। कथं पुनरसौ अनर्थः। हिंसा हि सा। हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतया उपदिश्यते। उच्यते। नैव श्येनादयः कर्तव्या विज्ञायन्ते। यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः। 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति 'नाभिचरितव्यम्' इति।

ननु अशक्तमिदं सूत्रं इमावर्थौ अभिवदितुम्। चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः अर्थश्च धर्मो नानर्थ इति। एकं हीदं वाक्यम्, तदेवं सति भिद्येत। उच्यते। यत्र वाक्यादर्थः अवगम्यते तत्रैवम्। तत्तु वैदिकेषु, न सूत्रेषु। अन्यतः अवगते अर्थे सूत्रं एवमर्थमिदं इत्यवगम्यते। तेन च एकदेशः सूत्र्यते इति सूत्रम्। तत्र भिन्नयोरेव वाक्ययोः इमौ एकदेशौ इत्यवगन्तव्यम्। अथवा अर्थस्य सतः चोदनालक्षणस्य धर्मत्वमुच्यते इत्येकार्थमेवेति।

बृहती— सर्वविचाराणां प्रतिज्ञापूर्वकत्वात् तदभिधीयते। 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति। कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति 'तल्लक्षणो धर्मः'

इति वदन्। ( न कार्यावगमं विना प्रवृत्तिरुपपद्यते। तेन कार्याभिधायकतयैव वचनस्य प्रवर्तकता। कार्याभिधायकेन च कार्यमेव लक्ष्यते। तेन कार्ये एव वेदः प्रमाणम्। चोदनालक्षणसूत्रेण चोदनालक्षणः कार्यरूप एवार्थो न सिद्धरूपः इति प्रतिज्ञातम्। तदनेन भाष्येण व्याख्यायते। धर्मशब्दश्च वेदार्थमात्रपरः )। कार्यरूप एवेति दर्शयति '**चोदना हि भूतम्**' इति। यदि कार्ये एव चार्थे वेदस्य प्रामाण्यम्, कथं तर्हि भूताद्यर्थावगतिः मन्त्रार्थवादेषु। तेषामपि हि कार्यार्थतां द्वितीये पादे वक्ष्यते। तदुक्तम् '**शक्नोति अवगमयितुम्**' इति। न च प्रमाणान्तरावगम्योऽयमर्थः इति '**नान्यत् किंचनेन्द्रियम्**' इति दर्शयति। ( भूतादिकोऽप्यर्थः कार्यान्वयित्वात् तेन रूपेण कार्य एव। तेन चोदनैव कार्यप्रतिपादकमेव वाक्यं भूतादिकमपि अवगमयितुं शक्नोति इति कार्यरूप एव वेदार्थः इति न प्रतिज्ञाहानिः )। '**ननु अतथाभूतमपि अर्थं ब्रूयात् चोदना**' इति शब्दस्य अर्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाह। कथं पुनः अर्थासंस्पर्शिता शब्दस्य ? उच्यते। अर्थसंस्पर्शि हि इष्यते प्रमाणम्। तस्य बाधकज्ञानोत्पत्तौ सत्यां पुनः प्रतिपक्षविज्ञानं तन्निमित्तमेवोत्पद्यते। शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने पुनः शब्दनिमित्तमेव प्रतिपक्षविज्ञानमुदेति अङ्गुल्यग्रे हस्तियूथमिति। तथा न शुक्तिकारजतादिषु अन्यार्थस्य संभवः। तस्मात् अर्थासंस्पर्शित्वात् चोदनायाः '**तल्लक्षणो धर्मः**' इति प्रतिज्ञा नोपपद्यते। उच्यते। अर्थं च अवबोधयति अर्थासंस्पर्शि च इति चित्रम्। यदि तावत् बाधकज्ञानावगम्यं अर्थासंस्पर्शित्वम्, नैव तत् प्रमाणजन्यम्। विशेषाग्रहणात् स्मृतिज्ञानं तत् इति प्रतिपादयिष्यामः। वेदे पुनः बाधकज्ञानाभावात् अर्थासंस्पर्शिताशङ्काऽपि नास्ति। ननु च सत्यपि बाधकज्ञाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात् अङ्गुल्यग्रे हस्तियूथशतमिति। तदद्धा परिहृतैव अर्थासंस्पर्शिताशङ्का [ परिहासोऽयमुक्तः ]। मैवम्। अनभिज्ञो भवान् बाध्यबाधकभावस्य। अङ्गुल्यग्रे हस्तियूथशतं इति प्रमाणान्तरदर्शनं अत्र बाध्यते, न पुनः हस्तियूथशतमिति (बाह्यं वस्तु)। तदिदमाह '**विप्रतिषिद्धमिदमभिधीयते, ब्रवीति इति च वितथं च**' इति। अत एव '**तच्चेत् प्रत्ययितात्**' इत्युक्तम्। प्रत्ययितस्य हि वचनं अव्यभिचारि प्रमाणान्तरपूर्वकं यत्रोपलभ्यमानविषयम्। यत्र तु द्वयं नास्ति, तत्र प्रमाणान्तरविपर्ययात् विपर्ययः। वाक्यार्थे पुनः उक्तो विपर्ययः। ( योऽयं विपर्ययः नासौ वाक्यार्थे, किं तर्हि लिङ्गार्थे )। कस्मात् पुनः पौरुषेये वचसि प्रमाणान्तरविपर्ययात् विपर्ययः ( न पुनः शब्दविपर्ययात्। अत्रोत्तरम् ) ज्ञातं हि अर्थं परस्मै प्रतिपादयितुं पुरुषाः प्रयुञ्जते वाक्यानि। न च अप्रतीतोऽर्थो ज्ञातो भवति इति प्रमाणान्तरसंवादिना पौरुषेयेण वचनेन भवितव्यम्। ( तेन विपर्ययोऽपि अनुमानस्यैव, न शब्दस्येति ) तदिदमुक्तम् '**अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते वचनात्**' इति। ( यत् पुरुषेण वाक्यं प्रयुज्यते, तत् प्रतीतार्थप्रतिपादनाय। न च प्रमाणान्तरं विना प्रतीतिरस्ति। तस्मात् प्रमाणान्तरसापेक्षं लौकिकं वचनमस्ति )। ननु अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते प्रमाणान्तरात् इति वक्तव्ये '**ऋते वचनात्**' इति कोऽभिप्रायः ? उच्यते। ननु च कार्यार्थत्वेऽपि पौरुषेयतैव वचसः प्राप्नोति इत्यस्य परिहारार्थमिदमुच्यते '**ऋते वचनात्**' इति। ( कः परिहारः ? अयमुच्यते, यदि चोदना कार्यमर्थं प्रतिपादयति तदा न पौरुषेयी। पुरुषा हि प्रमाणान्तरप्रतीतार्थप्रतिपादनाय वाक्यं प्रयुञ्जते। न च कार्यं प्रमाणान्तरप्रमेयम्। तेन तत्प्रतिपादकस्य न पौरुषेयत्वम् इति )। **ननु च प्रमाणान्तरसंवादिता एवं न प्रदर्शिता भवति** ( वाक्यमेव एवंपरं इति मन्वानस्य चोद्यमिदम् )। **बाढं प्रदर्शिता**, सापेक्षत्वनिराकरणदर्शनात्। ( सापेक्षत्वं निराक्रियमाणं दृश्यते यस्मात् वचनस्य, तस्मात् नान्तरीयकं अनपेक्षत्वं सिध्यतीत्यर्थः )। नान्तरीयकानपेक्षत्वसिद्ध्यर्थं तु विशेषोदाहरणम्। ननु '**ऋते वचनात्**' इत्युक्तेऽपि अपरस्मात् पौरुषेयाद्वचनात् प्राप्नोत्येव पौरुषेयत्वं चोदनायाः। उच्यते। वचनादित्युक्ते प्राप्नोत्येव कार्येऽर्थे वचनस्य स्वातन्त्र्यम्। अतः पुरुषपरंपरायामपि न प्रमाणान्तरगोचरो धर्मः इति सिद्धम्। कथं पुनरिदं सिध्यति, पुरुषपरंपरोपदेशान्यथाऽनुपपत्त्या

किमपि उपलम्भकमस्ति इति शक्यते कल्पयितुम्, न स्वातन्त्र्यं वचनस्य । नैतदेवम्, 'उपदेशो हि व्यामोहादपि भवति। असति व्यामोहे वेदादपि भवति'। मूलद्वये संभवत्येतस्मिन् परिगणितप्रमाण-व्यतिरिक्तं न प्रमाणान्तरमस्ति इति शक्यते वक्तुम्। अतः प्रमाणान्तरविपर्ययासंभवात् न स्वतश्चार्थासंस्पर्शिता शक्यते वक्तुं चोदनायाः । तस्मात् सुष्ठु प्रतिज्ञातं 'चोदनालक्षणोऽर्थो धर्मः' इति ।

किञ्च पुरुषवचनाद्विज्ञातोऽयमनेनार्थः इति निश्चयो भवति, न पुनः प्रमाणान्तरबुद्धिरुपजायते । तदुक्तम् "अपि च पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न 'एवमयमर्थः" इति । किं वा अर्थान्तरावगतौ प्रमाणान्तरावगतिर्भवति? बाढम्, अर्थानुसारि हि तदा प्रमाणमवकल्पते ( किं अर्थाव-गत्यनुमानात् प्रमाणान्तरं शाब्दं इत्यवगतिर्भवति ? बाढं भवति, कारणभूतमर्थं उपस्थापयत् शाब्दं अनु-मानात् प्रमाणान्तरं इत्यवकल्पते )। ननु 'वेद' इत्ये-तदपि कल्पनीयमेव, न, प्रसिद्धकारणत्वात् संविदः अप्रसिद्धमूलत्वाच्चार्थस्य ('वेद' इत्यपि वक्तृबुद्धिः कल्प-नीया पौरुषेयाद्वाक्यात्। ततश्च तत्कल्पकतया किमिति प्रमाणान्तरं न भवति ? न, प्रसिद्धं हि कारणं वाक्यस्य वक्तृबुद्धिः, अतस्तत्कल्पना, कार्यतः कारणानुमानम्। अप्रसिद्धं च कारणं अर्थः। ततः तदवगतिर्नानुमानम्)। 'वेद' इत्येतदपि तावत् पुरुषवचनान्नावगतिर्भवति, विक्षेपस्य संभवात् चित्तानाम्, किमुतार्थे, तद्दर्शयति 'विप्लवते खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः' इति (प्रतारकाः अन्यथा जानन्तोऽपि अन्यथा वाक्यानि प्रयुञ्जते । तथा प्रमादिनो दुष्टसामग्रीकाश्च अन्यवाक्यविवक्षायां अन्यदेव वाक्यमुच्चारयन्ति। तेषां वाक्यात् वक्तृबुद्धिरपि निश्चेतुं न शक्यते, दूरेणार्थः। वक्तृवचनान्नार्थावगतिः, विक्षेपस्य प्रतारणाशयप्रमाद-लक्षणस्य चित्तगस्य संभवात्। एतच्चोपलक्षणं उच्चारण-दोषोऽपि द्रष्टव्यः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्तीत्युक्तम्)।

किमिदं सामान्यतोदृष्टम्? द्विविधस्यापि निरस्तत्वात्। किमन्यदवशिष्यते, येन इदमुच्यते 'ननु सामान्यतो-दृष्टम्' इति । ( द्विविधस्यापि प्रत्ययान्तरापेक्षित्व—अर्थासंस्पर्शित्वलक्षणस्य अप्रामाण्यहेतोर्निरस्तत्वात् ) । सत्यमेवम्। किन्तु विषयान्तरे सामान्यतोदृष्टमनपास्तं मन्यते । 'विप्लवते खल्वपि कश्चित् पुरुषकृतात् वचनात्' इत्युक्तम्, तदा 'अन्यथैवार्थः अन्यथा शब्दाद्विज्ञानम्' तदिदमुपपन्नार्थं भवति। [ शङ्कते— ] अस्यां किमुपपत्तौ प्रसक्ता खलु अर्थासंस्पर्शिता, शब्दस्य अशब्दत्वात् विप्लुतार्थवत् इति। [परिहरति—] सत्यम्, यदि विप्लुतौ शब्दादयथार्थत्वम्, अयथार्थस्य विषये शब्दादवगम्ये सति, नायथार्थात्। तदिदमुक्तं 'नान्य-त्वात्' इति। अत एवायथार्थत्वे हेतुः शब्दाविषये स्यात्। ( यत्र विप्लवः, तत्र यदि शब्दात् अयथाभूत-स्यार्थस्यावगमः स्यात्। किन्तु शब्दस्तत्र लिङ्गम्, तेन तत्र तस्य वक्तृबुद्धिव्यवस्थापकत्वम् । वक्तृबुद्धिमुखेन चार्थावगमः। तेन अयथाऽर्थत्वस्य वक्तृबुद्धिर्विषयः, न शब्दः )। अथापि शब्दादेव विप्लवः, तथापि एतद-नुमानं नैवोपपद्यते। अदुष्टप्रतिज्ञापनसापेक्षं हेतुवचनं भवति। दुष्टश्चायं पक्षः, संविदः प्रत्यक्षत्वात्। तदिद-मुक्तम् 'प्रत्यक्षस्तु वेदवचनात् प्रत्ययः' इति । प्रतीतिः प्रत्ययः।

ननु च नैव कार्यो धर्मः। कस्तर्हि ? गुणः। तथाच केचित् बुद्धिगुणं मन्यन्ते, केचिदात्मगुणम् । तस्मात् 'क्रियायाः प्रवर्तकं वचनम्' 'चोदनालक्षणोऽर्थो धर्मः' इति वचनं च नोपपद्यते, अकार्यत्वाद्धर्मस्य। अतः तन्निराकरणाय चोदनालक्षणस्तत्र उपसंहारमुखेन उपन्यस्तवान् भाष्यकारः 'तस्माच्छ्रेयस्करो धर्मः' इति । एवमपि कथं पुनर्निरासः ? शब्दार्थसंबन्धस्य लोकव्यवहारगम्यत्वात् । कार्ये चार्थे धर्मशब्दं लौकिकाः प्रयुञ्जते। 'यो यागमनुतिष्ठति' इत्येवमादिना प्रदर्शिते अर्थशब्दस्य अन्वयप्रयोजनप्रदर्शनार्थं भाष्यकारेण 'उभय-मिह चोदनया लक्ष्यते अर्थः अनर्थश्च' इति। पुनरपि च प्रश्नपूर्वकमिदमुक्तम् 'कोऽर्थः ? यो निःश्रे-यसाय ज्योतिष्टोमादिः। कोऽनर्थः ? यः प्रत्य-

-वायाय श्येनादिः' इति निःश्रेयसप्रत्यवायलक्षणं धर्माधर्मत्वमुक्तम्। एवं चोपदर्शयता चोदनालक्षणं इत्युक्तं भवति (उभयमपि अर्थानर्थत्वेन चोदनालक्षणमित्युक्तम्) तत्र यो निःश्रेयसाय तस्यैव प्रत्यवायहेतोर्मा भूत् इति इदं तर्हि अयुक्तं (तथाच सति अयुक्तम्, तदुक्तं तत्र यो निःश्रेयसाय तस्यैव धर्मता कथं नाम स्यात्, प्रत्यवायहेतोर्मा भूत् इति 'इदं तर्हि' इति पूर्वेण सह एकग्रन्थः)। 'कथं पुनः अनर्थः कर्तव्यतया उपदिश्यते' इति (भाष्यं), कथं कर्तव्यतया अनुपदिश्यमानोऽर्थः चोदनालक्षणो भवति, कथं वा चोदनालक्षणस्य सतः धर्मत्वनिवृत्त्यर्थं अर्थशब्दान्वय उपपद्यते। (अयमत्राभिप्रायः। यत् किल चोदनालक्षणं तत् कर्तव्यतया उपदिश्यते। यच्च कर्तव्यतया उपदिश्यते न तदनर्थः। कर्तव्यताऽवगमादेव अनर्थत्वनिवृत्तेः। अथोच्येत, अनर्थ एव श्येनादिनियोगः, न तर्हि कर्तव्यतयोपदिश्यते। यच्च कर्तव्यतया नोपदिश्यते न तत् चोदनालक्षणम्। अतः चोदनालक्षणनिवृत्त्यर्थं अर्थग्रहणमिति। तन्नोपपद्यते। अचोदनालक्षणत्वेनैव व्यावृत्तिसिद्धेः। एतच्च अपेक्षाऽनुगुणं इति कृत्वा व्याख्यातम्)। पुनरपि च स्पष्टीकरोति 'नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इत्युत्तरेण कर्तव्यतया च नोपदिश्यते चोदनालक्षणश्च इति संकटमिवोपलक्ष्यते। यदपि च 'कथं पुनरसौ अनर्थः' इति प्रश्नमुल्लिख्य 'हिंसा हि सा, सा च प्रतिषिद्धा' इत्युक्तम्, तदपि पूर्वापरविरुद्धम्। प्रत्यवायलक्षणं अनर्थत्वं उक्त्वा पुनः प्रतिषेधलक्षणमुक्तवान्, तस्मादसामञ्जस्यम्। अथ प्रतिषेधप्रत्यवाययोरपि अविरोधिता उच्यते, प्रत्यवायस्य प्रतिषेधहेतुत्वात्, तदयुक्तम्, नञर्थस्य अनन्यार्थत्वात्। नञर्थपर्यवसायी एव प्रतिषेधविधिः, न पुनः तदर्थस्य अन्यार्थतामवगमयितुं क्षमः। (नहि निषेधेन नञर्थस्याकरणे प्रत्यवायपरिहारार्थता। यदि नञ्विधिः नञर्थस्य प्रत्यवायपरिहारार्थतां गमयेत् ततो गम्येत अकरणे प्रत्यवाय इति। तदा चैतदपि सिध्येत् 'प्रतिषिद्धं प्रत्यवायाय' इति, न त्वेवमस्ति। इयं भाष्याक्षरयोजना— 'उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति।' अर्थः अनिषिद्धफलः, अनर्थश्च निषिद्धफलः। 'कोऽर्थः? यो निःश्रेयसाय' अनिषिद्धफलः 'ज्योतिष्टोमादिः'। 'कोऽनर्थः? यः प्रत्यवायाय' निषिद्धफलः श्येनो वज्रः इषुः इत्येवमादिः। तत्र, अनर्थो धर्मं उक्तो मा भूत् इति एवमर्थम् 'अर्थग्रहणम्। कथं पुनरसौ अनर्थः' इति औपादानिकीं फले प्रवृत्तिं मन्वानस्य चोद्यम्। हिंसा हि सा, सा च प्रतिषिद्धेति। कामिनां स्वतः फले प्रवृत्तत्वात् तदर्थितयैव कर्मणि प्रवृत्तेः न हिंस्यात् इति प्रतिषेधाविरोधात्। 'कथं पुनरनर्थः कर्तव्यतयोपदिश्यते' इति पूर्वोक्तमेव चोद्याभिप्रायं विवृणोति। 'उच्यते, नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इति नैव विधिना श्येनादयः कर्तव्याः इति प्रतिपाद्यन्ते, फलार्थितयैव प्रवृत्तेः। 'यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः' इति फले स्वयं प्रवृत्तेः तदिच्छयैव कर्मण्यपि प्रवर्तते इति भावः। एतदेव स्फुटीकरोति 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति नाभिचरितव्यं इति अभिचारे स्वतः प्रवृत्तिं दर्शयति)। (आक्षेपमिदानीं परिहरति—टीकाकारः—) अत्राह— अनिरूपितनियोगव्यापारस्य इदं चोद्यम्। कर्तव्यताविषयो नियोगः, न पुनः कर्तव्यतामाह। (न निरूपितः उपादानलक्षणो नियोगव्यापारो येन, तस्येदं चोद्यम्। यागकर्तव्यताऽनुष्ठानविषयो नियोगः, तेन नियोगः साध्यते, न तु नियोगो यागस्यानुष्ठानं ज्ञापयति)। कथं तर्हि कार्येऽर्थे प्रामाण्यं वेदस्येत्युक्तम् (यदि यागादेः कर्तव्यता न ज्ञाप्यते कथं तर्हि कार्येऽर्थे वेदस्य प्रामाण्यम्, कार्याप्रतिपादकत्वात्)। युक्तम्, तद्विषयत्वान्नियोगस्य (यद्यपि यागादेः कर्तव्यता न ज्ञाप्यते तथापि यागविषयो नियोगः कर्तव्यतया प्रतिपाद्यते इति कार्यप्रतिपादकत्वात् युक्तं कार्यं प्रति प्रामाण्यम्)। कोऽयं विषयविषयिभावः? यस्मिन्नयं पुरुषो नियुज्यते स विषयः। (कर्मणि प्रेरकत्वात् नियोगस्य, कर्मणो विषयत्वं नियोगस्य च विषयित्वम्। तथाच विषित एव कर्मणि प्रवृत्तिः इति प्रश्नः। उत्तरं तु, यस्मिन्नर्थे पुरुषो नियुज्यते स विषयः इति नैव कर्मणि प्रेरकतया विषयिभावः। किं तर्हि? यत्र कर्मणि पुरुषो नियुज्यते कार्यं बोध्यते इति कार्यबोधनमेव हि पुरुषस्य नियोजनम्।

कर्मणि यागादौ कर्मभूतो नियोगः प्रतीयते, न पुनः कर्मण्येव प्रेरयति। एतच्च अपूर्वाधिकरणे वक्ष्यामः)। तस्मान्नैव विधिः कर्तव्यतामाह। विषयतया तु उपादत्ते। कस्मात्? यद्यदुपादीयते तत्तद्विधेयं इति तन्त्रव्यवहारः (न पुनः यद्यत् कर्तव्यतया ज्ञाप्यते तत्तत् विधेयं इति मीमांसासिद्धान्ते व्यवहारः)। यत्तु उपादानहेतुतां प्रतिपद्यते तदधिकृतौ कारणम् (अभिचारस्तावत् अधिकारिविशेषणतया अधिकारे कारणम्। यश्चोपादाने हेतुः नासावुपादेयः। तेन अभिचारे नौपादानिकी प्रवृत्तिरिति सिद्धम्। यतः एवं अधिकारनिमित्तभूतं वैधमुपादानं नास्ति अत एव 'न हिंस्यात्' इति प्रतिषेधोऽवतरति) तस्मात् अधिकारनिमित्तं (अभ्यभिचारं) अङ्गीकृत्य एतदुक्तम् 'हिंसा हि सा, सा च प्रतिषिद्धा' इति। उपादानगतो हि प्रतिषेधः क्रत्वर्थः स्यात् (प्रतिषेध्यायाः प्रवृत्तेः क्रतुप्रवृत्त्यधीनत्वेन क्रतुसंबन्धात्) नाधिकारगतः (स्वतन्त्रत्वात् तत्र प्रवृत्तेः) 'न हिंस्यात् भूतानि' इति च अधिकारगतोऽयं प्रतिषेधः पुरुषार्थश्च। तस्मादभिचारस्य अनर्थतां प्रतिपादयितुं क्षमः, नाग्नीषोमीयादेः क्रत्वर्थत्वात्। अथ कस्मान्नोभयार्थः प्रतिषेधोऽयम् 'न हिंस्याद्भूतानि' इति? (उत्तरम्) न हि एकस्य विधेः प्रयोक्तृत्वाप्रयोक्तृत्वे भवतः। अथ क्रत्वर्थ एवायम् (प्रतिषेधः प्रयुक्तिलाघवात्) कस्मान्न भवति? (उत्तरमाह--) प्रयोक्तृत्वाप्रयोक्तृत्वयोः प्रयोक्तृत्वं श्रौतं अनपेक्षावगमात्। अप्रयोक्तृत्वं तु वाक्यान्तरपर्यालोचनया अवगतम्। न च 'न हिंस्याद्भूतानि' इति वाक्यान्तरावगतिर्भवति अनारभ्यविधानात् (प्रथमं हि लिङादयः कार्यं बोधयन्ति, तच्चानुष्ठापकम्। संनिहिते अधिकारविधौ वाक्यान्तरगता लिङादयश्चानुवादका एव) तस्मात् अधिकारावगत एवायं प्रतिषेधः (नोपादानगतः)। भवति च चोदनालक्षणः (श्येनविनियोगः) तद्विषयत्वात् श्येनविधेः। तस्मात् 'उभयमिह चोदनया लक्ष्यते' इत्येवमादि उपपन्नार्थं भाष्यम्।

'ननु अशक्तमिदं सूत्रम्' इति लौकिकवैदिकवाक्ययोर्विवेकप्रदर्शनार्थम्। अथवा अर्थस्य सतः इति यथावाक्यमपि एकार्थत्वं संभवति इति प्रदर्शयितुम् (विध्यावृत्तिलक्षणो वाक्यभेदो नास्ति। अन्वयभेदमात्रं तु भवत्येवेति)।

वि-- 'विचारविषयो धर्मो लक्षणेन विवर्जितः। मानेन वाऽथवोपेतस्ताभ्यामिति विचिन्त्यते॥, लौकिकाकारहीनस्य तस्य किं नाम लक्षणम्। मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात्॥, चोदनागम्य आकारो ह्यर्थत्वे सति लक्षणम्। अत एव प्रमाणं च चोदनैवात्र नो कुतः॥'

अत्रैव गुरुमतमाह-- 'यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः। सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा॥, सिद्धेऽपि पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः। मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः॥, हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि। दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि॥' तस्मात् कार्यरूप एव वेदार्थः।

भाट्ट-- विविचारयिषितस्य धर्मस्य अलौकिकत्वेन प्रत्यक्षविषयत्वायोगात् तन्मूलकस्यानुमानादेस्तत्र सुतरामप्रवृत्तेः। अत एव लक्षणस्याप्यसंभवान्न धर्मविचारो युक्तः। इति प्राप्ते, लौकिकप्रमाणानामप्रवृत्तावपि अलौकिकानामेकत्रिंशतस्तत्सहकृतविधेरेकस्यैव वा प्रमाणत्वसंभवात् अप्रामाण्यस्य परतस्त्वेऽपि प्रामाण्यस्य स्वतस्त्वात् सप्रमाणक एव धर्मः। अत एव वेदैकज्ञाप्येष्टानिष्टसाधनताकत्वे धर्माधर्मत्वे तथात्वे सति बलवदनिष्टाननुबन्धित्वं वा धर्मलक्षणम्। बलवदनिष्टाननुबन्धित्वे सति यददृष्टद्वारा फलकरणं अदृष्टभिन्नं च स धर्म इति यावत्। वस्तुतो निषिध्यमानत्वमधर्मत्वम्, विधीयमानत्वमात्रं धर्मत्वम्। तच्च कृतिव्याप्यकरणेतिकर्तव्यताप्रभृतिषु उपादेयतापरपर्यायः प्रेरणारूपविधिविषयताविशेषः। स च अस्त्येव आग्नेयप्रयाजद्रव्यदेवतानीचैस्त्वादिषु। नास्ति च फलनिमित्तकर्तृकालादिषु। 'पञ्चमे ब्रह्मवर्चसकामस्य' इत्यत्र फलाय विधीयमानस्य कालस्य धर्मत्वाभावेऽपि न क्षतिः, तदाश्रयस्योपनयनस्यैव धर्मत्वात्। अभिचारार्थमुपादेयस्य श्येनादेस्तु धर्मत्वमिष्टमेव, तामसधर्मत्वेन पुराणादिषु तद्गणनात्। विवाहानृतवदनस्य तु न विधिविषयत्वम्। षोडशिग्रहणस्यातिरात्रे तु न निषेधः, तत्रत्यलिङो दोषाभावक्रतुवैगुण्यानापादकत्वलक्षकत्वेन प्रवर्तनानिवर्तनयोः

अबोधात्; बोधे वा शुभाशुभफलाक्षेपकविधिनिषेधविषयत्वे धर्माधर्मत्वे। शुभपदं क्रतूपकारस्वर्गादिजनकादृष्टसाधारणम्। अशुभपदं दुःखजनकादृष्टक्रतुवैगुण्यसाधारणम्। अभ्यनुज्ञाविधिविषयस्तु न धर्मो नाप्यधर्मः। अत एव पूर्वसूत्रे धर्मपदेन यावत्षोडशलक्षणीगतविचारविषयो लक्ष्यते। अपौरुषेयवाक्यतात्पर्यविषयीभूतवाक्यार्थान्वयित्वस्य लक्ष्यताऽवच्छेदकत्वात्। सगुणनिर्गुणोपासनविधिशेषत्वादिना क्रतुविध्यपेक्षितसंसार्यात्मस्वरूपवदेव ब्रह्मणोऽपीह विचार्यत्वमिष्टमेव। लक्ष्यताऽवच्छेदककोटिनिविष्टवाक्यार्थे संसर्गात्मकत्वं वा विशेषणीयम्।

**मण्डन**— '(आदौ,) द्वितीयसूत्रेण जिज्ञासां कुरुतेऽधुना॥ प्रमाणाभासरूपादीन् संकरेण निरूपयन्।'

**शंकर**— 'धर्मे मानं च चोदना।' २. 'धर्मोऽर्थश्चोदनागम्यः।' ३.

* **धर्मलक्षणा** कार्यलक्षणया बाध्यते। बाल. पृ. १४३.

* **धर्मविचारशास्त्रम्** 'चोदनालक्षणोऽर्थो धर्मः' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्येतदन्तं जैमिनिप्रोक्तं सूत्रजातम्। वि. १।१।१, * धर्मविचारशास्त्रं साक्षात् अध्ययनविधिप्रयुक्तं इति भाट्टाः, अध्यापनविधिप्रयुक्तमध्ययनम्, तत्प्रयुक्तं धर्मविचारशास्त्रं इति प्राभाकराः। १।१।१, * **धर्मविचारशास्त्रस्य** 'स्वाध्यायोऽध्येतव्यः' इति विधिः प्रयोजकः। १।१।१.

* **धर्मविरोधे** अङ्गप्रधानयोः प्रधानस्यैव धर्मानुग्रहः। भा. १२।२।९।२५.

⧖ **धर्मविषयकप्रमाणपरीक्षाप्रतिज्ञा**। निमित्तपरीष्ट्यधिकरणम्॥

**तस्य निमित्तपरीष्टिः। १।१।३।३॥**

**भाष्यम्**— उक्तमस्माभिः चोदनानिमित्तं धर्मस्य ज्ञानमिति। तत् प्रतिज्ञामात्रेणोक्तम्। इदानीं तस्य निमित्तं परीक्षिष्यामहे किं चोदनैवेति, अन्यदपीति। तस्मात् न तावन्निश्चीयते चोदनालक्षणोऽर्थो धर्म इति। तदुच्यते।

**श्लोवा**— 'प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि। वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता॥ १॥ प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते। वृत्तिकारोऽधिकं वाऽपि भूतादि द्वारमब्रवीत्॥ २॥

**बृहती**— तस्य निमित्तपरीष्टिः इति हेत्वभिधानावसरः कथ्यते। कथं पुनः कार्येऽर्थे चोदनैव निमित्तम्? अन्यस्य प्रत्यक्षादेरसंबन्धात्। कथमसंभवः (तदुत्तरसूत्रे वक्ष्यामः)।

**ऋजु**— चोदनालक्षणसूत्रेण श्रुत्यर्थाभ्यां वेदार्थस्वरूपम्, तत्र च प्रमाणं प्रतिज्ञातम्। तत्र किं स्वरूपं तावत् भेदाभेदरूपेण कथ्यताम्, उत प्रमाणप्रतिज्ञायां हेतुः इति संशये प्रधानत्वात् स्वरूपस्य, तदेव भेदाभेदाभ्यां कथनीयं इति प्राप्ते, भेदाभेदनिर्णयस्य अनपेक्षत्वसव्यपेक्षत्वात् प्रामाण्ये हेत्वनपेक्षत्वमधुना कथनीयं इति सूत्रेण कथ्यते। तथा च भाष्यम् 'इदानीं तस्य निमित्तं परीक्षिष्यामहे' इति। तस्मात् अनपेक्षस्वरूपप्रामाण्यहेत्वभिधानावसरकथनं सूत्रेण क्रियते इति।

**शा**— अनेन सूत्रेण चोदनाख्यस्य निमित्तस्य परीक्षणं अस्मिन् पादे वक्ष्यमाणम् 'अथातः शेषलक्षणम्' 'अथ विशेषलक्षणम्' इतिवत् सुखग्रहणार्थमनुकीर्त्यते।

**चन्द्रिका**— अयमत्र सूत्रार्थः, तस्य धर्मस्य ज्ञाने यन्निमित्तं प्रमाणं चोदनाऽभिधानम्, तस्य परीष्टिः परीक्षा कर्तव्या इति। 'इषु गतौ' इत्यस्माद्धातोः 'इषेरनिच्छार्थस्य' इति युचि विहिते 'परेर्वा' इति क्तिन्युचोर्विकल्पस्मरणात् युज्विधौ पर्येषणा इति रूपं क्तिन्विधौ तु परीष्टिः इति रूपं सिध्यति। अत्र धर्मप्रमाणं परीक्ष्यं न वेति संदेहे, प्रमाणोपदेशेनैव प्रमेयसिद्धेः किं परीक्षया इति पूर्वः पक्षः। नात्र सिद्धवत् लक्षणप्रकथनमात्रं किन्तु विचारशास्त्रत्वादस्य सर्वथा प्रमाणपरीक्षा कर्तव्या इति सिद्धान्तः।

**वि**— 'धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम्। एतत् किं न परीक्ष्यं स्यात् किंवा सम्यक् परीक्ष्यताम्॥, मानोपदेशान्मेयस्य सिद्धत्वात् किं परीक्षया।, मैवं विचारशास्त्रेऽस्मिन् परीक्षोपेक्ष्यते कुतः॥'

**गुरुमतमाह**— 'आदौ परीक्ष्यो वेदार्थश्चोदनामानताऽथवा।, वेदार्थस्य प्रधानत्वात् प्रथमं तत्

परीक्ष्यताम् ॥, चोदनामानतैवात्र प्रथमं साध्यतां गता । अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम् ॥'

भाट्टे— इदं सूत्रं उत्तरसूत्रेण सह एकाधिकरणत्वेन स्वीकृतम् ।

मण्डन— 'निष्कृष्याध्यायतात्पर्यं ब्रवीति सुखसिद्धये ।'

शंकर— 'न तन्मानापरीक्ष्यता ।' अपरीक्ष्यता न किन्तु परीक्ष्यमेव तन्मानम् । ४.

* **धर्मवोचनं** नाम साम अनुक्रम् । बाल. पृ. ७२.

* **धर्मशब्दः** अपूर्ववाची इति गौतमीयाः । अपूर्वसाधनयागादिवाची इति मीमांसकाः । बाल. पृ. १. * **धर्मशब्देन** यः पुरुषं निःश्रेयसेन संयुनक्ति स उच्यते । भा. १।१।२।२, * य एव श्रेयस्करः स एव **धर्मशब्देनोच्यते** । यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते । १।१।२।२ पृ. १७-१८.

* **धर्मशास्त्रातिक्रमेण** यत् क्रियते न तस्य (शब्दप्रवृत्तेः) निमित्तत्वं स्यात् यथा शूद्रकृतस्याधानस्य न आहवनीयादिप्रयोगनिमित्तत्वम् । वा. २।३।२।३ पृ. ५८२.

* **धर्मसंहिताः** प्रायेण मनुगौतमवसिष्ठादिप्रणीताः समानेष्वर्थेषु वर्तन्ते । वा. १।३।८।२४ पृ. २५६.

* **धर्मसाधारण्यस्य** सप्तमाद्ये निषेत्स्यमानत्वेन...। सु. पृ. ६३४.

* **धर्मसूत्रं** गौतमीयं छन्दोगैरेव परिगृहीतम्, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिरेव, आपस्तम्बीयबौधयनीये तैत्तिरीयैरेव प्रतिपन्ने । वा. १।३।७।१५ पृ. २४४, * **धर्मसूत्राणां** सर्वेषां वर्णाश्रमधर्मोपदेशित्वात् धर्माणां चैकरूपप्रायत्वात् परस्परसंवादित्वं युक्तम् । १।३।८।२७ पृ. २८५.

* **धर्मिकल्पनातो धर्मकल्पनैव वरं** इति न्यायः । संग्रहः.

⌛ **धर्मिकल्पनातो धर्मकल्पना वरीयसीति न्यायः** । धर्मकल्पनायाः श्रेष्ठत्वं च लाघवप्रयुक्तमिति । स्पष्टोऽयम् । साहस्री० ४२.

⌛ **धर्मिकल्पनातो धर्ममात्रकल्पना लघीयसी इति न्यायश्चेह बोध्यः** । ङकारादयो हि धर्मिण एव त्वया पाठ्याः, मया तु उभयपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति । शब्दकौस्तुभः १ अन्ते. * ननु वह्निनिष्ठा जातिः प्रमाणसिद्धा । तथा च 'धर्मिकल्पनातः' इति न्यायात् तस्या एव अवच्छेदकत्वं कल्प्यते न शक्तिः । शक्तिवादे रुचिदत्तः न्यायचिन्तामणिटीकाकारः.

⌛ **धर्मिभेदाद्धर्मभेदो लघीयान्** । भेदश्रुत्यवष्टम्भेऽपि 'धर्मि० यान्' इति न्यायेन वागादीनां संभूय देहचालनादिहेतुसामान्यव्यापारसंभवात् न प्राणाख्यं पदार्थान्तरं कल्प्यम् (पूर्वपक्षे) । न्यायनि. २।४।५।९ ब्रसू.

* '**धवं च खदिरं च द्वावानय**' इत्यादौ वाक्ये यथा क्रमाभिहितयोरपि धवखदिरयोर्द्वित्वान्वयः तथा समासेऽपि धवखदिराभ्यां स्मृत्यारूढाभ्यां द्वित्वान्वयसंभवः । रत्न. ६।१।५।२२ वर्णकं २, * '**धवखदिरावानय**' इति वाक्ये यथा युगपद्वचनताभावेऽपि चकारवशादेव इतरेतरयोगो गम्यते तथा 'धवखदिरौ' इति चार्थे विधीयमानेन द्वंद्वेनैव तत्सिद्धेर्न युगपदभिधानं कल्प्यम् । ६।१।५।२२ वर्णकं २.

* **धातुः** (अभिधात्री श्रुतिः) द्विविधः भूवादिकः सनाद्यन्तश्च । बाल. पृ. ४१. * **धातुः** इति स्तरणचयः अभिधीयते । (स्तरणार्था बर्हिर्मुष्टयः स्तरणचयः) यथा— लूनस्य बर्हिषः त्रिधातु पञ्चधातु वा इति सकलस्य स्तरणविधानात् । वा. ३।८।१७।३२, * **धातुः** यस्य कारकस्य अवान्तरव्यापारं प्राधान्येनाह, स कर्ता । ३।४।४।१३ पृ. ९१७. * **धातवः** अनेकार्थाः । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः । प्रयोगतोऽनुमातव्या अनेकार्था हि धातवः ॥' इति स्मृतिः । सु. पृ. ११३५. * **धातवोऽपि** भावनां न मुञ्चन्ति तथा चाहुः 'करोतिरर्थेष्विव सर्वधातून्' इति । (विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरंदरोत्थः । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥) वा. २।१।१।१ पृ. ३८०, * **धातवो नामशब्दाश्च** बहव एव प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते । तथा चोक्तम् 'शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारापन्नं आर्याः प्रयुञ्जते 'शवम्' इति

मृतशरीराभिधानात्' इत्यादि। १।३।४।८. * धातवः। प्रकृतयः एव एकेषु जनपदेषु प्रयुज्यन्ते, विकृतय एव एकेषु इत्युपक्रम्य निरुक्तकृता (प्रकृतय एवैकेषु भाष्यन्ते विकृतय एवैकेषु इति निरुक्तम् २।१।२ पृ. १२७) शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्य आर्याः (आयषु इति मूले) भाषन्ते 'शवः' इति इत्युक्तम्। कम्बोजेष्वेव जनपदविशेषेषु शवतिर्धातुः गतिवाची दृष्टः। आर्यास्तु जनपदविशेषाः 'ऋदोरप्' इति अप्-प्रत्ययान्तत्वेन विकारापन्नं शवतिधातुं न गतौ प्रयुञ्जते, शवशब्देन मृतस्याभिधानात्। महाभाष्यकृता तु 'विकारापन्नमार्या भाषन्ते' इति पाठान्तरमुदाहृतम्। (पृ. २९) मुद्रितमहाभाष्ये सकैयटे तु 'विकारमेन-मार्या भाषन्ते' इति पाठः। न केवलं शवतिरेव देशविशेषे व्यवस्थितः, किन्तु अन्येऽपि बहवो धातवो नामशब्दाश्च व्यवस्थिता एव दृश्यन्ते। प्राच्येषु हि जनपदेषु दातिर्धातुः लवनार्थो दृश्यते, लुनाति इत्यस्मिन्नर्थे द्यति इति प्रयोगात्। तमेव दात्रं इति ष्ट्रन्-प्रत्ययान्तत्वेन विकारापन्नं उदीच्याः प्रयुञ्जते। 'प्राच्येषु गच्छतीत्यर्थे मध्यमेषु च रंहतिः ('मध्यमेषु वरं हति' इति सुधा-पाठस्तु अशुद्धः)। हन्ततिश्च (हम्मतिश्च इति महा-भाष्यपाठ एव अत्र ग्राह्यः) सुराष्ट्रेषु गमिस्त्वार्येषु भाष्यते॥' सु. पृ. २०८, * धातवः यथा धात्वर्थं न व्यभिचरन्ति तथा भावनामपि। पृ. ५६५. * धातवः विचित्रशक्तयः प्रयोज्यप्रयोजकोभयव्यापारवचनत्वेन भावार्थाधिकरणे दर्शिताः। तेषां सहकारिकारणसंनिधानात् कदाचित् काचित् प्रसिद्धिव्यतिरेकेणापि शक्तिरभिव्यज्यते। वा. ३।४।११।३१ पृ. ९६८, * धातुं इक्श्तिबन्तं अर्थे-ऽपि क्वचित् प्रयुञ्जते यजिः यजतिः इति च। तत् शब्दे अभिहिते लक्षणया अर्थप्रतीतिः इत्यवगन्तव्यम्। २।१। १।१पृ. ३७९, * धातोः अनुवादता-'सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्ते स्याद्धातोरनु-वादता॥' १।४।२।३ पृ. ३२८. * धातोः उद्देश्यपरत्वे संभवति उपपदस्य अन्याय्यत्वात्। भाट्ट. ७।१।१. * धातोः एकस्य अर्थभेदेन सकर्मकत्वाकर्मकत्ववत् तत्पर्यायाणामपि तदव्याहतम्। मणि. पृ. १०९.

* धातोः द्व्यर्थस्य भेदेनार्थे कथ्यमाने यागेन इति विशेषरूपं करणात्मना निष्कृष्टम्, इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरे भावयेत् इति अनेन कथ्यते। वा. २।१।१।१ पृ. ३८०. * धातोः फलभावनाकरणवाचित्वे श्येनादि-शब्दानां तत्सामानाधिकरण्यात् नामधेयता सिध्यति। सु. पृ. ६२१, * धातूनां अनेकार्थत्वात्। स्त्रीसंयुक्तस्य गमेः मैथुनवाचित्ववत् स्पर्शवाचिनोऽपि आलभतेः प्राणि-संयुक्तस्य यागवाचित्वकल्पना न विरुद्धा। पृ. ९३३. * धातूनां अस्ति अनेकार्थत्वम्। वा. ३।२।९।२५ पृ. ७८३. * धातूनां उत्पत्त्यादिरूपं फलं तदनुकूलो व्यापारश्च वाच्यः इति वैयाकरणाः। मणि. पृ. १००। फलमेव धात्वर्थः। अनुकूलव्यापारः प्रत्ययार्थः इति मण्डनः। पृ. १०१। व्यापार एव धात्वर्थः इत्यन्ये। १०२। व्यापारो धात्वर्थः इति रत्नकोशकारः। १०७. * धातूनां विचित्र-शक्तित्वम् 'कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्य-व्यापारः स्वयमाक्षिप्तप्रयोज्यव्यापारो वा' इत्यादि भावार्था-धिकरणवार्तिके दर्शितम्। (वा. पृ. ३७७-७८)। सु. पृ. १५०५.

* 'धात्वर्थोऽपि यथाऽऽख्याते सत्त्वभूतः प्रतीयते। सत्त्वाभिधायिना नाम्ना तादृङ्नैवोपनीयते॥' वा. २।३।११।२४ पृ. ६१६, * धात्वर्थोऽपि स्वयमिति-कर्तव्यताकाङ्क्षः सन् गुणार्थमपि प्रस्थितामेतां (इति-कर्तव्यतां) ग्रहणसमर्थः सन् किमिति परित्यजेत्। ६।३।१६।४३ पृ. १०६९, * धात्वर्थः असत्त्वभूतः अत्र (मासं जुहोति) जुहोतिना विधेरुपनीयते। न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिः अग्नि-होत्रादिपदैः अभिधीयमानत्वं इत्यप्रत्यभिज्ञानात् सोऽपि भिद्यते। २।३।११।२४ पृ. ६१६, * धात्वर्थ एव न भाव इत्युक्तम्। ३।४।४।१२ पृ. ९०३, * धात्वर्थः तदनुरक्ता च भावना सर्वत्र आख्याते विज्ञायते। २।१। १।१ पृ. ३७५, * धात्वर्थः तावत् प्रकृत्यैव साध्यात्मकः, विशेषतस्तु आख्यातगतेन धातुना उच्यमानः। स यदि फलसाधनत्वेन चोद्यते, ततः असिद्धरूपत्वात् तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वा उभयथाऽपि दृष्टेनैव तादर्थ्यं लभते।...'साध्या-

रमकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते । तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥' यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः, तथापि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता च आकाङ्क्षोत्पत्तिः, न वस्तुकृता । तस्मात् युक्ता धातोरेव आकाङ्क्षा, न नाम्न इति । २।१।१।१ पृ. ३८८–८९. * धात्वर्थः न क्रिया मीमांसकमते । सोम. ३।४।८ पृ. २६७. * धात्वर्थः न फलमात्रम्, नापि व्यापारमात्रम्, त्यजिगम्योः पर्यायतापत्तेः । अतः फलव्यापारौ धात्वर्थः । मणि. पृ. १०४. * धात्वर्थः पाकः–पक्तिः–पचनं इत्यादिशब्दैर्व्यवह्रियमाणो लिङ्गसंख्याकारकयोग्यः सिद्धस्वभावः । 'करोति' इति शब्देन व्यवह्रियमाणो लिङ्गसंख्याऽऽव्यपेतः साध्यस्वभावः । तत्र सिद्धस्वभावद्योतनाय यथा घञ्प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः । वि. २।१।१ वर्णकं २. * धात्वर्थाः यस्यां भावनायां करणं भवन्ति, तस्यां ते वस्त्वन्तरनिरपेक्षाः पश्चात्तनं अरुणैकहायनीन्यायलभ्यं इतिकर्तव्यतासंबन्धं लभन्ते । यस्यां पुनः गुणानां करणत्वम्, तस्यां धात्वर्थविशेषाद्विना करणत्वानुपपत्तेः साध्यभूतो धात्वर्थः अपरः अपेक्षितव्यः । नहि व्यापारसामान्यस्य गुणैरुत्पत्तिः शक्या । वा. ३।६।१६।४३ पृ. १०६९, * धात्वर्थमनुपनीय गुणः स्वतन्त्रः इतिकर्तव्यतां ग्रहीतुं न शक्नोति, इति धात्वर्थमाश्रयति । ३।६।१६।४३ पृ. १०६९, * धात्वर्थमुल्लङ्घ्य गुणाभिमुखं गच्छन्ती इतिकर्तव्यता न शक्नोति गन्तुं इति धात्वर्थमुखे तावत् पतति । ३।६।१६।४३ पृ. १०६९. * धात्वर्थं प्रति भावनायाः विशेष्यत्वम् 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययः प्राधान्येन' इति स्मृतिवशादेव अविवादम् । अत एव न तस्य प्रत्ययार्थं प्रति प्रकारता । विशेष्यगामित्वे संभवति प्रकारगामित्वस्य अन्याय्यत्वात् । रहस्य. पृ. ४६–४७. * 'अनूद्य चापि धात्वर्थं गुणः सर्वो विधीयते' । वा. १।४।३।४ पृ. ३३४, * धात्वर्थेनैव भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात् कारकाणां संबन्धसिद्धिः । २।१।१।१ पृ. ३८२, * धात्वर्थेन फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते । २।१।१।१ पृ. ३७६. * धात्वर्थेन हि सा (करणापेक्षा) शीघ्रं निवर्त्यते । वा. २।२।११।२६ पृ. ५४९ । धात्वर्थस्य व्यापाररूपत्वात् साक्षात् कारकत्वोपपत्तेः भावनाऽवच्छेदकत्वोपपत्तेश्च शीघ्रं करणाकाङ्क्षानिवर्तकत्वम् । सु. पृ. ८४७, * धात्वर्थस्य अनिष्पन्नस्य करणत्वायोगः । पृ. ७६७, * धात्वर्थस्यैव करणत्वम् । ननु आख्यातस्य भावनावाचिनः फलपदान्वयेऽपि करणाकाङ्क्षायां नामार्थस्यापि करणत्वोपपत्तेः कथं धात्वर्थस्य करणत्वसिद्धिः ? उच्यते । धात्वर्थानुरक्तभावनावाचितया धात्वर्थसंबद्धानां स्वर्गोत्पादनाभिधायित्वात् प्रत्यासत्तेः धात्वर्थस्यैव करणत्वावगतिः इति । ननु एकप्रत्ययोपादानश्रुत्या धात्वर्थनिरपेक्षायाः भावनायाः विध्यन्वयात् स्वर्गादिपुरुषार्थफलत्वेऽवगते करणाकाङ्क्षायामपि निष्पन्नत्वेन अयोग्यत्वात् प्रत्यासन्नमपि धात्वर्थं भाव्यांशवत् करणांशादपि प्रच्याव्य नामार्थेनैव अन्वयावगमात् कुतो धात्वर्थस्य करणत्वम् ? उच्यते । प्रकृतिप्रत्ययपौर्वापर्यनियमात् शुद्धभावनाऽनवगतेः अनुष्ठानाशक्तेश्च धात्वर्थानुरक्ताया एव फलोद्देशेन विधीयमानत्वात् विधिगम्यत्वाच्च करणत्वस्य 'केन भावयेत् स्वर्गम्' इत्यपेक्षायां यागादिना इत्येवान्वयो युक्त इति । पृ. ५५१. * धात्वर्थस्यैव करणत्वादिसंसर्गेण भावनायां प्रकारता इति मतम् । धातुलक्षितकरणत्वादेः भावनायां प्रकारता इति मतान्तरम् । मुरारि. (भा.) पृ. १४५०. * धात्वर्थस्यैव भावनाकरणत्वं न द्रव्यगुणयोः । मीन्या. * धात्वर्थस्य करणत्वेनैवान्वयः इति न नियमः 'दध्ना जुहोति' इत्यादौ साध्यत्वेनान्वयात् । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ चाश्रयत्वेनान्वयात् । मीन्या. * धात्वर्थस्य करणत्वप्रतिपत्तिः अपूर्वभावनायां प्रत्यासत्तेः । अतस्तेनैव फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते । वा. २।१।१।१ पृ. ३७६. * धात्वर्थस्य कर्तुः अवाच्यत्वे अशाब्दत्वापत्त्या वाक्यार्थानन्वयप्रसङ्गात् प्राधान्यासिद्धेः न धात्वर्थस्य साक्षात् पुरुषार्थत्वापत्तिः । सु. पृ. १३८४. * धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायामन्वयः । रहस्य. पृ. ५३. * धात्वर्थस्य कारकत्वेऽपि

तदवच्छिन्नाया भावनायाः निरूपणाशक्तेः विध्ययोगात् पदश्रुत्यैव धात्वर्थविधिः । सु. पृ. १००६. ❋ धात्वर्थस्य च धर्माणां च नहि परस्परेण आकाङ्क्षा विद्यते । प्रत्ययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथं इति । न यजिः कीदृशः इति । भा. ९।१।१।१ पृ. १६३९. ❋ धात्वर्थस्य नित्यं करणभूतस्य न कदाचित् प्राधान्यं आख्यातेषु भावप्रधानत्वात् इति स्थितं भावार्थाधिकरणे । वा. ३।४।४।१२ पृ. ९०३, ❋ 'धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि'। ३।४।४।१२ पृ. ९०२.

❋ धात्वर्थस्य भावनायां प्रकारत्वेन अन्वयः । प्रत्ययार्थप्राधान्यस्मृतेः संकोचे प्रमाणाभावात् । भावप्रधानमित्यस्य आख्यातार्थेषु अनेकेषु कस्य प्राधान्यं इत्यपेक्षिते भावपदवाच्यभावनाप्रधान्यं इत्यपेक्षितार्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः । अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणं इत्युक्तमेव । न च प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिङ्गसंख्यादेः प्रकृत्यर्थे प्रति प्रकारतया संकोचावश्यकत्वे यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितम्, तदनुवादमात्रतया भावनाविषयेऽपि बाधकाभावः (इति वाच्यम्)। 'प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात् सुबाद्यर्थलिङ्गसंख्यादीनां अप्राधान्येऽपि क्षतिविरहात् । वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकारता, अपितु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरं प्रत्येव इति वक्ष्यते । अतः सिद्धं धात्वर्थस्य भावनायां प्रकारतेति ।

धात्वर्थश्च क्वचित् शक्यार्थे एव प्रकारः, यथा 'सोमेन यजेत' इत्यादौ । क्वचित् लक्ष्यार्थे एव यथा 'अग्नीषोमीयं पशुमालभेत' इत्यादौ यागः । लक्ष्यार्थोऽपि क्वचित् शक्यार्थयुक्तः यथा 'पृष्ठैरुपतिष्ठते' इत्यादौ । आत्मनेपदानुरोधेन समीपस्थितिरूपशक्यार्थविशिष्टमभिधानम् । वस्तुतस्तु 'सोमेन यजेत' इत्यादौ तत्तद्विधिषु अपि विजातीययागत्वादिनैव लक्षणा इति शक्यार्थान्वयः अन्यत्रानुसंधेयः । तस्य च कृतौ संसर्गः नानुकूलत्वम्, 'पचति, पाकं करोति' इति पाककर्मत्वस्यैव विवरणबलेन संसर्गत्वप्रतीतेः । अत एव 'ओदनं पचति' इत्यादौ 'पाकेन ओदनं करोति' इति विवरणात् पाककरणत्वस्यापि प्रतीतेः तस्यापि संसर्गत्वम् । अतश्च कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्य अन्वयः । यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितं कृतिसाध्यत्वात् पाकादेः, तथापि स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यकत्वसंबन्धेन पाकस्य कृतावन्वयात् करणत्वस्यापि संसर्गघटकतया संसर्गत्वोपपत्तिः । अस्ति च ओदनस्यापि कृतौ उद्देश्यताऽऽख्या विषयता इति नैतादृशसंसर्गबाधः । तत्र च यत्र विध्यश्रवणम्, तत्र द्वितीयान्तपदाद्यश्रवणे 'पचति चैत्रः' इत्यादौ धात्वर्थस्य इष्टसाधनत्वाज्ञानेऽपि तस्य कर्मत्वमेव । आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात् । अत एव अकर्मकधातुस्थलेऽपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्याः तदाकाङ्क्षायाम् 'स्वास्थ्यकामः शयीत' इत्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेन अन्वयः, स्वर्गकामपदेनेव लक्षणया स्वर्गादेः । धातुस्तु अकर्मक एव । अत एवात्र न भावनाकर्मणि द्वितीया । सा तु धात्वर्थकर्मण्येव । सकर्मकधातुस्थले यथा 'व्रीहीनवहन्ति' इत्यादौ । तत्र तेषां प्रथमतो भावनायां कर्मत्वेन अन्वयेऽपि पार्ष्ठिकं धात्वर्थेऽपि कर्मत्वम्, इति तेषां धातूनां सकर्मकत्वोपपत्तिः । अतो भावनायाः नित्यसकर्मकत्वात् 'पचति चैत्रः' इत्यादिनिरुक्तस्थले भावनायाः कर्माकाङ्क्षायां समानपदश्रुत्या धात्वर्थस्यैव कर्मत्वम् । लौकिकवाक्यत्वाच्च तस्य वैयर्थ्येऽपि न दोषः । वेदे तु विध्यन्तरैकवाक्यत्वादिना स्तावकत्वाद्यसंभवेन स्वाध्यायविध्यवगतप्रयोजनवत्त्वानुरोधेन लडादेरेव लेट्त्वं लेडर्थकत्वं वा लक्षणया परिकल्प्य भावनायाः स्वर्गादिभाव्यान्तरपरिकल्पनया धात्वर्थस्य तत्र करणत्वेन अन्वयः । विधेः प्रवर्तकत्वान्यथाऽनुपपत्त्या तत्समभिव्याहृतायां भावनायां इष्टभाव्यकत्वावश्यम्भावात् । 'घटं पटं चानय' इत्यादौ चकारं विना कर्मद्वयान्वयादर्शनात् करोतेरिव आख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्यां कर्मत्वानुपपत्तेश्च । अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे असत्त्वे वा द्वितीया-

ऽऽदिना भाव्यान्तरं निर्दिष्टं यथा 'व्रीहीनवहन्यात्' 'ओदनं पचति' इत्यादौ, तत्र धात्वर्थस्य करणत्वमेव। यत्र तु तादृशस्थले अप्राप्तकरणान्तरसत्त्वम्, धात्वर्थस्य च प्रकरणादिना प्राप्तिः यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ तत्र आश्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रम्। साधुत्वसिद्ध्यर्थं धातुः। न तु तदर्थस्य करणत्वेन अन्वयः, न वा आश्रयत्वेन, कर्मत्वातिरिक्तस्य आश्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनायां इन्द्रियरूपकर्मावरुद्धायां होमस्यापि कर्मत्वेन अन्वये एककर्मकत्वभङ्गापत्तेः। अत एव अनेकोद्देश्यनिमित्तवाक्यभेदेऽपि एककर्मकत्वभङ्ग एव दूषकताबीजमुक्तं कौस्तुभादौ।

एककर्मकत्वं च न एककर्मत्वकत्वं एककर्मत्वाश्रयकर्मकत्वं वा 'सर्वेभ्यो दर्शपूर्णमासौ' 'घटान् आनय' इत्यादौ तदनापत्तेः। तत्र पुत्रादिवृत्तिकर्मत्वानां कर्मत्वाश्रयपुत्रादीनां वा अनेकत्वात्। नापि एककर्मत्वावच्छेदककत्वं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ 'व्रीहीन् प्रोक्षति' इत्यादौ च तदनापत्तेः। तत्र पुत्रत्वपशुत्वादीनां तदपूर्वसाधनत्वानां च कर्मताऽवच्छेदकानां भेदात्। किन्तु एकबोधविषयकर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्मवत्त्वं इत्युक्तं कौस्तुभे। निरुक्तस्थलेषु च सर्वत्र कर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्माणां एकेन पदेन एकस्यैव समूहालम्बनात्मकस्य बोधस्य जननात् एककर्मकत्वोपपत्तिः। 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र च अध्वर्युत्वयजमानत्वयोः कर्मत्वादिकरणताऽवच्छेदकयोः एकबोधविषयत्वाभावात् द्विकर्मकत्वापत्तिः, अतः पर्याप्तीति। तत्र द्वंद्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात् तत्पर्याप्त्यधिकरणताऽवच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वस्य द्वंद्वजन्यैकबोधविषयत्वेन एककर्मत्वोपपत्तेः। उपपादितं चैतत् कौस्तुभादौ। एवं 'शुक्लं घटमानय' इत्यादौ शुक्लस्य घटे अभेदान्वयात् पदद्वयेन घटपदेनैव वा शुक्लगुणविशिष्टघटलक्षणात् एककर्मत्वोपपत्तिः। एवं 'घटं पटं चानय' इत्यादौ इतरेतरयोगार्थकचकाररूपतात्पर्यग्राहकानुरोधेन द्वितीयाऽन्तपदद्वये लक्षणया तदुपपत्तिः। यथा च एवं सति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकताबीजं एककर्मकत्वभङ्गापत्तिः, तथा कौस्तुभे व्यक्तम्। तत् सिद्धं यत्र द्वितीयाऽऽदिना भाव्यान्तरं भावनायां अन्वययोग्यमुपात्तम्, तत्र न धात्वर्थस्य कर्मत्वम्। यत्र तु तन्नोपात्तम्, धात्वर्थस्य च इष्टसाधनत्वं प्रमाणान्तरेण प्रमितम्, तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव यथा 'दध्ना जुहोति' इत्यादौ। न चैवम् 'जुहु जुहोति' इत्यादौ जुहोतेः सकर्मकत्वात् कर्मान्तरावश्यम्भावेन भावनायाः द्विकर्मकत्वापत्तिः, सकर्मकस्यापि भावाख्याते इव कर्माविवक्षोपपत्तेः। एतादृशेऽपि विषये यदि तृतीयाऽन्तनामधेयश्रवणं तदा करणत्वमेव, यथा 'समे दर्शपूर्णमासाभ्यां यजेत' 'उच्चैः प्रवर्ग्येण' इत्यादौ। यत्र तु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थे अनुवादः यथा विद्वद्वाक्ययोः। तदभावे (प्रयोजनान्तराभावे) तु 'तनूनपातं यजति' इत्यादौ कर्मान्तरमेव करणत्वेन इत्यादि आकरे व्यक्तम्। यत्र तु नेष्टसाधनत्वं प्रमितम्, न वा स्ववाक्ये च उद्भिदादिवत् तृतीयाऽन्तनामधेयश्रवणं यथा 'सोमेन यजेत' 'अग्निहोत्रं जुहोति' इत्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमेऽपि विधिबलेन भावनायाः इष्टभाव्यकत्वावगमात् इष्टसामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वमेव। 'अग्निहोत्रम्' इत्यत्र द्वितीयाऽपि तत्र करणत्वलक्षणार्थैव इति सांप्रदायिकाः। एतादृशे विषये समानपदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव सुतरां अग्निहोत्रं इति द्वितीयाऽन्तश्रवणे। न च इष्टसाधनत्वेन अज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेन अन्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः, विध्यवगतेष्टभाव्यकत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि शाब्दबोधं प्रति अकारणत्वात् तदभावेऽपि होमकर्मकभावनाशाब्दज्ञानोपपत्तेः। न च भाव्यत्वेन अन्वितस्य तस्य भाव्यान्तरानाकाङ्क्षत्वात् फलवाक्येऽपि स्वर्गसाधनत्वबोधानापत्तिः, साधनत्वेन अन्वितस्य अर्थात् विध्यनुरोधेन कृतिसाध्यत्वज्ञानवत् कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षाऽनुरोधेनैव इष्टविशेषसाधनतया वाक्यान्तरेण विश्वजिन्न्यायेन वा बोधोपपत्तेः। अतः 'उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैव अन्वयः' इति

'न हिंस्यात् सर्वभूतानि' इत्युक्तः। पृ. ३२ ( नञ्टीका १।३।७ सूत्रे ).

* नञ्–धातुपदयोर्यदा संबन्धः तदा स्वार्थं हित्वा वस्त्वन्तरं लक्षयन्ति ( तदा पर्युदासः )। वा. ४।१। ३।३.

* नञ्पदं अभिधावृत्त्या प्रतिषेधं ब्रूते। प्रजापतिव्रतवाक्ये तु पर्युदासोऽर्थस्तस्य। वि. ४।१।३.

* नञ्समासे हि सति अव्ययपूर्वपदप्रकृतिस्वरत्वात् अहीनशब्दस्य आद्युदात्तत्वं स्यात् ( अहीनः इति ) मध्योदात्तस्तु अयं पठ्यते ( अहीनः इति )। वा. ३।३। ८।१६ पृ. ८६४.

* नञ्संबन्धात् 'यदनृतवदनेन उपकुर्यात् तन्न' इति वचनं व्यज्यते। तस्मात् दर्शपूर्णमासोपकाराय वदतो यदनृतं प्रसज्यते तत्प्रतिषेधो विधीयते। ततश्च यावत् कर्मार्थः संवादः तत्र सर्वत्र अनृतं वर्जनीयम्। वा. ३।४।४।१२ पृ. ९४१.

[ इतः परं 'नहि' इति अखण्डेन पदेन आरभ्यमाणा लघुसिद्धान्ता निवेश्यन्ते। के. ]

⌛ नहि अकारणोत्कर्षः कार्यमनुविधत्ते। स्वप्ने जागरे च उत्कृष्टकलधौतदर्शनात् उत्कृष्टं सुखम्, उत्कृष्टसर्पादिदर्शनाच्च उत्कृष्टं भयादि दृश्यते। विषयस्याकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यात्, 'नहि...धत्ते' इति न्यायात्। अद्वैत. १।१८।४४५.

* नहि अगृहीतयोः संबन्धिनोः संबन्धग्रहणं संभवति। रत्नाकर. अनुमानं श्लोवा. १४६.

* नहि अनवगतविशेषणो विशिष्टमवगच्छति। कणिका. पृ. ३२५.

* नहि अनुपलम्भमात्रेण नास्तीत्यवगम्य नष्टः इत्येव कल्पयन्ति। भा. १।१।६।२०.

* नहि अन्यार्थात् संनिहितात् अन्यत् संपादयितुं शक्यते। यथा 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति न भार्याविशेषणार्थमुच्चरितेन राज्ञा पुरुषो विशेष्यते। रत्न. ५।३।१।१२.

⌛ नहि अयं स्थाणोरपराधो यदेनमन्धो न पश्यति इति न्यायः। स्पष्टार्थः। साहस्री. ४१३.

⌛ नहि अविद्वान् विहितोऽस्ति। ( ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्ति ३।८।८।१८ ) इत्यनेन न्यायेन यजमानस्येव ऋत्विजामपि अविदुषामनधिकारात्। कौ. १।२।४।३५. * नह्यविद्वान् विहितोऽस्ति इत्यवश्यं तावत् अग्नीधा आत्मीयाः पदार्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः। तत्र प्रैषः पिष्टपेषणन्यायेन अर्थं ज्ञापयितुमशक्नुवन् अदृष्टार्थो भवति। वा. १।२।४। ३१–३ पृ. १४७.

* नहि अशाब्देन शाब्दस्यैकवाक्यता भवति। बाल. पृ. १३०.

* नहि अष्टकृत्वः एकं घटमानीय 'मद्गृहे सन्ति अष्टौ घटाः' इति व्यवहरन्ति। वि. १०।५।६.

* नहि अस्ति वचनस्यातिभारः। वि. ३।८।२.

⌛ नहि आगमाः सहस्रं ( अपि ) घटं पटयितुमीशते। क्षणिकस्य यागस्य यावत्कार्यारम्भं अवस्थानमपि सर्वप्रमाणविरुद्धं न कल्पयितुं शक्यम् 'नहि आगमाः' इति न्यायात्। कु. २।१।२।३.

⌛ नहि आढ्ये वदान्येऽवतिष्ठमाने क्षुत्क्षामो भिक्षुको भिक्षुकान्तरं याचितुमर्हति। ननु ऐकादशिनेषु दैक्षस्यैव विध्यन्तो न सवनीयस्य, तस्य स्वयमधर्मकत्वात्। 'नहि आढ्ये॰ मर्हति' इति न्यायात्। सोम. ८।१।७.

* 'नहि' इति एतावतो निषेधार्थत्वात्। सु. पृ. १०५६.

⌛ 'नहीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्' इति न्यायः। अयं कालिदासकविना कुमारसंभवे ( ३।६३ ) व्यवहृतः। साहस्री. ७२८.

⌛ नहि उपासना वस्तुतत्त्वमपेक्षते किं तर्हि यथावचनमनुष्ठेया इति न्यायः। ऐआसा. ३।१।८.

⌛ नहि एकमुदाहरणं योगारम्भं प्रयोजयति इति न्यायः। 'नामि' इति सूत्रे ( पा॰ ६।४।३ ) महाभाष्ये 'नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति' इत्युक्तम्। तच्च प्रकृतन्यायव्यञ्जकं इति ज्ञेयम् )। साहस्री. ४५०.

⌛ नहि एकमेव सविशेषं निर्विशेषं च भवति इति न्यायः। अयं न्यायः अद्वैतकौस्तुभेऽभिहितः। तत्र

हि– 'सत्यकामः सत्यसंकल्पः' 'अस्थूलमनण्वह्रस्वम्' इत्याद्युभयविधश्रुतिसंभवादुभयलिङ्गं ब्रह्मेति प्राप्ते, अभिधीयते। नोभयलिङ्गं ब्रह्म, एकस्य वस्तुनो द्वैरूप्यायोगात्। न ह्येकमेव सविशेषं निर्विशेषं च भवतीति युक्त्या इत्युक्तमिति। साहस्री. ७५४.

⌛ नहि एकं किञ्चिज्जनकम्, सामग्री वै जनिका इति न्यायस्य अन्यत्र व्यवस्थापितत्वात्। संमतितर्क. भागः १ पृ. १२.

⌛ नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति इति न्यायः। कण्ठीरवः सिंहः। कुरङ्गस्य मृगस्य शावः, शिशुरित्यर्थः। प्रतिभटः संमुखयुद्धकर्ता। अयं न्यायो बलवता सह निर्बलो नैव योद्धुं क्षमते इत्यर्थविवक्षायां प्रवर्तते। साहस्री. ६७१.

⌛ नहि करकङ्कणदर्शनाय आदर्शापेक्षा इति न्यायः। यथा प्रत्यक्षयोग्यं करे स्थितं कङ्कणं प्रत्यक्षेणैव गृह्यते, न तद्दर्शनाय आदर्शापेक्षा। एवं प्रत्यक्षसामग्रीसत्त्वे तयैव पदार्थप्रतीतिः, नानुमित्यादिसामग्र्यपेक्षेति विवक्षायामस्य प्रवृत्तिरिति। 'नहि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातारः' इति वाचस्पत्युक्तमेतन्न्यायमूलकमेव। अनुमित्सायां तु तदपेक्षा, 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इति वाचस्पत्युक्तेरिति। साहस्री. १६१.

⌛ 'नहि कर्मणि कर्मान्तरारम्भः'। शिवोक्तकामिकाद्यागमानां यावज्जीवलिङ्गधारणविधायकत्वात् 'नहि कर्मणि' इति न्यायेन नित्यौपासनादिपौण्डरीकान्तश्रौतस्मार्तकर्मणां निरवकाशत्वात्। श्रीकर. १।१।१ ब्रसू.

⌛ 'नहि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति' इति न्यायः। अयं भगवद्गीताषष्ठाध्यायचत्वारिंशच्छ्लोकोत्तरार्धरूपः, स्पष्टार्थः। साहस्री. ७५८.

⌛ 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति न्यायः। अयं श्रीमद्भगवद्गीतातृतीयाध्यायपञ्चमश्लोकपूर्वार्धरूपः पातञ्जले न्यायत्वेन व्यवहृतः। साहस्री. ७२५. * 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥' इति स्मृत्युक्तन्यायेन अवशेनापि जीवता पुरुषेण कर्म कर्तव्यमेव। उपदेशसाहस्री. पद्य. १।८ रामतीर्थ.

⌛ नहि कृतमुपकारं साधवो विस्मरन्ति इति न्यायः। स्पष्टः। साहस्री. ९८१.

⌛ नहि क्रियारहितं वाक्यमस्ति इति न्यायेन 'धेनुर्दक्षिणा' इत्यत्र क्रियापदाध्याहारः आवश्यकः। मुरारि. पृ. ११७८.

* नहि गमनसाधनस्य रथस्य चक्राद्यङ्गेषु अन्यतमस्य वैकल्ये गमनसाधनत्वं भवति। वि. ६।३।२.

* नहि गुणलोपेऽपि मुख्यो लोपमर्हति। पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि निर्वापो न लुप्यते। वि. १०।२।२७.

* ०नहि तयोर्धर्मशास्त्रम् (६।४।७।२५) इत्येवं सहितयोः (होमाभिषवयोः) निमित्तत्वात्। वा. ३।५।१३।३९.

⌛ नहि त्रिपुत्रो द्विपुत्रः (कथ्यते–संग्रहः) इति न्यायः। त्रित्वस्य द्वित्वव्यापकत्वेऽपि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेऽपि न तस्य द्विपुत्रशब्दवाच्यता। न्यूनसंख्याव्यवच्छेदकत्वेन त्रिशब्दस्य न यथा द्विपुत्रवाचकतेत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति। साहस्री. २९.

* नहि दग्धुकामस्य उदकोपादानं असति दाहे अनर्थकं इति दहनशक्तिमस्य जनयेत्। भा. ६।१।१।३ पृ. १३५३.

* नहि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति। यथा पाटनमन्तरेण विषव्रणानां नोपशान्तिः। वि. ३।८।४.

⌛ नहि दृष्टेऽनुपपन्नं इति न्यायः। नहि प्रत्यक्षविषये प्रमाणान्तरान्वेषणमिति यत्र विवक्षा तत्रास्य प्रवृत्तिः। तथाहि– प्रत्यक्षस्य सर्वप्रमाणबाधकत्वात्, अनुपपत्तेरर्थापत्तिरूपतया व्यतिरेकानुमितिरूपतया वा प्रत्यक्षेण बाध्यत्वात् प्रत्यक्षविषये विरोधिन्याः अनुपपत्तेर्न संभव इति। साहस्री. १६०.

* 'नहि दृष्टेऽनुपपन्नं नाम'। लोके राजभृत्योऽपि सर्वजनदत्तधनादिकं स्वद्रव्यवत् परिगृह्य तदन्तर्यामिराजसमर्पणं करोतीति दृष्टम्। श्रीकर. ३।२।४० ब्रसू.

* नहि दृष्टे संभवति अदृष्टकल्पना न्याय्या। बृहती. पृ. २०८.

नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवति। 'अतो हलादे:' इति सूत्रे अद्ग्रहणस्य न तावत् संध्यक्षरादिकं व्यावर्त्यम्, लघुग्रहणेनैव निरासात्। इत्–उत्–ऋत: परमवशिष्यन्ते अचेतीत्, अक्रोषीत्, अनर्तीत् इति। तेऽपि अन्तरङ्गेण गुणेनापहृताश्चेत् तर्हि व्यर्थं अद्ग्रहणं स्यात्। न च अकुटीत् अपुटीत् इत्यादौ उकारव्युदासाय तदिति वाच्यम्। तत्रापि अन्तरङ्गेण गुणेन वृद्धिबाधे सति गुणे ङित्त्वान्निषिद्धेऽपि वृद्धेरप्रवृत्ते: 'नहि देवदत्तस्य०' इति न्यायात्। शब्दकौस्तुभ. इको गुण.

* नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते किं तर्हि निन्दितादितरत् प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते, किन्तु इतरस्य विधि: (यथा अग्निहोत्रस्य 'उदिते जुहोति, अनुदिते जुहोति' इति कालद्वयस्य प्रत्येकं निन्दा)। भा. २।४।२।२१.

नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुं इति न्याय:। यथा– तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनं केवलायां निन्दायां प्रयोजनाभावादुभयपरत्वे वाक्यभेदप्रसङ्गाच्च। अक्षरार्थस्तु स्पष्ट:। अयमभिप्राय:—निन्दाऽर्थवादस्य तदितरस्य प्राशस्त्यविधानार्थमेव प्रवृत्तिर्न तु तस्य निन्दार्थम्, निन्दायां प्रयोजनाभाव इति। एवं मीमांसायां लोके च प्रसिद्धमुदाहरणान्तरमन्यत्र ज्ञेयमिति। साहस्री. १३७.

* 'नहि निन्दा० स्तोतुम्' इति न्याय: शाखान्तराधिकरणे प्रसङ्गादुक्त:। बाल. पृ. ५७. * 'नहि निन्दा० स्तोतुम्' इति न्यायेन 'स्तेनं मन:, अनृतवादिनी वाक्' इति निन्दया 'हिरण्यं हस्ते भवति' इति हिरण्यस्य स्तुति:। कौ. १।२।१।११. * 'नहि निन्दा० स्तोतुम्'। नहि स्तुतिनिन्दे नाम व्यवस्थिते। निन्दारूपासु स्तुतिषु, स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात्। यथा वक्ष्यति 'नहि० ... स्तोतुम्' इति। वा. १।२।१।७पृ. ११५. *'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च' इति। दशमे 'अनाहुति:' इति निन्दया निषेधकल्पनां पूर्वपक्षयित्वा 'नहि० स्तोतुम्' इति शाखान्तराधिकरणे प्रसङ्गादुक्तेन न्यायेन 'यत् पयसाऽग्निहोत्रं जुहोति' इति पयोविधिशेषत्वात् न निषेधकल्पना इति सिद्धान्तितम्। बाल. पृ. ५७. * अजादिनिन्दा च नहिनिन्दान्यायेन विधेयगवाश्वस्तुत्यर्था। कौ. १।४।४।२६. * अत्र नहिनिन्दान्यायेन वैखानसप्रशंसार्थोऽयमर्थवाद इति केषांचित् समाधानमसाधु। परिमल. २।२।८।४४ ब्रसू. * 'अनाहुतिर्वै जर्तिलाश्च' इति निन्दा नहिनिन्दान्यायेन पयोविधिस्तुत्यर्थैव। भाट्ट. १०।८।४. * उदितानुदितहोमस्थले इव नहिनिन्दान्यायेन तत्तछ्रुतिस्मृत्यादिपठितशिवप्रसादनिषेधवचनानां अग्निहोत्रादिकर्मस्तुतिपरत्वेन अन्यथासिद्धत्वात् ...। पूर्वोक्तनहिनिन्दान्यायेन निषेधवचनानां तत्र तात्पर्याभावात्। श्रीकर. १।२।७ब्रसू. * ऋङ्निन्दाऽपि नहिनिन्दान्यायेन विधेयसामस्तुत्यर्थैव। भाट्ट. ९।२।७ पृ. ११२. * पञ्चमप्रयाजे 'अग्न आज्यस्य व्यन्तु इति मन्त्रपाठं विनिन्द्य आज्यस्य हविषो व्यन्तु इत्येव ब्रूयात्' इति कौषीतकिब्राह्मणे (३।४) विधानेऽपि नहिनिन्दान्यायेन विधेयस्तुतिमात्रार्थत्वेन द्वयोरपि सिद्धान्तसिद्धत्वात्। संकर्ष. २।२।९. * विहितजर्तिलादिनिषेधस्य ग्रहणाग्रहणवत् विकल्पार्थत्वात् विकल्पस्य च 'पयसा जुहुयात्' इति द्रव्यान्तरविधानादेव सिद्धेर्निषेधानर्थक्यात् नहिनिन्दान्यायेन पयोविधिस्तुत्यर्थतैव। पराक्रम:. ४९।१. * शाखाऽन्तरे पाथिकृतीष्टे: अतिपन्नेन पूर्णमासेन दर्शेन च समानतन्त्रतानिन्दा नहिनिन्दान्यायेन पथिकृत्त्वगुणगुणविधिप्रशंसार्थैव, न तु समानतन्त्रतानिषेधार्था। कु. १।३।७।१२. * शुद्धपृथिवीचयननिषेध: 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधे: नहिनिन्दान्यायेन स्तुत्यर्थो नित्यानुवाद: वाङ्मनसयोरिव। कौ. १।२।३।१८. * सप्तशती (दुर्गा)-नवशतीमध्ये सप्तशतीनिन्दावचनं तु उदितानुदितहोमनिन्दाश्रुतिवत् नहिनिन्दान्यायेन नवशतीप्रशंसामात्रम्।

व्रतराजः. * 'सैनमीश्वरा प्रदहः' इत्यादेः केवल-वायुनिन्दायाः नहिनिन्दान्यायेन नियुत्वत्त्वगुणकवायुस्तुत्या तदेकवाक्यत्वम् ('वायवे नियुत्वते आलभेत' इत्यनेनैक-वाक्यत्वम्)। सोम. १।२।१ पृ. ५ पं. १९. * ('अथापि ज्ञानप्रशंसा भवति अज्ञाननिन्दा च'। १।१७) 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' (१।१८) इत्यादि निन्दा तु 'नहि-निन्दान्यायेन' ज्ञानप्रशंसार्था इति निरुक्ते यास्काचार्यैः स्पष्टमेवाभिहितम्। कु. १।२।४।४३ पृ. ४८.

* **नहि निमन्त्रितो** विप्रादिः अभोजितः संतुष्यति, प्रत्युत शपत्येव। एतदेवाभिप्रेत्य उच्यते 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये इत्युक्त्वा न यजते' इति। वि. १०।१।१ वर्णकं ३.

**नहि प्रतिज्ञामात्रेणार्थसिद्धिः इति न्यायः।** यथा प्रतिज्ञामात्रकरणेन प्रतिज्ञातोऽर्थो न सिध्यति, किन्तु प्रयासान्तरमेवेति भावः। साहस्री. १४९.

* **नहि प्रत्यक्षदृष्टं** मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति। भा. १।१।६।२०.

**नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यं इति न्यायः।** यथा न जलादेर्नवनीतजनकत्वादिकं बोध्यते इति। साहस्री. ९३२.

**नहि प्रमाणस्वरसात् प्रतीयमानं प्रयोजनानु-सारेण परित्यक्तुमुचितं इति न्यायः।** कु. २।२।२ पृ. १५८.

**'नहि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित्। प्रयोजनक्षमं नापि पदमाख्यातवर्जितम्॥'** (श्लोवा. १।१।७,३४६) नोदाहरणमिदम् (शुक्लो गौः) यथाश्रुत-मादरणीयम्। यतः पदार्थानामस्ति परस्परं संबन्धः इत्येता-वन्मात्रप्रतिपादनपरमिदं भाष्यम्, न तु पारमार्थिकम्। 'नहि० ... र्जितम्' इत्यादिवार्तिकप्रदर्शितन्यायात्। अतोऽत्रापि 'आनीयताम्' इत्यादिक्रियापदाध्याहारेणैव वाक्यपूरणम्। वैद्यनाथी. १।१।७।२५ पृ. ९६-९७.

**नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः इति न्यायः।** भारविश्लोकरूपोऽयम् (१।२)। साहस्री. ९६०.

* **नहि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति।** मीन्या.

**नहि भवति कुण्डं बदरं इति न्यायः।** आधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं नहि भवति कुण्डं बदरमिति। साहस्री. ६९०.

**'नहि भिक्षुर्भिक्षुं याचते'।** साकं प्रस्थायीयस्य अमावास्याविकारत्वमेव, तत्र नित्यं सांनाय्यदर्शनात्। दाक्षायणयज्ञविकारत्वं तु नास्ति 'नहि भिक्षुर्भिक्षुं याचते' इति न्यायात्। वैजयन्ती. २।६।५३.

**नहि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके इति न्यायेन** कारकाणि फलं त्यक्त्वा भावनायामेवान्वियन्ति इति मीमांसका मन्वते। भूषणसारः धात्वर्थनिर्णये का. १७. * **नहि भिक्षुको भिक्षुकं याचितुमर्हति सति अन्यस्मिन् अभिक्षुके इति न्यायः।** साहस्री.५८.* **'नहि भिक्षुको भिक्षुका-न्तरं याचते' इति न्यायेन** शतोक्थ्यादौ तेषुतेषु अहःसु वाचनिकानि स्तोत्राणि ज्योतिष्टोमस्थान्येव कार्याणि। भाट्ट. ८।३।५. * **नहि भिक्षुको भिक्षुकान्तरं याचितु-मर्हति सत्यन्यस्मिन्नभिक्षुके।** यत्र चोत्पत्तिस्तत एवा-गमनं युक्तम्, न यत्रातिदिष्टाः। 'नहि भिक्षु०... अभिक्षुके'। भामती. ८।३।५।१०-११ ब्रसू. * उक्थ्य-शब्दश्रवणमात्रेण प्रकृत्यनपेक्षज्योतिष्टोमगतानामेव प्रथम-प्रतीतिः इति तद्विकारत्वमेव, न तत्सापेक्षद्वादशाहगतो-क्थ्यविकारत्वम्। 'नहि भिक्षुकः' इति न्यायात्। सोम.८।३।५. * (ज्योतिष्टोमात्) यत्रोत्पन्नानि स्तोत्राणि तत एव वैकृतान्यपि आकाङ्क्षितुमर्हन्ति न द्वादशाहात्, 'नहि भिक्षुको० अभिक्षुके'। रत्न. ८।३।४।८-९.

**नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते इति न्यायः।** भामती. १।१।१ ब्रसू. पृ. ७४.

**नहि भुक्तवान् पुनर्भुङ्क्ते इति न्यायः।** उक्तश्चायम् 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (पा० ६।१।१२७) इतिसूत्रभाष्ये। साहस्री. ४८२.

**नहि मरुमरीचिसरसी क्रमशः शुष्यति इति न्यायः।** अयं भ्रान्तिविषयविवक्षायामवतरतीति स्पष्टः। साहस्री. ९२३.

⌛ नहि मृगाः सन्तीति शालयो नोप्यन्ते इति न्यायः । भामती. १।१।१ ब्रसू. पृ. ७४

⌛ 'नहि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति इति न्यायः । प्रमाणतो निवृत्ता प्रमाणतो दग्धा सा अविद्या भूयः पुनः कथं प्रसूयेत जायेत । ' नहि मृता० द्भवति ' तद्वदित्यर्थः । उपदेशसाहस्री. पद्य १।१८ रामतीर्थे ( 'निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः' इति मूलम् ) ।

⌛ नहि वरघाताय कन्यामुद्वहन्ति इति न्यायः । संग्रहः * नहिं वरघाताय कन्यावरणं इति न्यायः । संग्रहः * नहि वरघाताय कन्योद्वाहः । वि. १०।२।३२.

⌛ नहि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते, किन्तु वचनानुसारेण इति न्यायः । ऐआसा. ३।१।४.

⌛ नहिं विवाहानन्तरं वरपरीक्षा इति न्यायः । व्यर्थत्वात् इति भावः । साहस्री. ३०९.

⌛ नहि शाब्दमशाब्देन ( अन्वेति ) इति न्यायः । इच्छागोचरत्वस्य मोक्षसाधारणत्वात् तत्रैव यज्ञादिविनियोगः कुतो न स्यादिति शङ्कानिरासाय अयं न्यायः प्रवर्तते । साहस्री. २३८.

* नहि । 'सत्यम्, नहि कश्चिदत्र दोषः' इति वार्तिकम् ( पृ. ३९९ ) । अत्र सुधा 'निषेधार्थे नहि इत्यखण्डं पदम्' इति । पृ. ६०९ । पूर्वपाठे तु 'नहि' इत्यखण्डं पदं इति च । पृ. ६१६.

⌛ नहि सर्वः सर्वं जानाति इति न्यायः । साहस्री. ४७८.

⌛ नहि सर्वत्रानीशशक्तिः इति न्यायः । अनीशस्य जीवस्य शक्तिः न सर्वत्र प्रवर्तते, परिमितत्वात् इत्यर्थः । साहस्री. ४७९.

⌛ नहि सार्वभौमानन्दमनुभवन्राजा ग्रामाधिपतिसुखं तुच्छमपेक्षते इति न्यायः । अयमधिकसुखसत्त्वे अल्पसुखत्यागविवक्षायामवतरतीति । तथा ह्युक्तम्– एवं मुमुक्षुरखण्डैकरसपरमानन्दमनुभवन् नान्यतुच्छसुखमपेक्षते इति तत्त्वानुसंधानटीकायामिति । साहस्री. ७६०.

⌛ नहि सुतीक्ष्णाऽप्यसिधारा स्वयं छेत्तुमाहितव्यापारा इति न्यायः । अयं कर्तारं विना करणस्य कार्याक्षमत्वविवक्षायां प्रवर्तते । साहस्री. २२१.

⌛ नहि सुशिक्षितोऽपि बटुः स्वस्कन्धमारोढुं पटुः इति न्यायः । आत्माश्रयस्य दोषत्वविवक्षायां स्पष्टोऽयम् । साहस्री. २२०.

⌛ नहि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति इति न्यायः । साहस्री. ८७४.

⌛ नहि स्थालानि संपन्नानि इति भुक्तवताऽपि पुनर्भोक्तव्यं इति न्यायः । कल्पतरु. ३।२।२।७ ब्रसू.

⌛ नहि स्वयमसिद्धः परं साधयति इति न्यायः । नहि क्रियैव आत्मानं ( क्रियां ) कारयति अनिर्वर्तितायाः स्वरूपाभावात् इति । उपदेशसाहस्री. गद्य. १०५.

⌛ नहि स्वल्पो दोषः अमितगुणाभिभावकः इति न्यायः । साहस्री. ७७०.

⌛ नहि स्वस्कन्धं स्वयमारोढुं शक्नोति इति न्यायः । यत्र तु एकस्यैव कर्तृकर्मभावो लोकशास्त्रविरुद्धः प्रतीयते, तत्रायं प्रवर्तते इति । साहस्री. ५३३.

⌛ अवान्तरप्रकरणादेव निविदामपि सामिधेन्यङ्गत्वात् न व्यवधायकत्वम् 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् । कु. ३।१।११।२१ अवतरणे, * अस्तु वा वस्त्वन्तरमपूर्वम्, तथापि व्यापारवत्त्वेन यागस्य साधनत्वं न तत् ( अपूर्वं ) व्याहन्तुमीष्टे 'नहि स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् । २।१।२।३.

⌛ 'नहि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते' ( अनुमा इष्यते । इति न्यायः ) । 'प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम् ।' इति पूर्वार्धम् । वा. १।३।२।३ पृ. १७२.

[ इतः परं नशब्दारब्धसामासिकपदघटिताः नकारारब्धाश्च लघुसिद्धान्तादयो निवेश्यन्ते । ]

* नकारोऽयं निवृत्तिं ब्रवीति । सा च प्रवृत्तिमन्तरेण न संभवति । सा सामान्यशास्त्रेण वा भवेत् विशेषशास्त्रेण वा । टुपू. १०।८।१।१ पृ. २०५७.

* नक्षत्रं ऋतुं च न प्रतीक्षेत यदि आधानसमनन्तरं सोमेन यक्ष्यमाणः स्यात् । ५।४।३।६ । प्रतीक्षा-

भावोऽयं आधानविषयकः– आधानस्य ऋत्वादि न प्रतीक्षेत इति सूत्रकारभाष्यकारौ । सोमविषयकः— सोमस्य ऋत्वादि न प्रतीक्षेत, इति वार्तिकं तन्त्ररत्नं च । के.

* **नक्षत्राणि** आकाशे दृश्यमानानि । नक्षत्रेष्टिवाक्यशेषे अभिहितम् 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि यन्नक्षत्राणि' इति । वा. ३।१।७।१३ पृ. ७०२.

* **नक्षत्रेष्टिषु** ( नक्षत्रसत्रे ) प्रधानोत्तरं नारिष्ठहोमाः कर्तव्याः, ततः 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्यादयः उपहोमाः कर्तव्याः । न तु ब्राह्मणतर्पणान्ते इति मीमांसासिद्धान्तः । याज्ञिकास्तु उपहोमान् कृत्वा नारिष्ठहोमान् कुर्वन्ति । के. ५।२।९।१७–१९.

* **नक्षत्रेष्ट्यादौ** उपदिष्टैरुपहोमादिभिः आतिदेशिकानां नारिष्ठहोमादीनां समुच्चयः । भा. १०।४।१।१–२.

* **नक्षत्रेष्ट्युपहोमन्यायः** । उपहोमन्यायः द्रष्टव्यः । भा. ५।२।९।१७–२०.

* **नक्षत्रेष्टिन्यायः** । नक्षत्रेष्ट्युपहोमन्यायः । उपहोमन्यायः । (५।२।९।१७–२०) दीक्षणीयायाः सावित्रहोमात् प्रागनुष्ठानं नक्षत्रेष्ट्युपहोमन्यायात् इति पूर्वपक्षे । सू. ५।२।११।२२.

* **नक्षत्रसत्रे** प्रधानहोमाः 'अग्निर्नः पातु कृत्तिकाः' इत्यादियाज्यानुवाक्यापुरःसरं हूयन्ते । वि. ५।२।९.

* **नखेषु** प्राकृतोलूखलमुसलधर्मः प्रोक्षणं भवति राजसूये नैर्ऋते चरौ । भा. ९।२।१२।४०. * 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति नैर्ऋते चरौ । तत्र नखेषु प्रोक्षणोहोऽस्ति । वि. ९।१।२.

* **नखावपूतानां** नैर्ऋतश्चरुः राजसूये परिवृत्त्यै गृहे । भा. ९।२।१२।४०.

* **नखनिकृन्तनं** ज्योतिष्टोमे यजमानसंस्कारः । भा. ३।८।२।३–८, * नखनिकृन्तनं ( ज्योतिष्टोमे ) संस्कारः, न फलप्रयुक्तः, तत्र फलश्रुतिरर्थवादः तच्च क्रत्वर्थम् । ४।३।१।१–४.

* **नगरं** नैचाशाखं नाम । भा. १।२।४।३१–९.

* **नङ्क्ष्यति** इत्यत्र नाशो धात्वर्थः । वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वरूपं भविष्यत्वं प्रतियोगितासंबन्धेन धात्वर्थे अन्वेति । तेन वर्तमानप्रागभावप्रतियोग्युत्पत्तिककपालाधिकरणकनाशप्रतियोगी घटः इति बोधः । इति शिरोमणिः । मणि. पृ. २८.

⌛ **नटाङ्गनान्यायः** । यथा रङ्गभूमौ आगतां नटभार्यां योयो नटः पृच्छति कस्य भार्याऽसि सुश्रोणि, सा तंतं प्रति तवैवेति वदतीति प्रसिद्धम् । अयम् 'अजादेर्द्वितीयस्य' ( पा० ६।१।२३ ) इतिसूत्रमहाभाष्येऽभिहितः । तद्यथा– 'व्यञ्जनानि पुनः नटभार्यावद्भवन्तीति । यथा नटानां स्त्रियो रङ्गगता योयः पृच्छति कस्य यूयं कस्य यूयमिति तंतं तवतवेत्याहुः, एवं व्यञ्जनान्यपि यस्ययस्याऽचः कार्यमुच्यते तंतं भजन्ते' इति । साहस्री. ३७०.

⌛ **नड्वलोदकं पादरोगः इति न्यायः** । पादरोगनिमित्तमिति गम्यते । साहस्री. १९५.

⌛ **नदीक्षिताधिकरणम्** । ज्योतिष्टोमे 'दीक्षितो न ददाति' इत्यादिवाक्यं पुरुषार्थदानादेः प्रतिषेधकं पर्युदासो वा ॥

**दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् । १०।८।७।१२ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति, न जुहोति, न पचति' इति । अत्रैषोऽर्थः सांशयिकः किं सर्वदानहोमपाकानां प्रतिषेधः, उत अक्रतुयुक्तानाम्, अथवा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः अथवा पर्युदास इति । किं प्राप्तम् ? सर्वदानहोमपाकानां प्रतिषेधः । कुतः ? अविशेषात् । नास्ति विशेषवचनः शब्दः । तस्मात् सर्वेषां प्रतिषेध इति ।

**अक्रतुयुक्तानां वा धर्मः स्यात्, क्रतोः प्रत्यक्षशिष्टत्वात् । १३ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । न सर्वेषां प्रतिषेधः । केषां तर्हि ? अक्रतुयुक्तानां धर्मः स्यात् । कुतः ? क्रतोः प्रत्यक्षशिष्टत्वात् । प्रत्यक्षं हि क्रतौ दानादीनां शासनमस्ति । तस्मात् प्रत्यक्षं वर्जयित्वा प्रतिषेधः स्यात् ।

**तस्य वाऽप्यानुमानिकमविशेषात् । १४ ॥**

**भाष्यम्**— अपिवा तस्य क्रतोर्यदानुमानिकं चोदकप्राप्तम्, तत् प्रतिषिध्यते । आनुमानिकं हि तत् न प्रत्यक्षम् । प्रत्यक्षश्रुतश्च प्रतिषेधः ।

**अपितु वाक्यशेषत्वादितरपर्युदासः स्यात्, प्रतिषेधे विकल्पः स्यात् । १५ ॥**

**भाष्यम्**— ( अपि– ) तुशब्दोऽवधारणायाम् । वाक्यशेषः स्यात् प्रतिषेधः । उक्तानामविशेषेण दानादीनां ज्यौतिष्टोमिकपर्युदासेन प्रतिषेधो वाक्यशेषः स्यात् । 'अहरहर्दद्यात्' इत्यस्य शेषः 'न दीक्षितः' इति । एवं होमपाकवाक्ययोरपि । असति पर्युदासे, प्रतिषेधे विकल्पः स्यात् । स चान्याय्यः इत्युक्तम् । तस्मात् पर्युदास इति ।

**शा**— सूत्रभाष्यकाराभ्यां पर्युदासत्वमुक्तम् । वस्तुतस्तु लक्षणापरिहाराय पर्युदासपक्षं परित्यज्य श्रुत्यर्थतृष्णया प्रतिषेधत्वमेव अङ्गीकृत्य क्रत्वर्थप्रतिषेधे विकल्पप्रसङ्गात् पुरुषार्थानामेव ( दानपाकहोमानाम् ) प्रतिषेधः क्रत्वङ्गतया विधीयते इत्येतदेव समञ्जसम् ।

**सोम**— पूर्ववत् विकल्पः इत्युत्थितेः संगतिः । प्राभाकरैस्तु पुरुषार्थानामपि न प्रतिषेधः विकल्पप्रसङ्गात् किन्तु पर्युदासः इति सिद्धान्तितम् ।

**वि**— 'दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते । अतिदिष्टे पुमर्थे वा पुमर्थे वो, ( वा उ ) क्तितोऽग्रिमः ॥ उपदेशार्थवत्त्वाय मध्यमो, ऽन्त्यस्तु संनिधेः । एकवाक्यत्वलोभश्चेत् पुमर्थे पर्युदस्यताम् ॥'

**भाट्ट**— ज्योतिष्टोमे 'दीक्षितो न ददाति न जुहोति न पचति' इत्यादि श्रुतम् । तत्र किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामतिदिष्टानां च होमादीनां प्रतिषेधः पर्युदासो वा, उतोपदिष्टवर्जं सर्वेषाम्, उत पुरुषार्थानामेव अग्निहोत्रहोमादीनाम् । इति चिन्तायाम्, अविशेषात् सर्वेषामेवेति प्राप्तौ विकल्पप्रसङ्गात् आहत्यविहितानां ग्रहादिहोमानां प्रतिषेधपर्युदासयोः अनुपपत्तेः तद्वर्जं सर्वेषामेव पर्युदासः, प्रतिषेधे विकल्पापत्तेः । इति प्राप्ते, ज्योतिष्टोमस्य अपूर्वत्वेन तत्रातिदेशिकहोमानामभावात्, तदङ्गभूतेष्टिपशुसंबन्ध्यातिदेशिकानां च 'न सोमे' इतिवत् प्रतिषेधपर्युदासानुपपत्तेः, कथञ्चित् उपपत्तावपि वा प्रतिषेधविकल्पापत्तेः, पर्युदासाङ्गीकारे च लक्षणाप्रसङ्गात् पुरुषार्थानामेव अग्निहोत्रादीनां प्रतिषेधः । न च तदाऽपि विकल्पापत्तिः, पुरुषार्थत्वेन प्राप्तानां क्रत्वर्थत्वेन प्रतिषेधात्, भिन्नविषयत्वेन विकल्पानापत्तेः । यत्र हि एकार्थाविव विधिप्रतिषेधौ यथा 'न तौ पशौ करोति' इत्यादौ, तत्र विकल्पः । यत्र तु पुरुषार्थो विधिः क्रत्वर्थो निषेधः, यथा स्त्रीगमनमांसभक्षणादेः पुरुषार्थः स्मार्तो विधिः, क्रत्वर्थश्च श्रौतः प्रतिषेधः, न च तत्र विकल्पः । तद्वत् प्रकृतेऽपीति पार्थसारथिः । प्रकरणान्तराधिकरणादौ वार्तिकस्वरसोऽप्येवम् । वस्तुतस्तु– सामान्यतः पुरुषार्थतया प्रसक्तस्यापि दीक्षितपुरस्कारेण क्रत्वर्थतया प्रतिषेधोऽपि तेन रूपेण यदि नैव प्राप्तिः, तदा प्रतियोगिप्रसिद्ध्यभावादेव न प्रतिषेधः । यदि तु तदर्थं प्राप्त्यङ्गीकारः, तदा तस्याः शास्त्रीयत्वावश्यम्भावात् 'न तौ पशौ करोति' इत्यादिवत् विकल्पो दुरुद्धर एव । न च मांसभक्षणादिप्रतिषेधतुल्यत्वम्, मांसभक्षणे तावत् यत्र क्रत्वर्थेडाभक्षणादौ विधिः, तत्र विहिते निषेधाप्रवृत्तेर्नैव निषेधः, तस्य रागप्राप्तमांसभक्षणविषयत्वेनापि उपपत्तेः । यस्तु श्राद्धे 'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्' इत्यादौ च मांसभक्षणविधिः, सोऽभ्यनुज्ञाविधिमात्रम्, न तु अत्र मांसभक्षणस्य वस्तुतो वैधता । श्राद्धेऽपि दातुरभ्युदयः । भोक्तुस्तु ग्रहणश्राद्धभोजनवत् रागत एव प्रवृत्तिः । अतः क्वापि विहितमांसभक्षणप्रतिषेधाभावात् न तत्र विकल्पप्रसक्तिः । स्त्रीगमने तु यद्यपि 'ऋतौ भार्यामुपेयात्' इत्यत्र कालविशिष्टभार्यागमनस्यैव विधिः, न तु रागप्राप्तभार्यागमनानुवादेन कालमात्रविधिः, 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति' इति अगमने निन्दाश्रवणात्, तथापि गुणभूतकालानुरोधेन प्रधानभूतगमनावृत्तेः अन्याय्यत्वात् षोडशदिनात्मकऋतुकालमध्ये सकृदेकस्मिन् कस्मिंश्चिद्दिने त्रिषु वा दिनेषु गमनविधानेऽपि ऋतुदिनीयप्रवृत्तेः ऐच्छिकत्वात्, तस्याः क्रत्वर्थनिषेधेन निषेधेऽपि न विकल्पप्रसक्तिः । अत एव दैवादिना पञ्चदशदिनपर्यन्तमगमने षोडशेऽहनि

क्रतुप्रसक्तौ पुरुषार्थत्वात् गमनमेव क्रत्वर्थनिषेधोल्लङ्घनेनापि कार्यमिति धर्मशास्त्रविदः। सर्वथा यत्किञ्चिद्वैधनिषेधे विकल्प एवेति, प्रकृतेऽपि विकल्पप्रसङ्गो दुरुद्धरः।

किञ्च, एवं यावज्जीववाक्येन दीक्षितस्यापि अग्निहोत्राकरणे प्रत्यवायबोधनात् क्रतुमध्ये तेनाकरणेऽपि प्रत्यवायपरिहारार्थं प्रायश्चित्तप्रतिहोमयोरापत्तिः। एतेन वैधक्रियानिषेधविकल्पः न तु तत्कारकनिषेधेऽपि। अत एव 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ श्राद्धानुवादेन रात्रिरूपाधिकरणनिषेधेऽपि न विकल्पः। अतः प्रकृतेऽपि अग्निहोत्राद्यनुवादेन दीक्षितकर्तृनिषेधः क्रत्वर्थतया विधीयते इति कारकनिषेधान्न विकल्प इति केषांचिदुक्तं अपास्तम्। एवमपि दीक्षितस्य प्रतिहोमाद्यापत्तेरनिवारणात्। किञ्च, कारकस्यापि दीक्षितादेर्नैच्छातः प्राप्तिः, अपि तु वैधी। अतस्तत्रापि विकल्पापत्तिरनिवार्यैव। अत एव यत्र कारकस्य कालादेराक्षेपतो यस्यकस्यचिदनियता प्राप्तिः, तत्र रात्रिविषये प्रवृत्तेः ऐच्छिकत्वात् तन्निषेधेऽपि न विकल्प इत्युक्तं तृतीये। यत्र तु कारकस्यापि दीक्षितादेः अदीक्षितसाधारण्येन समुच्चयेनैव वा यावज्जीवादिवाक्यतः प्राप्तिः, तत्र तत्प्राप्तेर्वैधत्वावश्यम्भावात् क्रत्वर्थे पुरुषार्थे एव वा तन्निषेधे विकल्पो दुष्परिहार एव। यदि चैवं नेष्यते, तदा वरणानुवादेन होतृरूपस्य कर्मकारकस्यैव निषेधात् तत्रापि विकल्पानापत्तिः। किञ्च, एवं नञर्थस्य न तावन्मुख्यविशेष्यता, आख्यातार्थमुख्यविशेष्यकत्वस्यैव सिद्धान्तात्। नापि दीक्षितादौ प्रतियोगितासंसर्गेणान्वयः, तस्य आख्याततिरिक्तान्वये पर्युदासत्वापत्तेः। नापि दीक्षितप्रतियोगिकाभावस्य विषयतया कृतावन्वयः, अभावस्य कृतिविषयत्वानुपपत्तेः। अत एवमादिस्थले सर्वत्र दीक्षितकर्तृकाग्निहोत्रादिकृतिरेव अभावप्रतियोगिनी वाच्या। अतश्च विशिष्टक्रियानिषेधः एवायम्, फलतो विशेषणविषयत्वात्तु कारकनिषेधः इत्युच्यते। तत्र च कारकस्य नियतप्राप्तौ विकल्पः, अनियतप्राप्तौ तु ऐच्छिकत्वान्नेति विवेकः। अतः कथमपि प्रतिषेधे विकल्पस्य परिहर्तुमशक्यत्वात् सूत्रभाष्यन्यायसुधाकाराद्यभिप्रेतः पर्युदास एवायम्। स च दूरस्थैरपि अग्निहोत्रादिविधिभिर्वाक्यैकवाक्यतामभ्युपगम्य 'न दीक्षितोऽग्निहोत्रं जुहोति' इत्येवंरूपः। न तु संनिहितैरपि इष्टिपशुप्रकृतिवच्छब्दैः एकवाक्यतामङ्गीकृत्य होमादिवर्जं प्रकृतिवत् इत्येवंरूपः। तथात्वे होमत्वस्य भेदप्रतियोगिताऽवच्छेदकस्य औपदेशिकहोमसाधारण्येन तेषामपि पर्युदासे विकल्पस्य अनिवार्यत्वात्। आतिदेशिकहोमत्वे लक्षणाऽऽपत्तेः। अस्मन्मते तु होमत्वसामानाधिकरण्येन दीक्षितभिन्नकर्तृकत्वे विहिते, दीक्षितमात्रपुरस्कारेण होमाः प्रामाणिकाः तद्भिन्नहोममादाय तत् (निषेधवाक्यं) पर्यवस्यति, इति न लक्षणा। न च मन्मतेऽपि 'घटभिन्नं गृहस्थमानय' इत्यादौ घटस्य गृहस्थत्वप्रतीतिवत् होमवर्जं प्रकृतिवत् कुर्यादित्युक्ते प्राकृतहोमत्वस्यैव प्रतियोगिताऽवच्छेदकत्वप्रतीतेर्न लक्षणा इति वाच्यम्, तथापि दीक्षितपदश्रवणेन दीक्षितकर्तृकप्राकृतहोमत्वस्यैव प्रतियोगितावच्छेदकत्वापत्तेः, तादृशस्य चाप्रसिद्धतया निरुक्तपर्युदासानुपपत्तेः। न च दीक्षितकर्तृकत्वस्य प्रतियोगिताऽवच्छेदककोटिप्रवेशानङ्गीकारात् प्राकृतहोमत्वस्यैव तदङ्गीकारेण प्राकृतहोमभिन्नोद्देशेन दीक्षितकर्तृविधिः प्राकृतहोमादिषु तत्परिसंख्याफलको न विरुध्यते इति वाच्यम्। तथात्वे प्राकृतहोमादिभिन्नपदार्थेषु प्रयोजककर्तृतया दीक्षितप्राप्तावपि अध्वर्य्वादिबाधेन साक्षात् कर्तृत्वेन प्रतिप्रसवविधेरेवापत्तेः। प्राकृतहोमेषु च आध्वर्यवादीनामेव कर्तृत्वसिद्ध्यर्थं पर्युदासोपपत्तेर्न होमपरिसंख्यापत्तिः। न चेष्टापत्तिः। तथात्वे 'एतया पुनराधेयसंमितया इष्ट्या इष्ट्वा अग्निहोत्रं जुहोति' इति विधौ प्रकरणान्तरन्यायेन कर्मान्तरत्वापत्त्या कालविशिष्टकर्मान्तरविधाने गौरवापत्तेः। अतो विकल्पभिया निषेधे निवृत्ते पुरुषार्थाग्निहोत्राद्यनुवादेन अदीक्षिताधिकारकत्वस्यैव विधानरूपः पर्युदासः। तदा च पर्युदसनीयत्वेनोपस्थितत्वात् अग्निहोत्रस्य प्रकरणान्तरन्यायासंभवेन कर्मान्तरत्वानुपपत्तेः, तस्यैव अवभृथोत्तरं करणप्रसक्तौ अवध्यन्तरमात्रविधाने लाघवम्। अत एव अग्निहोत्राद्यङ्गकर्तृविधिः ज्योतिष्टोमप्रकरणे एतत्प्रयोजनक एव। अत एव दीक्षादशायां अग्निहोत्रहोमस्य न प्रतिहोमः इत्युक्तम्।

मण्डन — ' पर्युदासेऽन्यता भवेत् । '

शंकर— ' दीक्षिते पर्युदासाः स्यु । ' ८. ' निषेधा इति केचन । ' ९.

* **नदीक्षिताधिकरणम् ।** ( १०।८।७।१२–१५ ) । यदि च ' विकल्पप्रसक्त्यभावेऽपि प्रदेशान्तरस्थवाक्यशेषभावेन तदन्वयादपि विकल्पः पापीयान् ' इति न्यायव्युत्पादनार्थं नदीक्षिताधिकरणं स्यात् तदा ... । **परिमल.** ३।३।१५।२६ ब्रसू.

⌛ **नद्यम्बुवेगन्यायः ।** अयं श्रीमद्भगवद्गीतायां विवृतः । तथाहि , ' यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ ' इति । **साहस्री.** ९२४.

* **नदीतरणार्थो** मन्त्रः ' देवीरापः० ' इति । यदा अनेकस्रोतसं नदीं तरति , तदा मन्त्रस्य नावृत्तिः, किन्तु आदौ एव सकृन्मन्त्रः । ज्योतिष्टोमे । **के.** ११।४।१७।५०.

* **नदीसमुद्रदृष्टान्तेन** जीवभावनिवृत्तिपूर्वकशिवप्राप्तेरेव स्पष्टमुपदिष्टत्वात् । **श्रीकर.** ३।२।३१ ब्रसू.

⌛ **नदीसमुद्रन्यायः ।** अयं भगी. ८।८ श्लोकटीकायां नीलकण्ठेनोदाहृतः । तथाहि, अहमेव भगवान् सर्वात्मा वासुदेव इति सततमाचार्योपदेशं अनुध्यायन् तमेव नदीसमुद्रन्यायेन याति । हे पार्थ , तथा च श्रुतिः ' यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् पुण्यपापे विधूय परात्परं पुरुषमुपैति दिव्यम् ॥ ' इत्युक्तम् । **साहस्री.** ९१६. * नदीसमुद्रन्यायः । यथा नदी समुद्रश्च भिन्नौ , तथा जीवेश्वरौ भिन्नौ । **साहस्री.** ८१८. * **नदीसमुद्रन्यायेन** पुरुषे कला विलीयन्ते । **न्यायनि.** ४।२।८ ब्रसू. * अमूर्तशिवज्ञाननिष्ठानां इहैव शरीरे शिवज्ञानसामर्थ्येन पाशरूपाविद्यापटलं छित्वा **नदीसमुद्रवद्**विभागेन शिवसायुज्यमुक्तिर्लभ्यते । **श्रीकर.** ४।२।१६ ब्रसू., * आराधकाराध्यजीवब्रह्मणोर्नदीसमुद्रवत् परस्परस्वाभाविकभेदसत्त्वेऽपि मोक्षदशायां प्राप्यप्रापकत्वेन भेदाभेदव्यपदेशात् तदेव युक्तम् । ३।२।२६ ब्रसू., * संसारदशायां नदीसमुद्रवत् स्वाभाविकजीवभावनिवृत्तिपूर्वकपरतत्त्वप्राप्तिः । ४।४।१३ ब्रसू.

⌛ **ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः इति न्यायः ।** इति भारविः २।५ । **साहस्री.** ९६३.

* **नन्दान्तं क्षत्रियकुलं** इत्यादिः पौराणव्यवहारः । **मणि.** पृ. ४७.

* **नपुंसकं** स्त्री पुमान् इति द्रव्यविशेषा ह्येते । **भा.** ३।१।६।१२ पृ. ६८१. * सर्वविकारानुवृत्तसत्त्वरजस्तमोगुणानुगतगुणत्वसामान्यं स्थितिशब्दितं **नपुंसकलिङ्गं** इति शाब्दिकमर्यादा । **पराक्रमः.** ६०१२.

* **नयनस्य** एकहायन्याः अक्षाभ्यञ्जनादि न प्रयोजकं ज्योतिष्टोमे । **के.** ४।१।१०।२५.

⌛ ' स्वमपीतो भवति ' इति हि स्वरूपसंबन्धमेनमामनन्ति । स्वरूपसंबन्धस्य च अनपायित्वात् **नरनगरन्यायेन** संबन्धो घटते । **शांभा.** ३।२।२५ ब्रसू.

* **नरकपरिहारार्थोऽयं** प्रतिषेधः ' यो ब्राह्मणायागुरेत्० ' इत्यादिः । स च पुरुषगत एव नरकपातः संकीर्तितः , न तु क्रतुगतः । **वा.** ३।४।६।१७.

* **नरकप्राप्तिः** अनृतवदनात् भवति । ' नानृतं वदेत् ' इत्यनेन प्रतिषेधात् । **वा.** ३।४।४।१३ पृ. ९११.

* **नरसिंहवत् ।** ' अथवा नैव भिद्येते यागहोमौ परस्परम् । पूर्वापरौ हि सदृशौ तद्भागौ नरसिंहवत् ॥ ' **वा.** ३।४।१४।४१ पृ. ९८३ । नरसिंहाख्यस्य एकस्यार्थस्य पूर्वापरौ भागौ मनुष्यपञ्चाननाभ्यां सदृशौ भेदभ्रान्तिं कुरुतः । **सु.** पृ. १५३७.

* ' **नर्मदोत्तरभागे** तु कर्तव्यं सिंहयुक्तके । कुलीरे संस्थिते भानावुपकुर्यात्तु दक्षिणे ॥ ' बृहस्पतिः । इयं देशतः वाचनिकी व्यवस्था स्मार्ती । **बाल.** पृ. १८.

* **नलस्य** दमयन्ती ( पत्नी ) । **वा.** ३।४।१।९ पृ. ८९५.

* ' **नव** त्रिवृन्त्यहानि भवन्ति ' इति । अत्र चोदकप्राप्तानां द्वादशाहिकानां नानाऽह्नां त्रिवृत्ता विधीयते , न तु प्रथमस्य त्रिवृतोऽह्नोऽभ्यासः । **भा.** ८।३।२।३–५.

* **नवान्नप्रथमप्राशनप्रागभावविशिष्टवसन्तादिकाल**–जीवित्वस्यैव आग्रयणाधिकारिताऽवच्छेदकत्वेन बुभुक्षादेः

तद्घटकत्वे मानाभावात् इष्टिपरिमितनवान्नलाभेऽपि अप्रतिहतोऽधिकारः । संकर्ष. ३।१।१४.

नववैधव्यमसह्यवेदनमिति न्यायः । असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम् । विधवाया मृतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । नवग्रहणं दुःसहत्वद्योतनार्थम् । अन्यत् स्पष्टमिति । साहस्री. ९५१.

* 'नवनीतमाज्यं भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन । भा. १२।३।२।८. * नवनीतं ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे । तत्स्तुतये च 'घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम्' इत्यनुवादः । वि. ३।४।७. * नवनीतेन अभ्यञ्जनं दीक्षाकालं सुखप्रचाराय स्नेहनार्थम् । भा. १०।४। ६।१२, * नवनीतेन । यथा 'नावनीतेन भङ्क्ते' इति अचिरनिर्दग्धेनेति गम्यते । ( सर्वघृतानां च नवनीतविकारत्वात् पुनःश्रुतेः अचिरनिर्दग्धनवनीतार्थता स्यात् । वा. ) । १।४।९।१२ पृ. ३४५.

* नवनीताभ्यञ्जनस्य प्राकृतस्य अञ्जनाभ्यञ्जनाख्यसत्रोपदिष्टगौग्गुलवाभ्यञ्जनादिना समुच्चयः । भा. १०। ४।६।१०–१२.

* नवमे अध्याये ऊहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः मन्त्रसामसंस्कारविषयः, स इह प्राधान्येन वक्ष्यते । अन्यदपि किञ्चित् उपोद्घातेन प्रसङ्गेन च । ( उपकारातिदेशे सति ऊहोऽवकल्पते । शास्त्रातिदेशे सति ऊहाभावः )। भा. ९।१।१।१ पृ. १६३५ । 'ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः । नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥' नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचारारम्भः । तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः । अवघातमन्त्रादिषु अविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः । सवित्रश्विपूषशब्दानां विकृतिषु नास्त्यूहः । अग्निशब्दस्य अस्त्यूहः, इत्यादिकः ऊहविचारारम्भः । द्वितीये सपरिकरः सामोहः । तृतीये मन्त्रोहः । चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः । वि. प्रस्तावना श्लो. २१. * नवमे अध्याये प्रथमेऽधिकरणे 'संनिपत्योपकारका ये धर्माः तेऽपि अपूर्वार्था इति प्रतिपाद्यते ऊहसिद्धये' । वा. ९।१।१।१ पृ. १६३८. * नवमे ( ९।४।११ ) अभ्युदयेष्टौ ( पशुकामेष्टौ ) इज्यार्थत्वेन श्रपणानङ्गभूतयोरपि दधिपयसोः प्रणीताख्यानापत्त्या प्रणीताधर्मप्राप्तिः स्थापिता । बाल. पृ. १६९.

* नवमाधिकरणपूर्वपक्षन्यायेन मन्द्रादेः यज्ञभागधर्मता अवसीयते । सु. पृ. ११८२.

* नवमाद्यन्यायेन धर्मस्य कार्यप्रयुक्तत्वात् । सु. पृ. १३७९, * नवमाद्यन्यायेन मन्त्राणामपि अपूर्वगुणत्वावगतेः । पृ. १२५६. * नवमाद्यन्यायेन ( व्रीहीन् प्रोक्षति इति ) व्रीहिस्वरूपे आनर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । कौ. ३।१।४।८ पृ. १४४. * पात्रप्रोक्षणविधिनैव उलूखलमुसलयोरपि प्रोक्षणं प्राप्तम्, तत्तु पूर्वाधिकरणन्यायेनैव नवमाद्येन उलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तम् । भाट्ट. ९।१।२.

* नवरात्रे चयनाग्निः कर्तुं शक्यते । भा. १०।८। ११।२३.

* नशब्दः प्रथमेऽधिकरणे ( १०।८।१ ) पर्युदासार्थः ( महापितृयज्ञे 'न होतारं वृणीते नार्षेयम्' 'नानुयाजेषु' इत्यत्र ) । द्वितीये तु अर्थवादार्थः ( 'न तौ–आज्यभागौ–पशौ करोति न सोमे' इत्यत्र ) । अथ किंलक्षणः प्रतिषेधः इति । ( तृतीये अधिकरणे नशब्दः 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र प्रतिषेधार्थः ) । भा. १०।८।३।६, * नित्यो हि अस्य 'नशब्दस्य' सुबन्तसंबन्धेन समासः इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म । 'वावचनानर्थक्यं च स्वभावसिद्धत्वात्' इति । नेति भगवान् पाणिनिः । स हि 'विभाषा' इति प्रकृत्य ईदृशं समासमुक्तवान् । सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्, असद्वादित्वाच्च कात्यायनस्य । १०।८।१।४ पृ. २०६१.

* 'नश्यति' इत्यत्र दर्शनाभावरूपफलमेव वाच्यम् । मणि. पृ. १०२.

नष्टाश्वदग्धरथन्यायः । यथा द्वौ रथिनौ कश्चित् ग्रामं प्रविश्य रथाभ्यामवतीर्य अश्वांश्च ताभ्यां मोचयित्वा स्वाभीष्टखट्वादौ निविष्टौ । ततो दैवेन अग्निना

दंदह्यमाने ग्रामे तयोरेकः पश्चादश्वान् निःसारयिष्यामीति धिया रथमादौ निःसारितवान्। परस्तु अश्वान्। तावता तस्मिन् स्थले दग्धे एकस्य अश्वा नष्टाः द्वितीयस्य रथो दग्धः। तौ च यथा अन्योन्याकाङ्क्षया हि एकं रथं कृत्वा स्वेष्टदेशं प्रापतुः, तथा अर्थवादविधिवाक्ये च इतरेतराकाङ्क्षया एकवाक्यतां प्राप्य प्रवृत्त्यादि जनयतः इति संक्षेपः। 'स्थानेऽन्तरतमः' (पा० १।१।५०) इति-सूत्रमहाभाष्येऽप्युक्तोऽयं न्यायः। तद्यथा—'संप्रयोगो वा नष्टाश्वदग्धरथवत्। अथवा नष्टाश्वदग्धरथवत् सह संप्रयोगो भवति। तद्यथा— तव अश्वो नष्टो ममापि रथो दग्धः उभौ संप्रयुज्यावहै' इति। **साहस्री. १५५.**

* **नष्टाश्वदग्धरथवत्** (दर्शपूर्णमासयोः प्रयाजादीनां च) परस्परनियमः सिद्धः। **वा.** ३।३।४।११. * 'नष्टाश्वदग्धरथवत् संबन्धः' इति **शा.**। यस्य रथिनो रथोऽस्ति, अश्वा नष्टाः, यस्य चाश्वाः सन्ति रथो दग्धः, तयोरुभयोरपि यथा परस्परापेक्षया संबन्धः, एवं इरापदस्य गिरापदगीतेश्च संबन्धः सिद्धः इति। **सोम.** ९।१।१७. * उक्तयोः 'सोऽरोदीत्' इति च 'बर्हिषि रजतं न देयम्' इति च पदसंदर्भयोः लक्ष्यमाणनिन्दाद्वारेण **नष्टाश्वदग्धरथवत्** परस्परं समन्वयः। **भामती.** १।१।८ पृ. १०८. * गिरापदे पदान्तरोपदेशान्निवृत्ते यस्तद्गतो गीत्यंशः स गेयमपेक्षते, इरापदमपि सामसाध्ये स्तवे सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते तयोः नष्टाश्वदग्धरथवत् संबन्धः। **शा.** ९।१।१७. * तस्मात्तदाकाङ्क्षायामुपनिपतितान्येतानि वाक्यानि स्वकार्यापेक्षाणि तदपेक्षितकरणोपकारलक्षणं कार्यमासाद्य निवृण्वन्ति च निर्वारयन्ति च प्रधानम्, सोऽयमनयोः नष्टाश्वदग्धरथवत्संयोगः। **भामती.** ३।३।१४।२५. * ननु ग्रहणार्थाया अपि देवताया यागापेक्षा वर्तते, यागादन्यत्र देवताया असंभवात्। 'सोमेन यजेत' इति यागस्यापि देवतापेक्षा विद्यते। तयोश्च नष्टाश्वदग्धरथवत् परस्परसंबन्धावश्यम्भावात्। इत्यत आह। **सोम** ८।१।९. * सोयं नष्टाश्वदग्धरथवत् संप्रयोगः (विध्युद्देशार्थपादयोः)। **वा.** १।२।१।७ पृ. ११५.

* **नष्टरूपी** अनुष्टुप्। पादेषु अक्षराणि ९।१०।१३ उदा० 'वि पृच्छामि पाक्या' (ऋसं. १।१२०।४)। **के.**

⌛ **नसिप्रोतबलीवर्दन्यायः।** यथा बलीवर्दा वृषभा नसि नासिकायां त्रिवृत्कृततन्तुदामभिः प्रोताः स्यूता नासिकाछिद्रस्यूतह्रस्वदामभिराधारभूतायां दीर्घायां तन्त्यां बद्धा इति यावत्, स्वस्वामिनो व्रीह्यादिगोणीर्वहन्ति, तथा ब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारिगृहस्थवानप्रस्थयतय इतिनामात्मकदामभिर्वाक्तन्त्या विधिनिषेधात्मकवेदलक्षणायां बद्धा वेदलक्षणा दीर्घरज्जुः ब्राह्मणक्षत्रियादिरूपो योनिसंबन्धः, इन्द्रियाणि बलीवर्दाः, भगवदिच्छा स्तम्भः। एवं सति स्ववर्णाश्रमविहितकर्मभिरीश्वरस्य बलिं यज्ञादिलक्षणपूजां कुर्वन्तीति भावः। उक्तं च श्रीमद्भागवतप्रथमस्कन्धत्रयोदशाध्यायैकचत्वारिंशपद्ये 'यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः। वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः॥' इति। **साहस्री. ५९२.**

⌛ 'नसोमन्यायः' (१०।८।२५)। आज्यभागौ 'न तौ पशौ करोति, न सोमे'। 'इह तु आधारत्वेन सोमः श्रूयते न संबन्धिमात्रतया (वाजपेयस्य इतिवत्)। न च परंपरासंबन्धे अस्त्याधारत्वं इति साक्षादेवायं सोमसंबन्धः प्रतीयते, स चाप्राप्त इति। तस्मात् अर्थवादार्थे सोमग्रहणम्'। **टुप्.** १०।८।२५ पृ. २०६२.

* **नहुषस्य** परदाराभियोगात् धर्मव्यतिक्रमः। **वा.** १।३।३।७ पृ. २०३। इन्द्रे ब्रह्महत्याभयादपक्रान्ते नहुषः स्ववीर्येण इन्द्रपदमधिष्ठाय तद्भार्यां शचीं अभिगन्तुं यत्नं चकार। **सु.** पृ. १८५। अत्रोच्यते। नहुषेण परस्त्रीप्रार्थनानिमित्तानन्तरकालाजगरत्वप्राप्त्यैव आत्मनो दुराचारत्वं प्रख्यापितम्। **वा.** पृ. २०८। व्यतिक्रमेऽपि धर्मबुद्ध्या क्रियमाणस्याचारस्य व्यतिक्रमाभावात् न दोषः। **सु.** पृ. १९१.

[ **नागृहीतविशेषणान्यायस्य** अक्षरभेदेन नानारूपत्वेऽपि अर्थानुसारेण एकत्रैव सर्वेषां निवेशः कृतोऽस्माभिः। तेन वर्णानुक्रमे क्वचित् अन्यथात्वं जातम्। **के.** ]

नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति इति न्यायः । जातिरेव शब्दार्थ इति मीमांसकमतम् । तथाहि, व्यक्तीनामानन्त्यादेकव्यक्तौ शक्तिग्रहे व्यक्त्यन्तराबोधाच्च न व्यक्तौ शक्तिसंभवः । जातिविशिष्टायां व्यक्तौ शक्तिरित्युक्तौ तु नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायात् आवश्यकत्वाच्च जातावेव शक्तिरस्तु व्यक्तिबोधस्तु आक्षेपादित्यन्यत्र विस्तरः । साहस्री. ४६१.

* नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते। मञ्जूषा. प्रातिपदिकार्थे. पृ. ११०. * सर्वत्र हि अगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न तु अनभिहितविशेषणा । वा. १।४।१।२ पृ. ३२६. * नागृहीते विशेषणे विशिष्टबुद्धिरुदेति । न्यायकुसुमाञ्जलिः. स्तबकः ३ पृ. १०५. * नहि अगृहीतविशेषणा विशिष्टे बुद्धिः। नहि अप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्ति । भा. १।३। ९।३३ पृ. ३०४। प्रतीते विशेषणे विशिष्टः प्रतीयते । पृ. ३१८ पं. ४ । नागृहीतविशेषणा इति न्यायात् । वा. पृ. ३०४. * विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां श्रुत्यैव क्रियार्थतामाह । क्रिया साध्या साधनं तत्परिच्छेदकानि च लिङ्गसंख्यादीनपेक्षते । अतः सर्वविशेषणविशिष्टा क्रियैव विधीयते । तत्र प्रत्ययः पूर्वं विशेषणे व्याप्रीयतेऽन्यथानुपपत्त्या, नहि अगृहीतविशेषणा विशिष्टे बुद्धिः इति । वा. ४।१।५।१५. * अरुणाशब्दोऽरुणिमानं गुणमाचष्टे गुणिविषयतया प्रयुज्यमानस्यापि 'नागृहीतविशेषणा विशिष्टे बुद्धिः' इति न्यायेन गुणबोधकत्वात् । वि. ३।१।६. * नागृहीतविशेषणा विशेष्ये बुद्धिः। अथ प्रतीतिरप्रतीताऽपि प्रतीत्यन्तरव्यवस्थापिका, तर्हि प्रथमप्रतीतिरपि अव्यवस्थिताऽपि अर्थव्यवस्थापिका भविष्यतीति 'नागृहीत०...बुद्धिः' इति वचः कथं न परिप्लवेत । 'प्रतीतोऽर्थे' इति विशेष्यप्रतिपत्तौ प्रतीतिविशेषणानवगमेऽपि विशेष्यप्रतिपत्त्यभ्युपगमात् । संमतितर्क. भागः १ पृ. ८४. * आकृत्यधिकरणव्युत्पाद्येन 'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते' इति न्यायेन केवलगुणवाचको लक्षणया द्रव्येऽपि प्रयुज्यते । कु. ३।१।६।१२ पृ. २५४. * गीतिविशिष्टायामृचि एषः (रथंतरादिः) शब्दो दृष्टः । न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । तस्मात् विशेषणं तावदभिधीयते । विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। भा.७।२।१।१३. * नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते इति न्यायेन जात्यभिधानावश्यम्भावे तत एव व्यक्तेः प्रतीतिसिद्धेः अभिधेयत्वासंभवात् । कु. १।३।११।३१. * यदि तस्यामेव ऋचि सत्यां गीतौ सामप्रयोगः असत्यां चाप्रयोगः तदा नागृहीतविशेषणान्यायः । इह तु गीतिवियोगे ऋगेव सा नास्ति । तस्मादृगन्यत्वात् नात्र नागृहीतविशेषणान्यायः । इति शङ्का । सोम. ७।२।१. * यत्र न किञ्चित् प्राधान्यनियामकम्, तत्रैव घटत्वादौ नागृहीतविशेषणान्यायः इत्यादि कौस्तुभे (३।१।६।१२) स्पष्टम्। भाट्ट. ३।४।८ पृ. ३२१. * संस्कारविशेषाणामनेकत्वात् न नागृहीतविशेषणान्यायः । तेन उभयविशिष्टे उभयोपलक्षिते वा काष्ठविशेषे एव शक्तिरित्यन्ये । कौ. * अग्निष्टोमादिशब्दानां (शताग्निष्टोमं शतोक्थ्यं इ.) नागृहीतविशेषणान्यायेन संस्थामात्रवाचित्वात् ज्योतिष्टोमे निरूढलक्षणाङ्गीकारेऽपि । भाट्ट. ८।३।४. * अथ भावनाऽन्यप्रवृत्तिपक्षे नागृहीतविशेषणान्यायेन प्रवृत्तेर्नियतं प्रत्याय्यत्वात् जातिवत् सैव लिङः शक्त्या अस्तु, न तु आज्ञाऽऽदिः अनियतो व्यापारः ... इति चेत् । भाट्टालंकारः. २९. * आकृत्यधिकरणव्युत्पादितेन 'नागृहीतविशेषणान्यायेन' आद्यप्रवर्तनापरपर्यायाद्यानुष्ठानात्मकाद्यप्रयोगस्यैव प्रथमशब्दमुख्यार्थतया (न प्रथमयज्ञे प्रवृञ्ज्यात्) प्रथमप्रयोगाङ्गमेव प्रतिषेधः इति युज्यते । कु. ३।३।१७। २८. * क्रियाशक्तिरूपत्वात् कारकस्य क्रियां विना भावनाऽशक्तेर्वाच्यत्वाभ्युपगमे क्रियाविशिष्टस्यैव वाच्यत्वप्रसङ्गात् नागृहीतविशेषणान्यायेन क्रियाया एव वाच्यत्वावगतेः क्रियया कारकाक्षेपोपपत्तिमाशङ्क्य । सु. पृ. १४३१. * गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसंख्यामात्रवाचित्वान्नागृहीतविशेषणान्यायेन लक्षणयाऽपि ऋक्षु प्रयोगोपपत्तेः तत्रापि न शक्तिः । भाट्ट. ८।३।६. * यूपादिशब्दानां तु संस्कारमपहाय क्वचिदपि प्रयोगाभावात् अगत्या संस्कारनिमित्तताऽङ्गीकरणम् । तत्रापि नागृहीतविशेषणान्यायेन

दृष्टादृष्टसंस्काररूपविशेषणेष्वेव शक्तिः, न तु तद्विशिष्टकाष्ठे इति केचित् । कौ. * षोडशिशब्देन नागृहीतविशेषणान्यायेन संख्यावचनेनापि तद्विशिष्टक्रतोरुपस्थापनेन ... । भाट्ट. १०।५।९ * द्रव्यकारकपक्षेऽपि निर्व्यापारस्य कारकत्वायोगात् शक्तिरहितस्य च व्यापारायोगात् शक्तिविशिष्टस्यैव कारकतया अभ्युपगन्तव्यत्वेन कारकाभिधानपक्षे **नागृहीतविशेषणान्यायात्** शक्तिमात्राभिधानापत्तेः श्रौतं द्रव्यशब्दसामानाधिकरण्यं न युज्यते । सु.पृ.१४४०. * यद्यपि तत्तत्संख्याकज्योतिष्टोमेऽपि (ज्योतिष्टोमपदस्य) प्रचुरप्रयोगोऽस्त्येव, तथापि नागृहीतविशेषणान्यायात् प्रचुरतया प्रयोगाच्च संस्थायामेव शक्तिः । ज्योतिष्टोमे तु निरूढलक्षणा प्रचुरप्रयोगात् । क्रत्वन्तरे तु ( अग्निष्टोमातिरिक्ते ) सांप्रतिकी ( लक्षणा ) क्वाचित्कप्रयोगात् । कौ. २।३।१०।२२ पृ. ७२. * व्यक्तिविशिष्टाकृतिमार्गोऽपि ( प्रत्युक्तः ) 'नागृहीतविशेषणा॰' इति न्यायात् व्यक्तेः प्रथमग्रहणप्रसङ्गात् । वा. १।३।९।३३ पृ. ३०४. * **नागृहीतविशेषणान्यायस्य** ('यद्वैतदविशेषेण स्थितं क्रमवशादुभौ । प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति ॥' वा. पृ. ९०२ ) क्रमवशोक्तिसूचितस्य, 'उभौ' इत्यादिसूचितस्य च ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ' इति स्मरणस्य आख्यातेषु अपवादाभावोक्त्यर्थत्वेन अविशेषः । सु. पृ. १३७१. * नागृहीतविशेषणान्यायस्य लोकवेदाधिकरणव्युत्पाद्यस्य 'रथंतरमुत्तरयोर्गायति' इत्यादौ प्रयोजनं समस्त्येव । कौ., * नागृहीतविशेषणान्यायस्य विषयाविषयनिरूपणम्, सर्वत्र तावत् अनेकार्थबोधके पदे एकत्र शक्तिः, अन्यत्र आक्षेपः इति अनेकशक्तिकल्पनापरिहाराय अवश्यमभ्युपेतव्यम् । तत्रापि च गुरुभूतेऽपि प्रधाने शक्तिः, तेन च अप्रधानानामाक्षेपः इत्युत्सर्गः । यत्रोभयोरपि प्राधान्यम्, तत्र नागृहीतविशेषणान्यायः । दुर्बलस्यापि प्रधानस्य अभ्यर्हितत्वात् । यथैव आख्यातस्य भावशब्दवाच्यायां भावनायामेव शक्तिः कर्तुस्त्वाक्षेपः, तथैव कृत्तद्धितमतुबन्तादीनां नामसंज्ञत्वात् विभक्तिवाच्यसंख्यान्वययोग्यस्य सत्त्वपदाभिधेयस्य द्रव्यस्यैव प्राधान्यात् तद्वाच्यत्वावगतेः न कृत्यादौ विशेषणे शक्तिः । अत एव न तत्र नागृहीतविशेषणान्यायः । किन्तु यत्र जातिव्यक्त्योः गुणद्रव्ययोर्वा तृतीयाद्वितीयाऽऽदौ सत्त्वतावधारणात् उभयोः प्राधान्यं तत्रैव सः । ३।१।६।१२ पृ. १५९.

* **नागृहीतविशेषणान्यायबलेन** कर्तृकर्मविशिष्टसंख्याबोधकता हेतुत्वेन विवक्षिता । सु. पृ. १४३७.

⌛ **नागोष्ट्रन्यायः** । नागेन अजगरेण वेष्टितमुष्ट्रं रक्षन् कश्चित् बाणैरजगरं जघान इति लौकिकी गाथा । तथा निषेधवाक्यानि बाधावधित्वेन आत्मानं रक्षन्ति अनाम्नानं बाधन्ते । संग्रहः.

* **नागरिकभाषाभिज्ञतया** यः ग्रामीणौ मातापितरावपि शुक्तवचनैरभिदधीत, स केन अन्येन वार्येत ? ( शुक्तवचनैः निष्ठुरवचनैः ) । ' परत्राविनयं कुर्वन् पितृभ्यां वार्यते सुतः । तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥' वा. १।३।८।२७ पृ. २८५.

* **नाडिका** ( घटिका ) आकाशावयवविशेषातिक्रमफलकसूर्यादिगतिक्षणप्रचयात्मकस्य नाडिकादेः मुहूर्तादिवदेव नैपुण्येन स्वतः परिच्छेत्तुमशक्यत्वात् षष्ठ्याः पानीयपलानां यत्र घटीपूरणफलकघटीछिद्रोर्ध्वगतिक्षणप्रचयात्मिका नाडिका । सु. पृ. ९७२, * नाडिका नभःषष्टितमभागातिलङ्घनफलः सूर्यादिगतिप्रचयः इति क्रियातिरिक्तकालाभाववादिनः । पृ. ९७०.

* **नादः** नाम ( वायवीय— ) संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जयन्तः नादशब्दवाच्याः । भा. १।१।६।१७.

* ' **नादवृद्धिपरा** ' ( १।१।६।१७ ) इति पाठपक्षे शब्दस्य वृद्धिः या उक्ता सा नादवृद्धिः परं विषयो यस्यास्तादृशी नादवृद्धिपरा ज्ञेया इति । एतत्पाठे प्रमाणं तु **न्यायरत्नाकरे** ' सूत्रं नादवृद्धिपरा इति ' इत्युपन्यासः, ' वृद्ध्यसंभवात् नादवृद्धीतिसूत्रेण ' इति च २२८ श्लोके ।

'नादवृद्धिः परा ' इति पाठे तु परा पूर्वपक्षिणा प्रकृतिविकृतिभावोक्त्यनन्तरं उक्ता शब्दवृद्धिः नादवृद्धिः स्यात् । नेयं वृद्धिः शब्दस्य किन्तु नादस्येत्यर्थः । अत्र पाठे प्रमाणं तु ' तेन नादस्यैषा वृद्धिः न शब्दस्य ' इति भाष्यमेव । अस्मिन्नेव पाठे भाष्यमिदमुपपद्यते नान्यपाठे । बृहत्यां ऋजुविमलायां च एवं सूत्रोपन्यासो-

ऽपि प्रमाणम्, कुतूहलवृत्तौ सूत्रोपन्यासो व्याख्या च स्पष्टैवात्र। के.

**ꕢ नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात्। १२।१।३।८॥**

सोमे अग्निष्टोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्तन्ते, तेषां वेदिकर्म पृथक् स्यात्। वेदिः भेदेन कर्तव्या नानार्थत्वात् नानाविधः अर्थः प्रयोजनं ययोः वेद्योः तादृशत्वात्। दार्शपूर्णमासिकी हविरासादनार्था, सौमिकी तु प्रचारार्था। तत्र प्रसङ्गो न संभवति। तस्मात् सोमे दार्शपौर्णमासिकी वेदिः पृथक् कार्या इति पूर्वः पक्षः।

**अकर्म वा कृतदूषा स्यात्। ९॥**

सोमे दार्शिक्याः वेदेः अकर्म। अग्निष्टोमे दार्शिकी वेदिः ऐष्टिककर्मकरणार्थं पृथक् न कर्तव्या। वाशब्देन पूर्वपक्षस्य व्यावृत्तिः। दार्शिकी वेदी सोमे कृता सती कृतदूषा स्यात्। कृता दूषा दूषणं यया सा कृतदूषा। कृतया दार्शिक्या वेद्या सौमिक्या वेदेः दूषणं स्यात्। तस्मान्न कर्तव्या इति सिद्धान्तः। के.

* नानार्थत्वात् सोमे०। सोमाङ्गभूतमहावेद्यैव ऐष्टिकहविरासादनादिकार्यस्य पृथगनुष्ठेयस्यापि अनुनिष्पादनात् तदङ्गभूतदार्शपूर्णमासिकवेदिनिवृत्तिः द्वादशे वक्ष्यते। कौ. २।१।५।१२ पृ. ८४.

**ꕢ नानाऽहीनेषु प्रत्यहीनं चतुर्थे दिवसे षोडशिनो ग्रहणम्॥**

**चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत्। १०।५।१४।५५॥**

भाष्यम्— षोडशिनं प्रकृत्य आमनन्ति, 'चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यते' इति। अत्रैषोऽर्थः सांशयिकः किमेकस्मिन्नहीने चतुर्थे दिवसे षोडशी अभ्यसितव्यः, उतैकस्मादहीनादहीनान्तरे चतुर्थेऽहनि गृह्यते इत्येवमभ्यसितव्य इति। किं प्राप्तम्? एकस्मिन्नभ्यसितव्य इति। कुतः? अहीनस्यैकस्येत्युच्यते। नानाऽहीनेषु चेत् इष्यते, सा लक्षणा भवति। अस्मिन् पक्षे श्रुतिः। अपिच वीप्साऽऽनर्थक्यं नानाऽहीनेषु चेत् स्यात्। चतुर्थेऽहन्यहीनस्य एतावतैव तत् सिध्यति। एकस्मिंस्तु वीप्सा अर्थवती भवति। तस्मादेकस्मिन्नहीने अभ्यसितव्यः। भोजनवत्। यथा चतुर्थेचतुर्थेऽहनि देवदत्तो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति। एवमिहापि द्रष्टव्यम्। तस्मादेकस्मिन्नहीने इति।

**अपिवा संख्यावत्त्वान्नानाऽहीनेषु गृह्यते पक्षवदेकस्मिन् संख्याऽर्थभावात्। ५६॥**

भाष्यम्— नानाऽहीनेषु वा चतुर्थेऽहनि गृह्यते, एवं संख्यावद्ग्रहणं भवति, चतुर्थेऽहनि, इति। एकस्मिन्नहीने एकं चतुर्थमहः, अन्यदष्टमं भवति। यदुक्तं श्रुतिशब्दो भविष्यतीति, अहीने इति। भवति सा हि श्रुतिः। न च तया श्रुत्या किंचित् सिध्यति, चतुर्थस्याभावात्। अस्मत्पक्षे लक्षणा, तया तु सिध्यति। अपिच, न लक्षणा। सामान्याभिप्रायमेकवचनम्। यदुक्तं वीप्साऽनर्थक्यमिति। न आनर्थक्यमापततीत्यशब्दार्थः कल्पनीयः। तस्मान्नानाऽहीनेषु ग्रहीतव्यः इति। पक्षवत्। यथा पञ्चम्यांपञ्चम्यां भुङ्क्ते इति पक्षान्तरं गम्यते। एवमिहापि द्रष्टव्यः। तस्मान्नानाऽहीनेषु ग्रहीतव्यः इति।

**भोजने तत्संख्यं स्यात्। ५७॥**

भाष्यम्— यत्तु भोजनवदित्युक्तम्, अर्थात्तत्। तस्माच्चतुर्थादपि अन्यच्चतुर्थं तत्र कल्प्यते। चतुर्थादारभ्य यान्यहानि, तेषां चतुर्थमहीनस्य तदष्टमम्। शब्दलक्षणे कर्मणि शब्दाभिहितं गम्यते, न लोकाभिप्रायः। तस्माद्युक्तं भोजने लोकाभिप्रायानुष्ठानम्। अहीने तु शब्दाभिहितं गम्यते।

**सोम**— षोडश्युत्तरे इतिवत् वीप्साया न विधेयत्वमित्युत्थितेः संगतिः। **सूत्रार्थस्तु**— चतुर्थेचतुर्थेऽहनि अहीनस्य गृह्यते इत्यत्र एकस्मिन्नेव अहीने अभ्यासेन ग्रहणं प्रतीयते, यथा 'देवदत्तः चतुर्थेचतुर्थे दिने भुङ्क्ते' इत्यत्र भोजनदिनापेक्षं चतुर्थत्वम्, तद्वदिहापि ग्रहणदिनापेक्षत्वात् चतुर्थस्य इति।

वि— 'किं चतुर्थेऽहन्यहीनस्य ग्रहो नानागतेषु वा।, वीप्सैकवचनाभ्यां स्यादेकस्मिन्नेव स ग्रहः॥, चतुर्थाष्टमताऽऽपत्तेर्नानाऽहीनेषु स ग्रहः। जात्येकवचनं वीप्सा न्यायप्राप्तानुवादिनी॥'

**भाट्ट**— अष्टरात्रादिरूपे अहीने चतुर्थेऽहनि षोडशिनं गृहीत्वा पुनरपि चतुर्थाच्चतुर्थे अष्टमे ग्राह्यः। अन्यथा वीप्साऽनुपपत्तेः अहीनान्तराभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सावैयर्थ्यापत्तेः। **इति प्राप्ते**, अहीनस्य चतुर्थेऽहनि ग्राह्यत्वेन श्रुतः षोडशी न तस्याष्टमे ग्रहीतव्यः। नहि तदहीनस्य चतुर्थम्, अपितु चतुर्थस्य, अतश्च चतुर्थपदानुरोधात् अहीनान्तराभिप्रायेण वीप्सा न्यायप्राप्तानुवादः। विधाने वाक्यभेदापत्तेः। अहीनस्य इत्येकवचनं तु सामान्याभिप्रायेण बहुत्वलक्षणार्थम्।

**मण्डन**— 'चतुर्थवीप्सा खलु बह्वहीने।'

**शंकर**— 'चतुर्थवीप्सा अन्याहीने।' १५.

* **नानाकर्मलक्षणं** इति ( द्वितीयं ) अध्यायमाचक्षते। **भा.** २।१।१।१ पृ. ३७२.

* **नानाकार्यत्वान्न** विकल्पः। **भा.** ३।३।६।१२.

* **नानाछन्दस्के** गायत्रच्छन्दस इत्यादिपदघटितमन्त्रस्य विनियोगः। **भा.** ३।२।१८।४२–४३. * नानाछन्दस्के सोमे ऐन्द्रप्रदाने भक्षमन्त्रो नान्यत्र। कृत्वाचिन्ता। **वि.** ३।२।१९.

* **नानाजातीयेषु** ( ऐकादशिनेषु ) पशुषु सौत्रामण्यां च पाकभेदात् कुम्भीशूलवपाश्रपणीनां भेदः। **भा.** ११।४।१०।३७–३८.

* **नानात्वम्**। यद् यस्य ग्राह्यम्, गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम्। **बृहती.** पृ. २२७। न नानात्वं नाम अन्यदेव, किन्तु स्वभावत एव ये विलक्षणा अर्थाः, तेषु गृहीतेषु यदिदं वैलक्षण्यं विमृश्यते, तदिदं नानात्वम्। **ऋजु.** पृ. २२७.

**नानाप्रदानाधिकरणम्। भिन्नगुणकदेवताभेदे प्रदानभेदः॥**

त्रीण्येतानि ( इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराजे इति ) हर्वीष्यवदानैकत्वात् संप्रतिपन्नदेवताकत्वात् सहैव प्रदीयेरन्। **इति प्राप्ते**, विशेष्यस्यैकत्वेऽपि राजादिगुणभेदेन देवतापृथक्त्वात् अवदानादेर्वचनाद्यौगपद्येऽपि प्रदानानि भिद्येरन्नेव, एवं सति तिसृणामेवर्चां याज्यात्वमनुवाक्यात्वं च संगच्छते। **संकर्ष.** २।२।१५.

* 'नानाबीजेष्वेकमुलूखलं विभवात्' इति न्यायः। कृष्णाजिनास्तरणन्यायः। **भा.** ५।२।७।१३.

**नानाबीजेष्वेकमुलूखलं विभवात्। ५।२।७।१३॥**

राजसूये नानाबीजेष्टिः 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, रुद्राय पशुपतये गावीधुकं चरुम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, मित्राय सत्याय आम्बानां चरुम्, वरुणाय धर्मपतये यवमयं चरुम्' इति। एषां व्रीहिश्यामाकादीनां अवहननं कर्तव्यं भवति। तत्र कृष्णाजिनं अवस्तरणाय, उलूखलं मुसलं च अवघाताय, शूर्पं च परावपणाय विवेकाय च उपयुज्यते। तदेतदुलूखलादिकं प्रतिबीजं भिद्यते, किंवा एकमेव क्रमेण उपकुर्यात् इति विचारे सिद्धान्तमाह। सूत्रे उलूखलशब्दः कृष्णाजिनोलूखलमुसलशूर्पाणां ग्राहकः। तथा च सूत्रार्थः नानाबीजेषु अवहननाद्यर्थमुलूखलं उलूखलादि एकमेव स्यात् न तु प्रतिबीजं पृथक्। विभवात् प्रभुत्वात् नानाजातीयानामपि बीजानां अवहननादेः करणे समर्थत्वात्।

**विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात्। १४॥**

राजसूये नानाबीजेष्टौ कृष्णाजिनं उलूखलं मुसलं शूर्पं चैकमेव क्रमेण सर्वबीजानामवहननार्थे स्यात् इति सिद्धान्ते उक्ते पूर्वपक्षमाह। वाशब्दः पक्षव्यावृत्त्यर्थः। विवृद्धिः उलूखलादेः स्यात्। प्रतिबीजं भेदः स्यात्। नियमानुपूर्व्यस्य 'कृष्णाजिनमवस्तृणाति, तस्मिन्द् उलूखलमधिवर्तयति, तस्मिन् बीजान्यावपति, मुसलमादत्ते, अवहन्ति, शूर्पे उद्वपति, परापुनाति, विविनक्ति, पात्र्यां तण्डुलान् प्रस्कन्दयति, त्रिष्फलीकरोति' इति यत् नियमेन नियतत्वेन पदार्थानां आनुपूर्व्यं क्रमः उक्तः, तस्य तदर्थत्वात् तत्तदर्थपरत्वात् ते पृथक् पदार्थाः। ततश्च एकजातीयबीजस्य कृष्णाजिनास्तरणं कृत्वा अन्यजातीयबीजस्य तत् कर्तव्यम्। एवं अवहननाद्यपि। तच्च उलूखलादेर्भेदे सत्येव संभवति। तस्मात् प्रतिबीजं भिन्नमुलूखलादि इति पूर्वः पक्षः।

पितॄणामिति, तत्, पितृप्रधाने कर्मणि प्राचीनावीतं विदधाति। यदप्येतत्, निवीतं मनुष्याणामिति, तदपि आतिथ्ये निरपेक्षं विदधाति। कथं गम्यते मनुष्यप्रधाने विदधातीति, मनुष्याणामिति षष्ठ्यन्तेन संबन्धात्, मनुष्याणामेव प्राप्नोति, न मनुष्यप्रधाने। उच्यते। मनुष्याणां कल्प्यमाने फलं कल्पनीयम्। मनुष्यप्रधाने पुनः षष्ठी भविष्यति, संबन्धश्चैवमवकल्पिष्यते, फलं चैवं न कल्पनीयम्। तदुक्तम्, समेषु वाक्यभेदः स्यादिति। न तु मनुष्यप्रधानेन सह एकवाक्यतां प्राप्तम्, पुनः प्रकृताभ्यां दर्शपूर्णमासाभ्यामेकवाक्यतां यास्यति। नहि द्वौ संबन्धौ एकस्मिन् वाक्ये विधीयेते। भिद्येत हि तथा वाक्यम्। इतरस्य मनुष्यग्रहणस्य निवीतसंबन्धार्थत्वात् तेनैव सहैकवाक्यता भविष्यति प्रत्यक्षेण शब्देन। तदेकवाक्यतया चार्थवत्त्वे सति न प्रकृतेनैकवाक्यता अवकल्प्यते। तस्मात् प्रकरणं बाधित्वा आतिथ्ये निवेक्ष्यते इति।

वा— प्रकरणरहितमनुष्यप्रधानो वा स्यात्। कुतः? 'तुल्यवद्धि प्रसंख्यानं दृश्यतेऽस्मिन्विधित्रये। तस्मान्नरप्रधाने स्यात् पितृदेवप्रधानवत्॥' यथैव 'उपवीतं देवानाम्' 'प्राचीनावीतं पितॄणाम्' इति च परस्परनिरपेक्षदेवपितृप्रधानकर्मण्येष विधिः एवं तद्बुद्ध्यनुवृत्तेर्मनुष्याणामित्यपि तत्प्रधानकर्म प्रत्येष्यामः। कथं गम्यते इति पृष्टे **मनुष्याणामिति षष्ठ्यन्तेन संबन्धात्**— इत्येतावति उत्तरे दत्ते **मनुष्याणामेव प्राप्नोति** इति पुनश्चोदयति। अथवा समस्त एव चैकः प्रश्नः। सत्यमेवं प्राप्नोति। फलकल्पनाप्रसङ्गगौरवात्तु परित्यज्यते। तस्मात् तदीयकर्मव्यतिरेकादेव षष्ठी। तत्संबद्धस्य निवीतस्य नासंबद्धफलकल्पना भविष्यति। मनुष्यग्रहणं च तत्प्रधानकर्मप्रतिपत्त्यर्थमिति नानुपात्तसंबन्धापत्तिः। न च तस्मिन् सति प्रकृतैकवाक्यता घटते।

**अर्थवादो वा, प्रकरणात्। ८॥**

**भाष्यम्**— नैतदस्ति, विधिः, स च मनुष्यप्रधाने कर्मणीति। मनुष्याणामिति मनुष्यसंबन्धोऽत्र श्रूयते, न मनुष्यप्रधानेन कर्मणा संबन्धः। मनुष्यप्राधान्ये च सति फलं कल्पनीयम्। आतिथ्यकर्मणा तु अनिर्दिष्टेन अप्रकृतेन अनुमेयेन संबध्येत। तत्र को दोषः? प्रकरणादुत्कृष्येत संभवंस्तत्र। कथं संभव इति चेत्? अर्थवाद एषः। स प्रकृतं स्तुवन् प्रकरणे संभविष्यति, विधिः सन् उत्कृष्येत। तस्मान्न विधिर्मनुष्यप्रधाने कर्मणीति।

वा— सर्वथा नात्र एकोऽपि पक्षो निर्दोषः। प्रकरणसंबन्धे वाक्यसंबन्धबाधात्, अन्वाहार्यादिसंबन्धे वाक्यभेदात् प्रकरणस्य च विशेषकत्वानुपपत्तेः आतिथ्यादिसंबन्धोऽपि अत्यन्तनिर्मूल एव। षड्भिरपि श्रुत्यादिभिरसंस्पर्शात् मनुष्यसंबन्धेन तदनुमीयते, तच्च न युक्तम्, तस्या अपि षष्ठ्याः निवीतपदसंबन्धिव्यतिरेकजनितत्वप्रतीतेः। नहि अनुपात्तसंबन्धिव्यतिरेकैः (अनुपात्ताः संबन्धिनो येषां संबन्धाख्यानां व्यतिरेकाणाम्, तैः इति विग्रहः) विभक्तयः उत्पद्यन्ते। तस्मात् मनुष्यार्थतैव प्राप्नोति। तत्रापि च प्रकरणसमाख्याबाधफलकल्पनाप्रसङ्गः। सति च गत्यन्तरे न युक्तं तदाश्रयणम्। अस्ति च औदुम्बराधिकरणसिद्धमर्थवादत्वं गतिः।

**विधिना चैकवाक्यत्वात्। ९॥**

**भाष्यम्**— इतश्च न विधिः। कुतः? विधिनैकवाक्यत्वात् 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्येष विधिः। अनेनास्य सह एकवाक्यता भवति। यदीतरोऽपि विधिः स्यात् वाक्यं भिद्येत। नहि विधेर्विधेश्च एकवाक्यता भवति, वचनव्यक्तिभेदात्। तत्रैकवाक्यतारूपं बाध्येत। किमेकवाक्यतारूपम्? निवीतं मनुष्याणामिति प्राप्तानुवादः। प्राप्तस्य किमर्थेन पुनर्वचनम्? उपवीतस्तुत्यर्थेन। कथमुपवीतस्तुतिः? निवीतमयोग्यं देवकर्मणि दर्शपूर्णमाससंज्ञके, मनुष्याणां हि तत्। तथा प्राचीनावीतं पितॄणाम्, न देवकर्मणि। उपवीतं तु तत्र योग्यम्। तस्मादुपव्यातव्यमिति। यथा यादृशोऽस्य वेषस्तादृशो नटानाम्, यादृशो देवदत्तस्य तादृशो ब्राह्मणानामिति देवदत्तवेषप्रशंसार्थमितरवेषसंकीर्तनम्। एवमिहापि उपव्यानस्तुत्यर्थेन निवीतसंकीर्तनम्। नास्त्यत्र विधायकः शब्दो निवीतं मनुष्याणां कर्तव्यमिति। आतिथ्यप्रयोगवचनं तस्य कर्तव्यताविधायकमिति चेत्, नैतदेवम्। स्तुत्यर्थेन अर्थवत्त्वे सति न शक्यं कल्प-

यितुम् । परोक्षं हि तदानर्थक्यपरिजिहीर्षया कल्प्येत । परिहृते तु आनर्थक्ये इह पुनर्न किंचित् कल्पनीयम् । तस्मादर्थवादः । एवं च वाक्येन अविरुद्धं प्रकरणमर्थवद्भवति ।

वा—'उपव्ययते' इत्यनेन च विधिना एकवाक्यत्वं निवीतप्राचीनावीतयोर्दृश्यते । तच्चानुवादद्वारेण स्तुतौ सत्यामवकल्पते न विधौ । नहि अङ्गाङ्गित्वरहितयोरुभयोः स्वतन्त्रयोः परस्परासंबद्धयोर्विधीयमानयोरेकवाक्यता भवति, वचनव्यक्तिभेदात् । अन्या हि प्रधानविधेस्तावन्मात्रोपसंहारिणी वचनव्यक्तिः, अन्या च स्तुतेः पराङ्गभावानुगतरूपा । न चात्र विधायको दृश्यते । स यदि वा अध्याहर्तव्यः अथवा आतिथ्यादिगतस्यापि अङ्गत्वाय परिकल्प्येत । न च तत्कल्पनं युक्तम्, अविहितस्यानङ्गत्वात्, अनङ्गस्य च प्रयोगवचनेनाग्रहणात् । वक्ष्यति हि 'न चाविहितमङ्गं भवति' इति । तत्र अङ्गत्वात् विधिः, विधेश्च अङ्गत्वं कल्प्येत इतीतरेतराश्रयत्वं प्राप्नोतीति । प्रत्यक्षेण च विधिना यथाकथञ्चिदेकवाक्यतायां संभवन्त्यां न परोक्षैकवाक्यता युक्ता । तथा सति च अनेकादृष्टकल्पना स्यात् । तस्मादौचित्येन स्तुतिः । यथा निवीतप्राचीनावीते मनुष्याणां पितॄणां च प्रशस्ते, तथोपवीतं देवानामिति । लोकेऽपि चैवं दृश्यते यथा वसिष्ठस्यारुन्धती, यथा शशाङ्कस्य रोहिणी, यथा नलस्य दमयन्ती, तथा देवदत्तस्य यज्ञदत्तेति । विपर्ययेण वा स्तुतिरिति । तयोः पितृमनुष्यविषयत्वेन देवान् प्रति अयोग्यत्वात् उपवीतमेव देवानां प्रशस्तम् । अतश्च देवकर्मणि दर्शपूर्णमासाख्ये तदेव कर्तव्यमिति ।

शा—क्त्वाचिन्तेयम् ।

सोम—यद्यपि अत्रापि प्रकरणस्य श्रुत्यादिविरोधाविरोधविचार एव क्रियते, तथापि अत्र प्रकरणेन क्रत्वर्थत्वं प्रायेण प्रतिपाद्यते इति पादान्तरत्वमित्याहुः । **सूत्रार्थस्तु**– 'निवीतं मनुष्याणाम्' इति वाक्ये निवीतं मनुष्यधर्मो विधीयते, षष्ठ्यन्तमनुष्यशब्दस्य तत्प्राधान्यावगमकत्वादिति ।

वि—'निवीतं तु मनुष्याणां विधिर्वैषोऽर्थवादकः । अपूर्वत्वात् प्रकरणान्नुः क्रतोर्वा विधीयते ॥', प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात् ।, उपवीतविधावेकवाक्यत्वादर्थवादता ॥'

भाट्ट—दर्शपूर्णमासयोः 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते' इति श्रुतम् । तत्र सर्वोऽप्ययम् 'उपव्ययते' इत्यस्य उपवीतविधेः शेषः, न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणेनैव स्थितम् । यदा विधिः, तदा क्त्वाचिन्तया निवीतवाक्ये विचारः । तत्र प्रकरणात् शुद्धक्रतुधर्मः, मनुष्यग्रहणं तु संबन्धसामान्यवाचिन्या षष्ठ्या अर्थप्राप्तकर्तृत्वाख्यसंबन्धानुवाददविरुद्धमिति आद्यः पक्षः । मनुष्यग्रहणस्य वैयर्थ्यापत्तेः षष्ठ्या अङ्गाङ्गिभावसंबन्धपरत्वावसायात् निवीतस्य मनुष्याभिलषितफलजनकत्वाङ्गीकारात् शुद्धमनुष्यधर्मः षष्ठीश्रुत्या प्रकरणबाधादिति द्वितीयः । अबाधेनोपपत्तौ बाधायोगात्, फलकल्पनाऽऽपत्तेश्च, संनिपत्योपकारकत्वलाभाच्च, प्रकरणसहकृतया तया जञ्जभ्यमानमन्त्रवत् क्रतुयुक्तपुरुषधर्म इत्यपरः । अत्र पूर्वपक्षत्रयक्रमो मूले अन्यथाकृतोऽपि अनुक्तिसहत्वादुपेक्षितः । **सिद्धान्तस्तु** प्राचीनावीतवैषम्यापत्तेः तत्समभिव्याहारात्मकवाक्यानुरोधात् षष्ठ्याः मनुष्यसंप्रदानकप्राकरणिकान्वाहार्यदानपाकादिपदार्थोपकारकत्वरूपसंबन्धपरत्वावसायात् उक्तविधसंबन्धेन मनुष्यार्थत्वम् । संभवति हि प्राचीनावीतस्यापि पितृदेवत्यप्राकरणिकप्रोक्षणीशेषनिनयनाङ्गत्वात् पित्रुद्देश्यकप्राकरणिककर्माङ्गत्वम् । अतस्तत्समभिव्याहारात् अस्यापि तत् । एवंच आध्वर्यवसमाख्याऽपि अनुगृहीता भवति । इतरथा तस्याः गुणभूतकर्तृप्राप्तावेव नियामकत्वस्य वक्ष्यमाणत्वात् क्रतुयुक्तपुरुषधर्मत्वे तदनुपपत्तेः । न च भवन्मतेऽपि दानस्य याजमानत्वात् कथं समाख्योपपत्तिः, निवीतस्य आरादुपकारकत्वेन अध्वर्युकर्तृकेनापि तेन दानोपकारसिद्धेः । पाकाद्यर्थत्वमेव वा अङ्गीक्रियतामिति न दोषः । अतः सर्वप्रमाणाबाधात् प्राकरणिकमनुष्योद्देशककर्माङ्गमित्येव सिद्धान्तः । यत्तु मूले पक्षान्तरं सिद्धान्तत्वेन उपन्यस्तम्, तथाहि 'वाक्यादयं शुद्धमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः । न च तदुपस्थापकाभावः, मनुष्यपदस्य लक्षणया सनकादिमनुष्यपरत्वेन

तत्प्रधानकस्य हन्तकारातिथ्यादेरुपस्थितिसंभवात् । अत एव न फलकल्पनाऽपि ' इति तत् वाक्याबाधस्य अस्मन्मतेऽपि उपपादितत्वात्, सनकादिपरत्वस्य तेन च आतिथ्याद्युपस्थितेः अव्यभिचरितत्वाभावेन वक्तुमशक्यत्वात्, प्रकरणसमाख्ययोर्बाधे प्रमाणाभावात्, कृत्वाचिन्तात्वेन च सिद्धान्तनियमस्य अनावश्यकत्वात् अस्य पक्षस्य वार्तिककृता क्लिष्टत्वाभिधानाच्च उपेक्षितम् । अतः प्राकरणिकमनुष्यप्रधानककर्माङ्गत्वमेव सिद्धान्तः । वस्तुतस्तु नायं विधिः वाक्यभेदापत्तेः, अपितु उपवीतविधिरेव शेषः प्राचीनावीतवत् । यथा च निवीतप्राचीनावीते तत्तत्प्रधानकत्वसंबन्धेन मनुष्यपितृसंबन्धिनी उचिते, तथा उपवीतमपि देवसंबन्धितया, अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः । अथवा ते तत्रतत्र वक्ष्यमाणवचनात् प्रशस्ते, अत्र तु दैवत्वादुपवीतमेवेति स्तुतिः ।

मण्डन— ' स्तुतिर्निवीतं विहितोपवीतेः । '

शंकर— ' निवीतं न विधेयं स्यात् । ' १. ' विधौ तत् पुंप्रधानके । ' २.

* **निवीतोपवीतयोः** समुच्चयः श्येने । के. १०।४।१।१–२ वर्णकं १.

* **निवीतपादः** तृतीयाध्यायस्य चतुर्थः पादः । कु. १।४।७।८.

* **निवीतसंकीर्तनं** निवीतवाक्ये उपवीतस्तुत्यर्थम् । के. ३।४।१।८.

* **निवृत्तिः** निषेधसिद्धा । सु. पृ. ४, * **निवृत्तिर्वा,** कर्मभेदात् । ( ८।१।१४।२४ ) यथा तु विकृतौ चमस एव भविष्यति ( न गोदोहनम् ) तथा अष्टमे वक्ष्यति ' निवृत्तिर्वा ' इति । वा. ३।६।३।१० पृ. १०३७.

* **निवृत्तेः** निषेधकार्यायाः प्रवृत्तिपूर्वकत्वनियमः । सु. पृ. १०४१.

* **निवेशनः** संगमनः इति मन्त्रः गार्हपत्योपस्थाने वचनात् विनियोक्तव्यः, न तु लिङ्गात् इन्द्रोपस्थाने । ऐन्द्रीन्यायः । भा. ३।२।२।३–४.

* **निशब्दः** प्रकर्षस्य वक्ता यथा प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते । भा. २।१।१३।४२.

⌛ **निशीष्टिन्यायः ।** निशियज्ञे अमावास्यातन्त्रेण प्रसङ्गसिद्धिः ॥

**निशियज्ञे प्राकृतस्याप(प्र)वृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् । १२।२।५।१४ ॥**

**भाष्यम्**— इदं श्रूयते ' अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात् ' इति । पुनरपि तत्रैव ' अमावास्यायां निशि यजेत ' इति । तस्मिन् किं अमावास्यातन्त्रं प्रसज्यते, उत नेति चिन्तायाम्, पक्षः परिगृह्यते, निशियज्ञे प्राकृतस्य अप( प्र )वृत्तिरिति । अस्मिन् निशियज्ञे प्राकृतस्य अमावास्यातन्त्रस्य अप (प्र)-वृत्तिः न प्रसज्यते । कुतः ? प्रत्यक्षशिष्टत्वात्, प्रत्यक्षशिष्टा इयमिष्टिः, ' अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात् ' इति । किमतः ? ततः एवं विज्ञायते स्वतन्त्रा इयमुत्पन्ना न कस्यचित् कर्मणस्तन्त्रमध्ये । यथा पशुपुरोडाशः ' अग्नीषोमीयस्य वपया प्रचर्य, अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति ' इति । यथा च वैष्णवो वैश्वदेवस्य ' यदधोऽवमृद्येत् यच्च स्फ्य आश्लिष्येत्, तद् विष्णव उरुक्रमायावद्येत् ' इति । ( अवदानकाले स्रुचः अधोभावे यत् अवमृदितं संलग्नं स्यात् यत् किञ्चित् स्फ्ये आश्लिष्टं स्यात्, तत् विष्णवे इत्यादि इत्यर्थः ) ननु ' अमावास्यायाम् ' इति आमावास्यस्य कर्मणो मध्ये श्रुता, न अमावास्याशब्दः कर्मवचनः, किं तर्हि ? कालवचनः । काले श्रुतिः कर्मणि लक्षणा, श्रुतिश्च लक्षणातो न्याय्या । न चेत् कस्यचित् कर्मणो मध्ये श्रूयते, कस्य तन्त्रं ग्रहीष्यते । तस्मात् स्वतन्त्रा ।

**कालवाक्यभेदाच्च तन्त्रभेदः स्यात् । १५ ॥**

**भाष्यम्**— कालभेदात् वाक्यभेदाच्च । कालभेदस्तावत् अमावास्यायां रात्रौ निशियज्ञः, प्रतिपदि अहनि आमावास्यम् । कालभेदेन वैगुण्यात् नामावास्यातन्त्रं निशियज्ञस्य उपकर्तुमर्हति । कथं तर्हि पाशुकाः प्रयाजाः तिष्ठति पशौ क्रियमाणाः सन्तः, तस्य पुरोडाशस्योपकुर्वन्ति ? उक्तस्तत्र न्यायः ' न कृतस्य गुणानुग्रहार्थमावृत्तिरस्ति ' इति । इह पुनः अकृतमामावास्यम् । तस्मात् अवैगुण्याय स्वतन्त्रं कर्तव्यम् । वाक्यभेदाच्च । भिन्नदेशे

चैते वाक्ये 'अमावास्यायां यजेत' 'अमावास्यायां निशि यजेत' इति । एकं दर्शपूर्णमासप्रकरणे, एकं काम्यासु इष्टिषु । किमतः ? यदि समानदेशे स्याताम्, ततः 'अमावास्यायां यजेत' इति योऽसौ आमावास्ये कर्मणि काल उपात्तः, तस्मिन्नेव च निशियज्ञः चोदितः, इति गम्येत । तत्र अमावास्यातन्त्रमध्ये एव विहितः स्यात् । अथ पुनर्देशभेदे सति यथा 'अमावास्यायां यजेत' इत्युपात्तः कालः उपादेयत्वेन चोद्यते, एवमिहापि । न च तुल्यकालत्वे प्रसङ्गो भवति यथा वैकृत्यः इष्टयः दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यः, न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति । तस्मात् तन्त्रभेदः ।

**वेद्युद्धननव्रतं विप्रतिषेधात् तदेव स्यात् । १६ ॥**

**भाष्यम्**— किमेष एवोत्सर्गः सर्वं तन्त्रं भिन्नम् ? न खलु । वेद्युद्धननं व्रतं च स्यात् तदेव यत् दर्शार्थे वेदेरुद्धननं कृतम्, तेन उद्धतायाः पुनरुद्धनने नहि किञ्चित् कार्यमस्ति, केवलं कृतदूषणं भवेत् । व्रतं च उपेतमनुत्सृष्टं पुनरुपेतुमशक्यम् । उपेयमानं च पिष्टपेषणवत् अकिञ्चित्करं स्यात् । तस्मात् एतदुभयमपि तदेव प्रसज्यते ।

**तन्त्रमध्ये विधानाद् वा तत्तन्त्रा, सवनीयवत् । १७ ॥**

**भाष्यम्**— तत्तन्त्रा वा निशीष्टिः स्यात् । अमावास्यातन्त्रा इयम्, न स्वतन्त्रा । कुतः ? तन्त्रमध्ये विधानात् । अमावास्यातन्त्रमध्ये इयं विहिता 'अमावास्यायां निशि निर्वपेत्' इति । ननु कालवचनोऽयं अमावास्याशब्दो न कर्मवचनः इत्युक्तम् । सत्यं कालवचनः, स तु कालस्तन्त्रमध्ये । तत्र विधीयमाना तन्त्रमध्ये विहिता भवति सवनीयवत् । तद्यथा सवनीयाः पुरोडाशाः न तावत् पशुकर्म उद्दिश्य विधीयन्ते, अथ च पशुतन्त्रमध्ये विहिता भवन्ति । यस्मिन् स्थाने विहिताः तत् स्थानं पशुतन्त्रमध्ये इति । इयमपि तन्त्रमध्ये पतिता चेत् सवनीयवदेव न स्वतन्त्रा भवितुमर्हति ।

**वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवताऽर्थम् । १८ ॥**

**भाष्यम्**— अत्राह, किमेष एवोत्सर्गः सर्वममावास्यातन्त्रं निशीष्ट्यर्थं साधयतीति, न खलु । इध्माबर्हिर्न साधयेत् । कुतः ? वैगुण्यात् । इध्मः अग्निसमिन्धनार्थः स प्रतिपदि आहृतः अमावास्यायां निशि वर्तमानस्य निशियज्ञस्य अग्निसमिन्धनं न साधयेत् । बर्हिरपि वेदिस्तरणार्थम् । ते यदि प्रसज्येयाताम्, विगुणो निशियज्ञः स्यात् । तस्मात् भेदेन ते कर्तव्ये । अग्न्यन्वाधानं च यदि देवताऽर्थम् । यदि देवतापरिग्रहार्थं अग्न्यन्वाधानम्, तदपि भेदेन कर्तव्यम् । प्राकृतेन अग्न्यन्वाधानेन अमावास्यादेवताः परिगृहीताः, न च रक्षोघ्नोऽग्निः ( रक्षोहाऽग्निः ) । तत्परिग्रहार्थमपि अग्निधारणार्थम्, ततः प्राकृतेनैव धारितत्वात् अग्नेः, न कर्तव्यम् । देवतापरिग्रहार्थता वाक्यशेषे श्रूयते 'ममाग्ने वर्चो विहवेष्वस्तु' इति पूर्वमग्निं परिगृह्णाति, देवता एव तत्पूर्वेद्युः परिगृहीताः, श्वोभूते यजते इति ।

**सोम**— सवनीयपशोः सवनीयपुरोडाशानां च एकसौमिकप्रयोगवचनपरिगृहीतत्वात् पाशुकस्य पुरोडाशेषु प्रसङ्गसंभवेऽपि भिन्नप्रयोगवचनग्राह्यनिशीष्टौ न दार्शिकाङ्गप्रसङ्गः इत्युत्थितेः **संगतिः** । ननु आधानानन्तरं यदा पौर्णमास्याः पूर्वमेव अमावास्या प्राप्नोति, तदा तस्यां न दर्शतन्त्रप्रवृत्तिः, दर्शपूर्णमासयोः पूर्णमासोपक्रमत्वेन तदा दर्शे कर्मानुष्ठानानुपपत्तेः । ततश्च तस्यां निशीष्ट्यनुष्ठानसंभवात् निशीष्टिकालस्य प्रवृत्तामावास्यातन्त्रत्वनियमः अनुपपन्नः । न च प्रकृत्यनारम्भे निमित्तादिवशात् आपतन्त्या विकृतेरपि अननुष्ठानं इत्यत्र प्रमाणमस्ति, येन निशीष्ट्यनुष्ठानं दर्शपूर्णमासोपक्रमात् पूर्वं न संभवेत्, तथा सति सोमात् पूर्वं सांनाय्याग्नीषोमीयरूपप्रकृत्यनुष्ठानाभावादेव तद्विकाराणामननुष्ठाने सति सोमादूर्ध्वमेव तेषामनुष्ठानसिद्धेः तत्सिद्ध्यर्थस्य 'सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्' इति पाञ्चमिकाधिकरणस्य ( ५।४।८।२५ ) वैयर्थ्यप्रसङ्गात् । इति चेत्, एवमपि दर्शपूर्णमासोपक्रमानन्तरं यदा निशीष्ट्यनुष्ठानम्, तदा तन्त्रमध्यपातनियमावश्यम्भावः । न च एवं एकस्या एव निशीष्टेः दर्शपूर्णमासोपक्रमात् पूर्वं क्रियमाणायाः तन्त्रित्वम्, तदनन्तरं क्रियमाणायाः प्रसङ्गित्वमिति वैरूप्यं स्यात् इति

वाच्यम् । नित्यायाः प्रकृतेः तन्त्रिण्या एव काम्यनैमित्तिकविकृतिसंनिपाते सति प्रसङ्गित्वस्य वक्ष्यमाणत्वेन उक्तवैरूप्यस्य अदोषत्वात् इत्याहुः ।

वि—' निशियज्ञे दर्शतन्त्रं नोतास्त्येत, न दर्शगे । तन्त्रमध्ये विध्यभावा, दस्त्यर्थात् तद्विधानतः ॥ '

भाट्ट— काम्येष्टिकाण्डे ' अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत् यो रक्षोभ्यो बिभीयात् ' इति यागं विधाय तस्य ' अमावास्यायां निशि यजेत ' इत्यनेन कालो विहितः । कालद्वयविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । तदिह निशीष्टौ दार्शिकं तन्त्रं प्रसज्यते न वेति चिन्तायाम्, पशुपुरोडाशवत् तन्त्रमध्ये पाठाभावान्न प्रसङ्गः । नहि अत्र प्रकरणमस्ति, येन तन्त्रमध्यपाठः शङ्क्येत । नाप्यमावास्याशब्दस्य कर्मवचनत्वाद्वाक्येनैव तन्त्रमध्यपातः, तस्य ' अमावास्यायामपराह्णे ' इतिवत् कालवाचित्वेन कर्मलक्षणानुपपत्तेः । न च शब्देन तन्त्रमध्यपातानवगमेऽपि दर्शप्रयोगस्य नियमेन दिवाऽऽरब्धत्वात् रात्रौ क्रियमाणाया अस्यास्तन्त्रमध्यपातावश्यम्भावः, अपराह्णपर्वप्रतिपत्संधौ रात्रिकालीनामावास्यायामन्वाधानपूर्वदिने क्रियमाणाया अस्यास्तत्तन्त्रमध्यपातावश्यम्भावनियमाभावात् । अतोऽवश्यं साङ्गाया एव प्रयोगविधानान्नास्यां प्रसङ्गः । इति प्राप्ते, तन्त्रमध्यपातनियमाभावेऽपि ' सर्वत्र प्रकृतौ विकृतौ वा अङ्गविधिषु अन्यत उपकारालाभे अङ्गानि कुर्यात् ' इत्येवमेव लाघवेन विधिकल्पनात् निशीष्टावपि यदैव तन्त्रमध्यपातस्तदैव प्रसङ्गः । न च एवमपि निशीष्टौ पूर्वकृतान्वाधानादिपदार्थप्रसङ्गेऽपि करिष्यमाणप्रयाजादिजन्योपकारस्य अन्यतः अलाभात्तदंशे न प्रसङ्गो वैपरीत्यापत्तिर्वेति वाच्यम् । निशीष्ट्यर्थं क्रियमाणप्रयाजादिजन्यापूर्वाणां तत्परमापूर्वेणैव तद्ब्राह्मणतर्पणान्ते उत्पन्नेन नाशावश्यम्भावेन वैपरीत्यकल्पनाऽनुपपत्तेः । अतो दर्शप्रयोगविधानादवश्यानुष्ठाप्यानां तेषामेवोपजीवनेन निशीष्टिप्रयोगविधिर्लाघवेन दर्शब्राह्मणतर्पणान्ते एव स्वपरमापूर्वोत्पत्तिमनुमन्यते । अतश्च युक्त एव तत्र कादाचित्कोऽपि प्रसङ्गः । आवश्यकश्चायमग्निप्रणयनव्रतोपायनाग्न्यन्वाधानांशे भवतोऽपि । यानि तु इध्माबर्हिःप्रभृतीनि अशक्यप्रसङ्गानि, तानि त्वावर्तन्ते एव । नचैवं विकृत्यन्तराणामपि सौर्यादीनां दर्शार्थान्वाधानस्य प्रातरेव कृतत्वेन तत्तन्त्रमध्यपातावश्यम्भावात् प्रसङ्गापत्तिः, सौर्यादिप्रधानेषु आतिदेशिकस्यापि प्रातःकालस्य सत्त्वेन अङ्गगुणविरोधन्यायेन बाधानुपपत्तेः दर्शाद्यर्थान्वाधाने एव तद्बाधस्यौचित्येन विकृतिकरणोत्तरमेव दर्शपूर्णमासारम्भात् प्रसङ्गानापत्तेः । न च एवमपि यत्र साकमेधादौ आग्नेष्टावेव अग्निप्रणयनं कृतम्, तत्रेतरेष्ट्यादौ प्रयाजादिप्रसङ्गापत्तिः, तत्र पूर्वेष्टिप्रयोगस्य समाप्तावपि वचनात् तेष्वेवाग्निषु उत्तरेष्टिकरणेऽपि प्रसङ्गानापत्तेः । अत एव तादृशस्थले उत्तरेष्टिषु प्रणयनस्य बाधः एव । व्रतोपायनं तु तत्र सर्वत्र प्रत्येकमेव, इतरथा व्रतविसर्गस्य समन्त्रकस्य विहितस्य सर्वान्ते करणेन आग्नेष्टिपरमापूर्वस्यापि सर्वान्ते एवोत्पत्तौ प्रयाजादिजन्यापूर्वाणां सत्त्वेन उत्तरेष्टिषु तेषां प्रसङ्गापत्तेः । कल्पसूत्रकारास्तु आदौ व्रतोपायनमन्ते च व्रतविसर्गं कुर्वन्ति ।

मण्डन— ' निशीष्टिर्दर्शतन्त्रा स्यात् सामिधेन्यादिकं विना । '

शंकर— ' निशीष्टिश्च प्रसङ्गिनी । '

* निशीष्ट्यर्थस्य आतिदेशिकस्य प्रयाजादेः दर्शार्थेन औपदेशिकेन प्रयाजादिना प्रसङ्गाद्बाधः । ( दार्शिकप्रयाजाद्यनुष्ठानात् निशीष्ट्यर्थप्रयाजाद्यनुष्ठानं पृथक्कर्तव्यमित्यर्थः ) । बाल. पृ. १३३.

*निशीष्टिन्यायोऽप्यत्र नास्ति । तत्र हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः कृते, सति निमित्ते नैमित्तिकीष्टिरापतति । साऽपि तन्त्रमध्ये पतत्येव । टुप्. १२।२।१२।३०.

* निशियज्ञस्य यदङ्गतन्त्रं तस्य अमावास्यातन्त्रेणैव प्रसङ्गसिद्धिः निशि क्रियमाणस्य दर्शकर्मतन्त्रमध्यपातित्वात् । ततश्च व्रतोपायन–अग्निप्रणयन–वेद्युद्धननादीनां प्रसङ्गः । यानि तु इध्माबर्हिःप्रभृतीनि अशक्यप्रसङ्गानि, तानि आवर्तन्ते एव । भाट्ट. १२।२।५.

निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात्, प्रत्यक्षशिष्टत्वात् । १२।२।५।१४ ॥

' अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत् यो रक्षोभ्यो बिभीयात् ' इति ' अमावास्यायां निशि यजेत ' इति च

श्रुतम् । अस्मिन् निशियज्ञे प्राकृतस्य अमावास्यातन्त्रस्य अप्रवृत्तिः प्रवृत्तिर्न स्यात् । प्रत्यक्षशिष्टत्वात् निशियज्ञस्य स्वातन्त्र्येण विधानात् । तस्मात् स्वतन्त्रा निशीष्टिः । इति पूर्वः पक्षः । अपवृत्तिः इति वा पाठः । तत्र अपवृत्तिः निवृत्तिः इत्यर्थात् अप्रवृत्तिः इत्येव तात्पर्यम् । भापुस्तके तु मूले 'अपवृत्तिः न प्रसज्यते' इति मुद्रितम् । तत्र 'न प्रसज्यते' इत्युक्त्या अप्रवृत्तिः इत्येव पाठः स्पष्टो भवति ।

**कालवाक्यभेदाच्च तन्त्रभेदः स्यात् । १५ ॥**

कालवाक्यभेदात् अमावास्यातन्त्रात् निशीष्टितन्त्रस्य भेदः स्यात् । कालभेदस्तावत् अमावास्यायां रात्रौ निशियज्ञः प्रतिपदि अहनि अमावास्यायागः । वाक्यभेदोऽपि भिन्नदेशे चैते वाक्ये 'अमावास्यायां यजेत' 'अमावास्यायां निशि यजेत' इति । तस्मात् तन्त्रभेदः स्यात् ।

**वेद्युद्धननव्रतं विप्रतिषेधात् तदेव स्यात् । १६ ॥**

यद्यपि अमावास्यायागतन्त्रं निशीष्टितन्त्रं च भिन्नमेव, तथापि वेद्युद्धननं वेद्या उद्धननं व्रतं च तदेव स्यात् । तयोर्न भेदः । पुनः करणे विप्रतिषेधात् । तस्मात् अमावास्याऽर्थे कृताभ्यां ताभ्यां निशीष्टौ प्रसङ्गसिद्धिः, इतरत्तु सर्वं भिन्नम् । इति पूर्वः पक्षः ।

**तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् । १७ ॥**

निशीष्टिः तत्तन्त्रा तस्या अमावास्यायाः तन्त्रमेव तन्त्रं यस्याः सा तत्तन्त्रा स्यात् न स्वतन्त्रा । तन्त्रमध्ये अमावास्यायास्तन्त्रस्य मध्ये निशीष्टेः विधानात् 'अमावास्यायां निशि निर्वपेत्' इति । सवनीयवत् यथा सवनीयाः पुरोडाशाः न पशुकर्म उद्दिश्य विधीयन्ते, तथापि पशुतन्त्रमध्ये विहिता भवन्ति इन्ति तत्तन्त्रास्ते तद्वत् । तस्मात् निशीष्टिः न पृथक्तन्त्रा । इति सिद्धान्तः ।

**वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवताऽर्थम् । १८ ॥**

निशीष्टिः यद्यपि न स्वतन्त्रा किन्तु अमावास्यातन्त्रा, तथापि इध्माबर्हिः न साधयेत् । अमावास्यायागार्थः प्रतिपदि आहृतः इध्मः अमावास्यायां निशि वर्तमानस्य निशियज्ञस्य अग्निसमिन्धनं न साधयेत् । वेदिस्तरणार्थं बर्हिरप्येवम् । तस्मात्ते भेदेन कर्तव्ये, अन्यथा वैगुण्यात् निशियज्ञस्य वैगुण्यप्रसङ्गात् । अग्न्यन्वाधानं च यदि देवताऽर्थं देवतापरिग्रहार्थं स्यात्, तदा तदपि भेदेनैव कार्यम् । यदि तु अग्न्यन्वाधानं अग्निधारणार्थमेव, ततो न भेदेन कार्यम् । तस्मात् सामान्यतः निशीष्टौ अमावास्यातन्त्रं प्रसज्यते । केषुचित्तु अंशेषु इध्माबर्हिरादिषु भेदः इति सिद्धान्तः । के.

* निशियज्ञे सामिधेन्योऽपि सन्ति । संकर्ष. २।४।३.

* **निशियज्ञाधिकरणम्** । निशीष्टिन्यायः द्रष्टव्यः । के.

* निश्चयश्च 'अयमेव' इति सावधारणोऽनुभवः । ऋजु. पृ. १४. * निश्चयस्य समानप्रकारकस्यैव संशयादिविरोधित्वम् । मणि. पृ. २८.

* निषादस्य धनिकत्वं संभवति । के. ६।१।१३।५२.

* निषादानाम्, कूटं ( मृगबन्धनयन्त्रम् ) द्रव्यं तेषामेवोपकारकम् । स्वमेव तन्निषादानाम् । भा. ६।१।१३।५२.

* निषादेष्ट्याम् 'कूटं दक्षिणा' इति विहिते ये एवैतेन व्यवहरन्ति, तेभ्य एवार्थतत्त्वं ज्ञात्वा दीयते । के. ६।१।१३।५२.

**निषादरथकारयोरपि आर्षेयवरणमस्ति ॥**

निषादस्थपतेः रथकारस्य च संकरजातित्वेन ऋषिसंततित्वाभावात् नार्षेयवरणम् । इति प्राप्ते, साक्षात् ऋष्यपत्यत्वस्य त्रैवर्णिकेष्वप्यभावात् परंपरया तत्संबन्धे च अविच्छिन्नपारंपरिकतत्तद्वंश्यस्मृतिव्यतिरिक्तप्रमाणाप्रसरात् तस्याश्च तेष्वपि अविशिष्टत्वात् सर्वस्यैव जगतः ऋषिवंश्यतायाः पुराणेषु कथनाच्च स्यादेव तेषामपि आर्षेयवरणम् । संकर्ष. ३।४।६.

* निषादस्थपतिः न त्रैवर्णिकः किन्तु धनिको निषादः । तस्य च तात्कालिकाचार्योपदेशादिना विद्यां संपाद्य रौद्रयागाधिकारः । के. ६।१।१३।५१-५२.

* निषादस्थपतेरपि आर्षेयवरणम् । सर्वस्यैव जगतः ऋषिवंश्यतायाः पुराणेषु कथनात् । संकर्ष. ३।४।६.

* निषादस्थपतेः रौद्रेष्ट्यामेवाधिकारः, साऽपि लौकिके-

ऽग्नौ, रथकारस्य च आधानमात्रे अधिकारः नोत्तरकर्मसु इति मीमांसकाः। के. ६।१।१२-१३।४४-५२.

* निषादस्थपत्यधिकरणम्। निषादस्थपतिन्यायः द्रष्टव्यः। के. * निषादस्थपत्यधिकरणे लक्षणाऽऽपत्त्या तत्पुरुषापेक्षया कर्मधारयस्य प्राबल्यमुक्तम्। मणि. पृ. १४९. * षष्ठीसमासात् कर्मधारयो बलीयान् इति निषादस्थपत्यधिकरणे वक्ष्यते। वि. ३।३।१६.

* निषादस्थपत्यधिकरणन्यायेन अदृष्टकल्पनादेः फलमुखत्वात्। भाट्ट. ४।१।१४, * निषादस्थपत्यधिकरणन्यायेन अदृष्टार्थत्वापत्तावपि लक्षणाया अन्याय्यत्वात्। १०।५।८, * निषाद०न्यायेन काललक्षणापेक्षया परिसंख्याया अदोषत्वात्। इति प्राप्ते। १०।६।४. * निषाद०न्यायेन फलमुखगौरवस्यादोषत्वात्। शब्दकौ. इको गुणवृद्धी, * निषाद०न्यायेन लक्षणाऽपेक्षया कर्मान्तरविधेरेव न्याय्यत्वात्, पूषा प्रविष्टभागः इत्यत्र। भाट्ट. ३।३।१३, * निषाद०न्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन पाठगम्यानेकवाक्यकल्पनस्यादोषत्वात्। ५।१।१, * गुदेनोपयजति इति तृतीयया गुदस्य करणत्वावगमात् निषाद० न्यायेन लक्षणाऽनुपपत्तेः उपयाजानामर्थकर्मत्वावसायात् इत्यादि प्राप्ते। १२।४।४, * 'दीर्घसोमे संतृद्येत्' इत्यत्र 'निषाद०न्यायेन' कर्मधारयस्यैव न्याय्यत्वात् दीर्घश्चासौ सोमश्च इति कर्मधारय एवाङ्गीक्रियते इति प्राप्ते। ३।३।११, * दृष्टार्थत्वावश्यकत्वे निषाद०न्यायेन सप्तमीश्रुत्या प्रकरणाच्च तदीयनिर्वापानुवादेन पुरोडाशकपालवत् प्रायणीयनिष्कासो विधीयते। ११।२।१५, * न च प्रतिपत्त्यपेक्षत्वात् दृष्टार्थत्वलाभाय 'तेनावभृथं यन्ति' इत्यत्र द्वितीयाऽर्थलक्षणायामपि न दोषः, निषाद० न्यायेन लक्षणाऽनुपपत्तेः। ४।२।८, * 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यादौ किं सोमाभावे पूतीकत्वेन रूपेण पूतीकानां विधानम्, उत प्रतिनिधिविधया पूतीकगतसोमावयवानां नियम इति चिन्तायाम्, प्रतिनिधिनियमे पूतीकपदस्य तद्गतसोमावयवे लक्षणाऽऽपत्तेरभावे विधिरेवायम्। न च नियमविधिलाघवानुरोधेन तदङ्गीकरणमपि अदोषः, निषाद०न्यायेन अपूर्वविधिगौरवस्य फलमुखत्वात्। ६।३।१३. * 'सुप्तिङन्तं पदम्' इत्यत्र निषाद०न्यायेन कर्मधारयाश्रयणेन प्रत्ययग्रहणपरिभाषया तदन्तविधौ सुबन्ततदाद्यभिन्नो योऽन्तः, स पदसंज्ञको भवति इत्यर्थः। भूतिः. पृ. ११९.

* निषादस्थपत्यधिकरणन्यायस्य स्वरूपं तु 'तत्पुरुषात् कर्मधारयो बलीयान्' इति। बाल. पृ. ९३.

* प्रयाजशेषन्यायेन योन्यां गायति इत्यादिसप्तम्याः प्राधान्यलक्षणा इत्यपास्तम्। निषादस्थपत्यधिकरणन्यायविरोधेन प्राचीनप्रयाजशेषन्यायस्यापभ्रंशितत्वात्। भाट्ट. ९।२।२. * कैश्चित् तृतीयाया एव (प्रयाजशेषेण हवींष्यभिघारयति) द्वितीयाऽर्थे लक्षणामङ्गीकृत्य विजातीयानेकोद्देश्यकत्वाच्च न वाक्यभेदः इत्युक्तम्, तदपि न निषादस्थपत्यधिकरणविरोधस्य तादवस्थ्यात्। भाट्ट. ४।१।१४.

* निषादस्थपत्यादौ सामानाधिकरण्यात् श्रुत्या लक्षणा बाध्यते। बाल. पृ. १४१.

**⌛ निषादस्थपतीष्टिः लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु ॥**

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत् तादर्थ्याच्चापवृज्येत। ६।८।३।२०॥**

**भाष्यम्**— अस्ति स्थपतीष्टिः 'एतया निषादस्थपतिं याजयेत्' इति। तत्र संदेहः किमाधानसंस्कृतेष्वग्निषु स्यात्, उत लौकिकेष्विति। किं प्राप्तम्? संस्कृतेष्विति। कथम्? 'यदाहवनीये जुहोति' इत्येवमादिवचनात्। ननु शूद्रस्य आहवनीयाभावान्नास्ति तस्य श्रुतिरिति। उच्यते। सा हि आहवनीयं प्रयोजयेत्। यथा प्रयाजानश्रुतान् प्रयोजयति। एवं चोदकसामर्थ्यादिति। तादर्थ्याच्चापवृज्येत। स्थपतीष्ट्यर्थं च आहिता अग्नयः। तस्यामपवृक्तायां अपवृज्येरन्। धारणं हि तेषां दृष्टकार्यमाम्नातम्, अतिक्रान्ते कार्ये न स्यादिति।

**टुप्**— (भाष्यकारेण चोदकः सामर्थ्यात् आहवनीयं प्रयुङ्क्ते, तत्र स्थपतीष्टिः इत्युक्तम्) अत्र चोदयन्ति। चोदकेन अग्नयः संस्कृतास्तस्यां प्राप्येरन्, स च (चोदकः) यत् तस्याम् (इष्टौ) न विद्यते (नोपदिश्यते) तत् (एव) प्रापयति, विद्यन्ते च तत्राग्नयः (उपदेशेनैव 'यदाहवनीये जुहोति' इति। अतः

चोदकसामर्थ्यात् इति भाष्योक्तमयुक्तम् । परिहरति–) 'यदाहवनीये' इत्यनारभ्यवादः प्रकृत्यर्थः खादिरवत्, न सर्वार्थः । खादिरता ( हि ) स्रुवस्य विधीयते ( स्रुवश्च प्रकृतावेव उपदिष्टः । आहवनीयोऽपि होमोद्देशेन प्रकृतावेव उपदिष्टः इति स्थपतीष्टौ चोदकेनैव प्राप्नुयात् इति युक्तमेव भाष्यमिति ) त्रैवर्णिकानां येषु कर्मसु अधिकारः, न तेषु आहवनीयादिविधिप्रयुक्तिः । कस्मात् ? अग्निमत्त्वात् तेषाम् ( त्रैवर्णिकानाम् ) सामर्थ्यादग्निमत्त्वम् । कामश्रुतयः तेषामाधानश्रुतिं कल्पयन्ति ( अन्यथाऽनुपपत्त्या ) । विद्यन्ते हि तेषामाधानश्रुतयः, ( याभिः अन्यथाऽनुपपत्तिः क्षीयते ) । तच्च ( आधानम् ) अग्निप्रयुक्तम्, न क्रतुप्रयुक्तम् । एवं तु ( सति स्थपतीष्टिः विध्यन्तरसंपादित– ) अग्निमतो निषादस्थपतेरभावात् ( स्वयं च ) अग्निसाध्यत्वात् अग्निं प्रयुङ्क्ते, अग्नयोऽपि आधानं सामर्थ्यात् ( प्रयुञ्जते ) अत इदमाधानं स्थपतीष्टिप्रयुक्तम् । अतस्तदर्थम् । सा तेन आधानेन अग्निभिश्च तद्वती । इतरेण आधानेन ब्राह्मणादयो नित्यं अग्निमन्तः । ( तदेवं स्थपतीष्ट्यन्यथाऽनुपपत्त्या वसन्तादिवाक्यविहिताधानव्यतिरिक्तं आधानान्तरं स्वार्थमेव प्रयुङ्क्ते । ) अतस्तदपवर्गे अपवृज्येत । ( किमर्थमिदमपवर्गाभिधानम्, तदाह– ) यदि तादर्थ्यान्नापवृज्येत, अग्निमत्त्वात् ( स्थपतिः ) समर्थः इति इतरैरपि कर्मभिः अधिकारः स्यात् ( इति मन्दधियः संभावयेयुः, तद्भ्रमापनुत्तये अपवर्गाभिधानम् ) ।

## अपिवा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् । २१ ॥

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः । लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु । कुतः ? आधानस्यासर्वशेषत्वात् । सर्वकर्मशेषभूता अग्नयः । तदङ्गमाधानम्, न कर्माङ्गम् । श्रुत्यादीनामभावात् न कर्मप्रयुक्तता आधानस्य, वाक्यसामर्थ्याच्च अग्निप्रयुक्तत्वम् । यच्च दर्शपूर्णमासप्रयुक्तम्, तच्चोदकेन प्राप्यते, न द्रव्यप्रयुक्तम् । तस्माल्लौकिकेष्वग्निषु स्थपतीष्टिरिति ।

**टुप्**— आधानं अनङ्गत्वात् ( दर्शाद्यनङ्गत्वात् ) न चोदकेन प्राप्यते, न च स्थपतीष्टिप्रकरणे आम्नायते । अतो नौपदेशिकम्, नातिदेशिकम् । लौकिकस्तु अग्निः ( अङ्गं भवति ) । स च आचारतः प्राप्नोति । 'तस्मिन् गृह्याणि' ( इति गौतमस्मरणात् ५।८ ) गृहाय हितानि इत्यर्थः ( गृहशब्दश्च दंपत्योर्वर्तते । अतस्तदधिकारं कर्म गृह्यमुच्यते । तत्र येषु नाहवनीयः, तेषु सर्वेषु लौकिकोऽग्निरङ्गम् । तस्मिन् गृह्याणि इत्यादिग्रन्थः तन्त्ररत्नमिति भाट्टदीपिका ) ।

**सोम**—( उपनयने आधानासंभवेऽपि ) इह आधानं संभवति इति पूर्ववैषम्येण प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु**– स्थपतीष्टिः यथा प्रयाजं प्रयोजयति, एवमग्न्याधेयमपि प्रयोजयेत् । एवं सति अग्निमत्त्वात् इतरेष्वपि कर्मसु अधिकारः स्यात् इति कस्यचित् शङ्का स्यात् इति मत्वा आह–– तादर्थ्याच्चापवृज्येत इति । तेन आधानस्य संस्कारापवर्गात् अग्निमत्त्वाभावात् न कर्मान्तरेष्वधिकार इति ।

**वि**— 'स्थपतीष्टिर्वैदिकेऽग्नौ लौकिके वा, ऽऽद्य आक्षिपेत् । आधानमिष्टि, रन्त्यः स्यादवैधेनाग्न्यसंस्कृतेः ॥ '

**भाट्ट**— निषादेष्टेः दर्शपूर्णमासविकृतित्वादतिदेशेन आहवनीयादिप्राप्तौ तेषामाधानाधीनत्वात् असत्यपि तस्य स्वतन्त्राधानविधौ निषादेष्टिरेव अस्याधानं प्रयोजयेत् । इति प्राप्ते, सत्यपि तस्य अग्निजनकाकाङ्क्षत्वे जनकीभूतस्याधानस्य ब्राह्मणादिकर्तृकत्वेनैव उत्पन्नत्वात् निषादकर्तृकेनाग्निनिष्पत्तौ प्रमाणाभावात् प्रकृतौ परप्रयुक्ताग्न्युपजीवनेन इहाहवनीयादिप्राप्तेरेवाभावाच्च न तेषु सा । विद्यायास्तु तद्व्यतिरेकेण निषादेष्टेरेव असंभवात्तदुपायस्य लौकिकत्वेन आक्षेपोपपत्तिरिति वैषम्यम् । तेन आहवनीयाद्यनाक्षेपकत्वेऽपि 'यत्र क्वचन होष्यन् स्यात् पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेन अग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात् तमेव तद्देशे स्थापयित्वा तेष्विष्टिः कार्या । यत्तु 'तस्मिन् गृह्याणि' इति गौतमवचनं लौकिकाग्निप्रापकत्वेन तन्त्ररत्ने उदाहृतम्, तत् गौतमस्मृतौ तच्छब्देन स्मार्ताग्नेरेव परामर्शात्

निषादेष्टेश्च गृह्यत्वाभावादुपेक्षितम्। नहि गृहशब्दवाच्यदंपत्योर्हितमिति व्युत्पत्त्या अस्यापि गृह्यपदवाच्यत्वम्, अभियुक्तप्रसिद्ध्या गृह्यपदस्य गृह्यसूत्रोक्तकर्मस्वेव रूढत्वेन योगस्याप्रयोजकत्वात्। इतरथा गृह्यत्वापत्तेः।

मण्डन—'यागं कुर्याल्लौकिकेऽग्नौ निषादः।' ४.

शंकर—'स्थपतीष्टिस्तथैव स्यात्।' तथैव उपनीतिवत् लौकिकेऽग्नौ। ४.

* **निषादस्थपतीष्ट्यादौ** आहिताग्नित्वस्य अनतिदेशः। राजत्वादेस्तु कर्तृविशेषणत्वात्, तस्य च प्रकृतौ अङ्गत्वात् विकृतौ अतिदेशः इष्ट एव। भाट्ट. ८।१।४ पृ. ८.

**निषादस्थपतिन्यायः।** रौद्रे चरौ निषादजातीयस्य स्थपतेरधिकारः॥

**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्। ६।१। १३।५१॥**

**भाष्यम्—**'वास्तुमध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमयेत्' इत्येतामिष्टिं प्रकृत्य उच्यते 'एतया निषादस्थपतिं याजयेत्' इति। निषादस्थपतिं प्रति संदेहः किं अधिकृतानां अन्यतमः, उत अन्य एवेति। अन्यतमः इति ब्रूमः। स हि समर्थः विद्वत्त्वात् अग्निमत्त्वाच्च। अन्यः अविद्वत्त्वात् अनग्नित्वात् असमर्थः इति। ननु निषादस्थपतिशब्दः तत्र नोपपद्यते। उच्यते। न नोपपद्यते, निषादानां स्थपतिः इति षष्ठीसमासो भविष्यति श्रेष्ठो निषादानाम्। तस्मात् अधिकृताधिकारं एतच्छास्त्रमिति। एवं प्राप्ते, ब्रूमः। निषादः एव स्थपतिर्भवितुमर्हति। कस्मात्? शब्दसामर्थ्यात्। निषादं हि निषादशब्दः शक्नोति वदितुं श्रवणेनैव। निषादानां तु स्थपतिं लक्षणया ब्रूयात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। अथोच्यते, नैष दोषः। निषादशब्दो निषादवचन एव। षष्ठी संबन्धस्य वाचिकेति। तन्न। षष्ठ्यश्रवणात्। नात्र षष्ठीं शृणुमः। आह, लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते इति। सत्यमवगम्यते। न तु लोपेन। केन तर्हि? निषादशब्दलक्षणया। तस्याश्च दौर्बल्यं इत्युक्तम्। समानाधिकरणसमासस्तु बलीयान्। तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः। द्वितीया च विभक्तिः तन्त्रेण उभाभ्यां संबध्यते। तेन द्वितीयानिर्दिष्टो निषादो गम्यते। तत्र षष्ठ्यर्थं कल्पयन् अश्रुतं गृह्णीयात्। तस्मात् निषाद एव स्थपतिः स्यात्।

**टुप्**— (सिद्धान्तमाह–) कर्मधारयोऽयम्, न षष्ठीतत्पुरुषः। (कुतः?) एवं (हि सति) पदद्वयम् (अपि) स्वार्थवृत्तम् (भवति), इतरथा (षष्ठीसमासे) निषादशब्दो लक्षणया स्थपतौ अध्यारोपितः स्यात् (किमिति लक्षणा इत्यत आह–) सामानाधिकरण्यसमासप्रतिपत्त्यर्थम्। (नीलोत्पलसमासेऽपि) उत्पलशब्दस्यापि तदेवाधिकरणम् (प्रतिपाद्यम्) नीलशब्दस्यापि (तदेव) अतः (ऐकाधिकरण्यात् एकार्थीभावलक्षणम्) सामर्थ्यम् (सिध्यति), सामर्थ्याच्च समासः। षष्ठीसमासे च (ऐकाधिकरण्यसिद्ध्यर्थम्) लक्षणा (आश्रयितव्या)। अन्यथा (यदि च निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन च स्थपतिरेव अर्थान्तरभूत उच्यते, ततः) भिन्नाधिकरणत्वात् सामर्थ्याभावः, सामर्थ्याभावाच्च समासाभावः। तस्मात् (समाससिद्ध्यर्थम्) निषादशब्देन स्थपतिं यावत् गतव्यं इत्येषा लक्षणा। न चात्र षष्ठी विद्यते, अनुपलभ्यमानत्वात्। लुप्ता (षष्ठी विद्यते) इति चेत्, उच्यते। यदि अत्र अश्रवणेन (कारणेन) लोपः (षष्ठ्याः कल्प्यते, ततः) स्वादयः (शब्दाः) लुप्ताः इति किमिति न कल्प्यते (अश्रवणाविशेषात्)। तस्मात् लोपे नास्ति प्रमाणम्। ततो राजपुरुष इत्यत्रापि राजा चासौ पुरुषश्च इतीदृशो विग्रहः कर्तव्यः। तत्रापि षष्ठी अश्रवणादेव नास्ति। किन्तु स्वस्वामिसंबन्धात् (राजपुरुषयोः, राजशब्दे) षष्ठ्यर्थमध्यारोप्य तदा (षष्ठीसमासवेलायाम्) समासो भवति। राज्ञः पुरुषः इति (विग्रह–) वाक्यं अर्थप्रदर्शनार्थम् (स्पष्टीकरणार्थमिति यावत्)। तस्मात् स्थपतिशब्दे या (द्वितीया–) विभक्तिः, सा इतरत्र (निषादशब्दे) अनुषज्यते (निषादं स्थपतिं इति) अन्यस्याः (षष्ठ्याः) अश्रवणात्। अथवा समुदायात् (समस्तात् निषादस्थपतिशब्दात्) उत्पन्नत्वात् (द्वितीया विनैव अनुषङ्गेण) उभयत्रापि द्रष्टव्या। ('तस्मा-

नान्यो निषादार्थात् स्थपतिर्लक्षणाभयात् । भवेन्निषाद एवासौ स्थपतिः शब्दशक्तितः ॥ ')

**लिङ्गदर्शनाच्च । ५२ ॥**

**भाष्यम्**-- लिङ्गं दृश्यते 'कूटं दक्षिणा' इति निषादस्य द्रव्यं दर्शयति । कूटं हि निषादानामेव उपकारकं नार्याणाम् । एवं स्वमेव तत् निषादानामिति ।

शा-- 'ऐन्द्रं वास्तुमयं चरुं निर्वपेत्' इति प्रकृत्य श्रूयते 'एतया निषादस्थपतिं याजयेत्' इति । तत्र **'पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते । तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ आहिताग्नेश्च, यदि तु कर्मधारय इष्यते । अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता ॥ तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ नहि षष्ठी श्रुता, येन तत्संबन्धी विधिर्भवेत् । निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् ॥ कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥ तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि । निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥'**

**सोम**-- पूर्ववैषम्येण प्रत्यवस्थानात् संगतिः । निषादो नाम ब्राह्मणात् शूद्रायामुत्पन्नः । स तु शूद्रधर्मयुक्तः । अत एव आपस्तम्बाचार्यैः 'हविष्कृदाधाव इति शूद्रस्य' इत्ययं निषाद एव शूद्रशब्देन व्यवहृतः । एवं च शूद्रयाजनस्य निषिद्धत्वात् अतिक्रान्तनिषेधानामेव याजकत्वं बोध्यम् ।

वि--'द्विजः स्थपतिरन्यो वा, द्विजः षष्ठीसमासतः ।, कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत् ॥'

**भाट्ट**-- 'रौद्रं वास्तुमध्ये चरुं निर्वपेत्' इति प्रक्रम्य 'एतया निषादस्थपतिं याजयेत्' इति श्रुतम् । तत्र यद्यपि निषादः स्थपतिर्यस्य इति बहुव्रीहौ पदद्वयेऽपि अन्यपदार्थलक्षणा इति स नाश्रीयते । तथापि निषादानां स्थपतिः इति षष्ठीतत्पुरुषे तदभावात्, विद्याऽऽक्षेपशक्तिकल्पनाभिया कर्मधारयाङ्गीकारेण स एवाश्रीयते । न च तत्रापि पूर्वपदे निषादसंबन्धिनि लक्षणा, कारणाभावात् । यद्यपि हि क्लृप्तावयवार्थयोगेनैव उपपत्तौ न समासे विशिष्टार्थशक्तिकल्पना प्रामाणिकी तथापि कर्मधारये अभेदस्येव षष्ठीतत्पुरुषादावपि स्वस्वामिभावादिभेदसंबन्धस्य संसर्गविधयैव भानोपपत्तेः लक्षणायामनुपपत्त्यभावः । न च नैयायिकवत् अस्माकं नामार्थयोरभेदान्वय एव इत्यत्र प्रमाणमस्ति । राजा पुरुषोऽस्ति इत्यादौ सर्वत्र नामार्थस्य विभक्त्यर्थे, तस्य च आख्यातार्थे अन्वयाङ्गीकारेण परस्परान्वयस्य समासातिरिक्ते क्वापि अप्रसक्तत्वात् । अतः समासे एव प्रसक्तस्य तस्य संसर्गविधयैव भानोपपत्तेः न लक्षणा । इति प्राप्ते, समानाधिकरणपदस्थले राजा पुरुषोऽस्ति इत्यादौ क्रियाऽन्वयोत्तरं पार्ष्ठिकान्वयस्य अभेदसंबन्धेनैवानुभवात् राज्ञः पुरुषोऽस्ति इत्यादौ व्यधिकरणपदस्थले च भेदसंबन्धेनैव अनुभवात् लाघवेन नामप्रयोज्यतदर्थान्वयबोधस्य अभेदविषयकत्वमेव इति नियमकल्पनात् स्वस्वामिभावादिसंबन्धस्य षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेः अवश्यं पूर्वपदे स्वार्थसंबन्धिलक्षणामङ्गीकृत्य तस्य उत्तरपदार्थे अभेदेनान्वयः इत्यङ्गीकार्यम् । अत एव नामप्रयोज्यनामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रति एकाधिकरणवृत्तिप्रातिपदिकार्थताऽवच्छेदककनामद्वयसमभिव्याहारस्य द्वंद्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वं इत्यपि बोध्यम् । तेन धवखदिरौ, नीलघटौ इत्यादौ नाभेदबोध इत्यपि बोध्यम् । न चैवं समासे संबन्धिनः अभेदेन अन्वयात् विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसंबन्धस्य भेदेनान्वयात् वृत्तिवाक्ययोः भिन्नार्थत्वापत्तेः एकविधानेन इतरनिवृत्त्यनापत्तौ विभाषासूत्रवैयर्थ्यापत्तिः इति वाच्यम् । एकतरबोधे इतरबोधस्य आवश्यकत्वेन अर्थैक्याभिप्रायात् । अतश्च षष्ठीतत्पुरुषे लक्षणाऽऽपत्तेः निषादश्चासौ स्थपतिश्च इति कर्मधारय एवायम् । तेन तावद्विषये विद्यामाक्षिप्य अनाहिताग्नेरपि निषादस्यैवाधिकारः । अत एव 'कूटं दक्षिणा स्वं हि तन्निषादानाम्' इति लिङ्गमपि संगच्छते । तत्र च परप्रयुक्तोपजीवित्वात् आहवनीयाद्यनाक्षेपेऽपि 'यत्र क्वचन होष्यन् स्यात् स पञ्चभूतसं--( भूसं- ) स्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेन अग्न्यन्तराभावे होममात्रोद्देशेन

लौकिकाग्निविधानात् तमेव तत्तद्देशे स्थापयित्वा तस्मिन् इष्टिः कर्तव्या इति ध्येयम् ।

मण्डन-- ' स्थपतिस्तु निषादः स्यात् । '

शंकर-- ' स्थपतेश्च निषादस्य । ' अधिक्रिया रौद्रेष्टौ ।

अत्र 'वास्तुमध्ये रौद्रं चरुम्' इति भाष्यम् । 'ऐन्द्रं वास्तुमयं चरुम्' इति शा. । 'वास्तुमयं वास्तुशाकबीजप्रकृतिकम्' इति सोम. । 'वास्तुशाकः वास्तुकं चन्दनबथुआ (इति उत्तरापथे) चन्दनबटवा (इति दक्षिणापथे) इति अमरटीकायाम् । 'वास्तुमयं रौद्रं चरुम्' इति, 'वास्तुशब्दः किञ्चित्प्रकृतिकद्रव्यविशेषमाह' इति च विस्तरः ।

* चशब्देन ब्रह्मलोक इत्यत्र निषादस्थपतिन्यायोऽपि कर्मधारयसमासग्रहणे सूचितः । श्रीकर. १।३।१५ ब्रसू., * निषादस्थपतिन्यायेन शूद्रस्य औपनिषदब्रह्मवाक्यश्रवणाधिकारोऽस्तीत्याशङ्क्य निराकरोति । १।३।३६ ब्रसू. * 'ऊकालः' इत्यत्र निषादस्थपतिन्यायेन क्लृप्तसमाहारद्वंद्वे अपरनिमित्तकत्वेन अन्तरङ्गत्वस्य बाधकत्वकल्पनायामेव दीर्घनिर्देशः उपपद्यते । भूतिः. पृ. १७०. * ननु शूद्राणामपि पुराणश्रवणादिना ज्ञानोत्पत्तेः निषादस्थपतिन्यायेन महावाक्यग्रहणाधिकारसंभवात् । श्रीकर. १।३।३४ ब्रसू. * यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः शाब्दबोधे लक्षणाया अनङ्गीकारात्, पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थकत्वकल्पनं इत्युक्तं तन्न । भाट्ट. ९।१।१, * व्रीह्यादीनां आनर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्य अपूर्वार्थत्वस्यैव वा बोधोपपत्तौ निषादस्थपतिन्यायेन व्रीहिपदे यवादिसाधारण्येन अपूर्वसाधनत्वलक्षणायां प्रमाणाभाव त् । ९।१।१.

* निषादस्थपतिपदे तत्पुरुषबहुव्रीह्यपेक्षया लक्षणाऽभावलाघवेन कर्मधारयः अङ्गीकृतः । अङ्गीकृतं च फलमुखं अध्ययनप्रयुक्तं गौरवं इत्याहुः । मणि. पृ. १५२.

* निषादस्थपतिशब्दस्य षष्ठीतत्पुरुषे कृते त्रैवर्णिकोऽपि संभवति तादृशः । कर्मधारये कृते तु निषादजातीयो धनिकः सः । तत्पुरुषाच्च कर्मधारयः प्रबलः । तथा च निषादजातीयस्यैव रौद्रयागाधिकारः । के. ६।१।१३।५१-५२.

* निषिद्धस्य प्रतिप्रसवविधिः, यथा ग्रहणे सूतकेऽपि श्राद्धविधिः 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति अयं स्मार्तः । श्रौतोऽपि 'न हिंस्यात् सर्वभूतानि' इति निषिद्धस्य 'अग्नीषोमीयं पशुमालभेत' 'वायव्यं श्वेतमालभेत' इति । बाल. पृ. १६.

* निषिद्धाचरणजन्ययज्ञवैगुण्यपरिहारार्थम् 'भूर्भुवः स्वः स्वाहेत्याहवनीये जुहुयात्' । वि. १२।३।५.

* निषिद्धद्रव्यस्य प्रतिनिधित्वाभावः । भा. ६।३।६।२०.

* निषेधः अकर्तव्यत्वप्रतिपादनात्मकः । सु. पृ. ८, * निषेधः । अननूदितनिषेधायोगः । पृ. १३८०. * निषेधः अनृतवदनस्य क्रतुशेषः दर्शपूर्णमासयोः । वि. ३।४।८. * निषेधः जर्तिलयवाग्वादेः पयोहोमविध्यर्थवादः । अग्निहोत्रे । भा. १०।८।४।७. * निषेधः प्रवर्ग्यस्य अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव । वि. ३।३।१७. * निषेधाः अनर्थहेतुकर्मणः सकाशात् पुरुषस्य निवृत्तिकरत्वेन पुरुषार्थानुबन्धिनः । मीन्या. * निषेधेन स्वविषये अनिष्टसाधनत्वाक्षेपः क्रियते । भाट्ट. ३।४।८ पृ. ३१८. * निषेधस्य अन्यार्थाश्रितस्य, अन्यार्थत्वे 'तदहर्मांसमैथुने वर्जयेत्' इति दर्शपूर्णमासप्रकरणाधीतो निषेध उदाहरणम् । सु. पृ. ३२१, * निषेधस्यापि विधिवत् वाक्यार्थरूपा भावना विषय एव, न तु धात्वर्थस्यैव विषयिणी । पृ. २०१, * निषेधस्य प्राप्तविषयत्वनियमः । पृ. १०४१, * निषेधस्य प्राप्त्यपेक्षत्वात् दुर्बलाया अपि प्राप्तेः निषेधेन अत्यन्तबाधायोगः दशमाधिकरणपूर्वपक्षसूत्रे वक्ष्यते (१०।८।१।१) । पृ. १३१८, * निषेधस्य फलं निषेध्यानिष्टासंयोगः । पृ. २६४, * क्रत्वर्थत्वपुरुषार्थत्वपक्षयोः द्वयोरपि श्रौतस्य निषेधस्य क्रतुवैगुण्यपरिहारफलकत्वम् । पृ. १३९५. * निषेधेषु नरकाद्धीतस्याधिकारः, न तु स्वर्गकामिनः । वि. ६।२।५. * निषेधेषु निवर्तना वाक्यार्थः । मीन्या.

*** निषेधातिक्रमे** पुरुषस्य प्रत्यवायः । कलञ्जन्यायः द्रष्टव्यः । के. ६।२।५।२०-२१.

*** निषेधानुमितस्य** अश्रुतपदप्रयोगस्य विकृतौ निवेशः । संकर्ष. ४।३।१९.

*** निषेधानुवादः** कार्यापत्तिप्रमाणम् । बाल. पृ. ८.

*** निषेधफलं** प्रदर्शनमात्रेणैव संबध्यते न विधिफलवत् कामपदोपबन्धं अपेक्षते । नहि कश्चित् संत्यक्तव्यमर्थं कामयते । वा. ३।४।६।१७.

*** निषेधफलविधिः** अर्थवादः 'तस्माद् ब्राह्मणाय नावगुरेत' इति निषेधे 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्' । तृतीये शंय्वधिकरणे । बाल. पृ. ५३.

*** निषेधविध्यर्थवादो** यथा ऐतरेयब्राह्मणे 'हिरण्यकशिपावासीन आचष्टे' इति होतृकर्तृकस्य क्रत्वर्थस्य 'पुत्रकामा ह्याप्याख्यापयेरन्' इति च पुरुषार्थस्य शौनःशेपाख्यानविधेः वाक्यशेषे 'नियोक्तारं न विविदुः' 'विशसितारं न विविदुः' इति शामित्रकर्त्रलाभोक्त्या 'मह्यमपरं शतं दत्त, अहमेनं विशसिष्यामि' इति च लोभात् प्रवृत्त्युक्त्या शामित्रे दोषावगतेः निन्दया तन्निषेधः कल्प्यते । यद्यपि चात्र 'न हिंस्यात्' इति सामान्यनिषेधः ऋत्विजां स्वाधिकारिकः पराधिकारिकेण सामाख्यानिकेन कर्तृत्वमात्रतया ऋत्विजः स्पृशताऽपि अबाधितः प्रवृत्तोऽस्ति । अत एव तृतीये ( ३।७।१३। २८-२९ ) 'शमिता च शब्दभेदात्' इत्यधिकरणे वार्तिककृता उक्तम् 'अत एवार्त्विज्यं निन्दति' इति, तथापि विशेषनिषेधः दोषविशेषार्थत्वेन अर्थवानेन इति । बाल. पृ. ५७.

**निषेध्यबोधाद्धिनिषेध्यबाध इति न्यायः ।** निषेध्यज्ञानान्निषेध्यस्य बाधो भवति, नान्यथेत्यर्थविषयेऽस्य प्रचार इति शंकरविजये । साहस्री. ८९३.

*** निष्कासः** नाम आमिक्षायाः पात्रलिप्तः कियांश्चित् भागः । स्थालीलिप्तः ओदनस्य भागश्च ( खरपुडी इति भाषायाम् ) । के. * निष्कासः पात्रलग्नः शेषः । सोम. ७।३।४. * निष्कासः प्रायणीयस्य उदयनीयनिर्वापार्थः ज्योतिष्टोमे । भा. ११।२।१६।६६-६८. * निष्कासः लेपः । 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' । वारुणी आमिक्षा । वि. ७।३।४. * निष्कासः वरुणप्रघासावभृथे, अर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते । भा. ११।२।१५।६५.

**निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् । ११।२।१५।६३॥**

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथमभ्यवयन्ति' इति श्रूयते । वारुणी वरुणदेवताका आमिक्षा, तस्याः निष्कासः भाण्डलिप्तो भागः । एतद्वचनोक्तस्य अवभृथे निष्कासस्य प्रदानविप्रकर्षः स्यात् । आवापस्थाने आमिक्षाया एको भागः यवपिष्टमयमेषसहितः प्रदत्तः । निष्कासरूपस्य तु भागस्य विप्रकर्षेण समिष्टयजुरूर्ध्वं विहारे एव प्रदानं कर्तव्यम् । अवभृथशब्दस्तु भक्त्या अनुवादमात्रम् । निष्कासस्य तस्या आमिक्षाया एव एकदेशत्वात् । पशुवत् । 'वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यंदिने, अङ्गैस्तृतीयसवने' इति पशोर्भागानां यथा कालतो विप्रकर्षो भवति तद्वत् । इति पूर्वः पक्षः ।

**अपनयो वा प्रसिद्धेनाभिसंयोगात् । ६४ ॥**

सिद्धान्तमाह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । निष्कासस्य पूर्वस्मात् कर्मणः सकाशात् अपनयः कर्तव्यः । अवभृथाख्ये अपूर्वे एव कर्मणि निष्कासस्य विनियोगः स्यात् । प्रसिद्धेन अवभृथशब्देन निष्कासस्य अभिसंयोगात् संबन्धात्, तादृशसंबन्धस्य वचनेनोक्तत्वात् । तथा च निष्कासादेः न प्रदानविप्रकर्षः किन्तु कर्मान्तरोपदेशोऽयम् ।

**प्रतिपत्तिरिति चेत् । ६५ ॥**

पूर्वपक्षी शङ्कते । निष्कासस्य आमिक्षाशेषत्वात् उपयुक्तशेषत्वात् अवभृथगमनं प्रतिपत्तिः स्यात्, नार्थकर्म इति चेत् ।

**न, कर्मसंयोगात् । ६६ ॥**

सिद्धान्ती उत्तरमाह, न प्रतिपत्तिः । कुतः ? कर्मसंयोगात् अर्थकर्मणा हि अस्य गुणभूतस्य निष्कासस्य संयोगात् संयोगविज्ञानात् निष्कासेन इति तृतीयासामर्थ्यात् । तस्मात् कर्मान्तरोपदेशः इति सिद्धान्तः । के.

* निष्कासावभृथाधिकरणम् । अवभृथधर्मैक-कर्मान्तरस्य० ( मीको. भाग: २ पृ. ७०३–७०५ ) इत्यत्र द्रष्टव्यम् । के. ११।२।१५।६३–६६.

⌛ निष्कासावभृथन्यायः । अवभृथस्य वरुण-प्रघासगतस्य तुषनिष्कासद्रव्यकत्वम् ॥

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । ७।३।५।१७ ॥

भाष्यम्— वारुणप्राघासिकोऽवभृथः सौमिकात् अवभृथात् धर्माणां ग्राहकः इत्युक्तम् । तत्रेदं चिन्त्यते । किं पुरोडाशद्रव्यकोऽसौ , उत तुषनिष्कासद्रव्यक इति । किं प्राप्तम् ? पुरोडाशद्रव्यक इति । कुतः ? नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतम्, न तु शक्यते विधातुम् । अवभृथोऽत्र विधीयते 'अवभृथं यन्ति' इति । यदि तुषनिष्कासं अपरं विधीयेत, ततो वाक्यं भिद्येत, अवभृथं यन्ति, तच्च तुषनिष्कासेन इति । तुषनिष्कासश्रवणमिदानीं किमर्थम् ? अनर्थकम्, संबन्धाभावात् । एवं प्राप्ते, ब्रूमः । द्रव्यादेशे तद्द्रव्यः । द्रव्यादेशे एतस्मिन् 'तुषनिष्कासेन अवभृथं यन्ति' इति, तद्द्रव्यः स्यात् तुषनिष्कासद्रव्यः । कुतः ? श्रुतिसंयोगात् । तुषनिष्कासं प्रत्यक्षश्रुतम्, पुरोडाशस्तु आनुमानिकः अतिदेशेन प्राप्यते । ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुतः, सामान्येन तु प्राप्यते । तुषनिष्कासं तु विशेषेण । बाध्यते च सामान्यं विशेषेण । अपि च लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासम् । श्रुतिलक्षणयोश्च श्रुतिर्न्याय्या । तस्मात् तुषनिष्कासद्रव्यकः इति । अथ यदुक्तं न संबध्यते अवभृथेन तुषनिष्कासम्, वाक्यभेदप्रसङ्गादिति । तत्र ब्रूमः । यदि अवभृथं विहाय तुषनिष्कासं विधीयेत ततो वाक्यभेदः स्यात् । तुषनिष्कासद्रव्यकोऽपूर्वः अवभृथश्चोद्यते । तथा सगुणकर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्ग्रहणमनर्थकमेव स्यात् । तस्मात् तुषनिष्कासद्रव्यकः । पुरोडाशस्तु अनादेशे तत्प्रकृतित्वात् । यदि अत्र प्रत्यक्षश्रुतं न द्रव्यं स्यात् ततः पुरोडाशः तत्प्रकृतित्वात् स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम्, तस्मान्न पुरोडाशः ।

शा— 'अपूर्वकर्मविधिनाऽनेकेषामपि चोदनात् । अन्यथा तुषनिष्कासपदानर्थक्यदोषतः ॥ तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् । श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥' अवभृथशब्देन तु गौणेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिः, तस्मात्तस्य बाधः ।

सोम— पूर्वोक्तकर्मान्तरप्रसङ्गात् इदम् । तुषनिष्कासशब्दस्य मुख्यत्वात् विशेषविषयत्वेन निरवकाशत्वात्, गौणेन धर्मान्तरे सावकाशेन अवभृथशब्देन प्राप्तस्य पुरोडाशस्य बाधात् न तस्य द्रव्यत्वम् । सूत्रार्थस्तु— द्रव्यस्य तुषनिष्कासस्य आदेशे तदेव द्रव्यं ग्राह्यं श्रुतिसंयोगात् । द्रव्योपदेशाभावे हि सौमिकावभृथप्रकृतित्वात् ततः पुरोडाशप्राप्तिः इति ।

वि— 'तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकाउत ।, प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥ तुषनिष्कासयोरत्र साक्षाच्छ्रुत्युपदेशतः । अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥'

भाट्ट— अतिदेशेऽपि च न तदीयद्रव्यस्य एककपालस्य अतिदेशः । औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण लाक्षणिकस्य सामान्यविहितस्य अतिदेशप्राप्तस्य द्रव्यस्य बाधात् । ( ७।३।४।१२–१६ इत्यत्रैव एतदन्तर्भूतमन्ते ) ।

मण्डन— 'साक्षाच्छ्रुतं द्रव्यमिह प्रदेयम् ।'

शंकर— 'तद्द्रव्यं न पुरोडाशः ।'

* अनुवषट्कारयागस्य प्रतिपत्तिकर्मत्वेऽपि निष्कासावभृथवाजिनयागन्यायेन इतिकर्तव्यताऽऽकाङ्क्षायां सोमजन्ययागत्वसादृश्येन अतिदेशोपपत्तेः । कौ. ३।२। १६।३८ पृ. २९७.

* निष्कासशब्दः शेषवचन एव, यत् उखायां लग्नं तदनेनोच्यते । भा. ११।२।१६।६७.

* निष्केवल्यं शंसति इति शस्त्रं प्रधानकर्म न गुणकर्म । भा. २।१।५।१३–२९.

* निष्क्रयः परकीयस्य द्रव्यस्य मूल्यार्पणेन आत्मसात्करणम् । के.

* **निष्ठान्ते** पुनर्नास्ति भावना । **वा.** ९।१।२।२.

* **निष्पक्वं** शिरसि प्रक्षेप्तुं ईषद्विलीनं नवनीतम् । **वि.** ३।४।७.

* **निष्प्रयोजनं** सप्रयोजनेन बाध्यते यथा निगदेषु उच्चैस्त्वेन 'उपांशु यजुषा' इति प्राप्तमुपांशुत्वम् । **बाल.** पृ. १३२.

* **निष्फलत्वं** काम्यस्य अङ्गवैकल्ये । **वि.** ६।३।२.

**नीरक्षीरन्यायः** । यत्र सत्यासत्यविवेचनं तत्रास्य प्रवृत्तिः । यथा जलदुग्धे संमिश्रिते न प्रतीयेते, तथा तथ्यं ब्रह्म, वितथं मिथ्याभूतमज्ञानादि, ते च सम्यङ्मिलिते तादात्म्यं प्राप्ते स्तो न प्रतीयेते । यथा संमिश्रिते नीरक्षीरे हि इदं नीरमिदं क्षीरमिति पृथक्कर्तुं केऽपि पक्षिणो विना हंसं न शक्नुवन्ति, तथा चेदं तथ्यमिदमतथ्यमिति ज्ञातुं विवेकज्ञं परमहंसं विना न कोऽपि शक्नोति पण्डित इति भावः । उक्तं च 'क्षीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्याहतं दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् । येनाशेषविशेषदोषलहरीमासेदुर्षी शेमुषीं सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रणीः ॥' **साहस्री.** १२५.

* **नीलमुत्पलम्** । कथं तर्हि भवत्यत्र संबन्धो नीलमुत्पलमिति ? उच्यते । भवति न तु श्रुतिलक्षणः, किन्तु वाक्यलक्षणः । उत्पलशब्दसंनिधाने तदपेक्षी नीलशब्दः तेनैकवाक्यतामभ्युपगच्छन् अजहत्स्वार्थवृत्तिः उत्पलविशेषाभिधानपरः उच्चार्यमाणः संबन्धमभ्युपैति । **भा.** ३।१।६।१२ पृ. ६८८.

**नीलेन्दीवरन्यायः** । यथा 'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्धयाऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥' इति । **साहस्री.** २०९.

* '**नीलोत्पलवनेष्वद्य** चरन्तश्चारुसंरवाः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥' पुरुषकृतः पदसंघातोऽयम् । ( 'रामाः कौशेयसंवीताः कादम्बा इव शोभनाः' इत्युत्तरार्धं न्यायरत्नमालायाम् ) । **भा.** १।१।७।२४ पृ. ९५.

* **नीलीरोगाद्युपहतेन्द्रियस्य** चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते । **वा.** १।२।४।३१ पृ. १४५.

* **नीवाराः** प्रतिनिधिभूताः व्रीहिभिः समानविधानाः । **भा.** ३।६।१४।३७–३८. * नीवाराः यदा 'इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेत्' इत्यादौ प्रकृतिद्रव्यत्वेनैव विहिताः, तदा सदनकरणमन्त्रे 'व्रीहीणां मेध' इत्यत्र 'नीवाराणां मेध' इत्यूहः कर्तव्यः । नीवाराणां प्रतिनिधित्वे तु नोहः इति नवमेऽधिकरणे वक्ष्यते । **के.** ९।३।१।१–२. * नीवाराः व्रीहीणां प्रतिनिधिः । **वि.** ६।३।११. * **नीवारैरपि** आग्नेयोऽष्टाकपाल इति इयं चोदना संपादयितुं शक्यते । **वा.** ६।३।४।१५. * नीवारैः ( व्रीहिस्थानीयैः ) योऽपि यागं कुर्यात् तेनापि चोदितमेव कृतम् । **भा.** ६।३।३।१२, * **नीवाराणां** व्रीहीणां च न प्रकृतिविकारभावः । ३।६।१४।३९. * नीवाराणां व्रीहिप्रतिनिधित्वे सदनकरणमन्त्रे व्रीहिशब्दस्यानूहः । **वि.** ९।३।९, * **नीवारेषु** जातितो व्रीहिशब्दार्थत्वाभावेऽपि आकारतो व्रीहिशब्दार्थत्वेन प्रोक्षणावघातादिविषयः साक्षादेव नीवारेषु प्रवर्तन्ते । ३।६।१४. * नीवारेषु प्राकृतव्रीहिस्थानापन्नेषु व्रीहिकार्याणामनुष्ठानम् । 'प्राकृतव्रीह्यादिस्थानापन्नेषु' इत्यत्राधिकरणम् । **भा.** ९।२।१२।३९, * नीवारेषु व्रीहित्वेन परिच्छिन्ना व्रीहिव्यक्तयः सन्ति, तासामर्थेन व्रीहिधर्माः क्रियन्ते । ३।६।१४।३८.

* **नीवारादिप्रतिनिधिष्वपि** मुख्यधर्मानुष्ठानं दर्शपूर्णमासादौ । **के.** ३।६।१४।३७–३९.

* '**नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता** ।' इयं निमित्ततो वाचनिकी व्यवस्था स्मार्ती । **बाल.** पृ. १९.

**नृपनापितपुत्रन्यायः** । यत्र अतिनिन्द्येऽपि स्वकीये अतिरम्यताबुद्धिविवक्षा तत्रायमवतरतीति । यथा, इत्थं हि किल लौकिकी गाथा – कस्यचिन्नृपस्य भृत्यो नापित आसीत्, स कदाचित् प्रातरुत्थाय सर्वं पुरमन्विष्यातीव सुन्दरो बालो मे दर्शनाय त्वया अत्रानेय इति नृपेणाज्ञप्तः, स तु नापितो राजाज्ञां श्रुत्वा अखिलपुरमन्विष्य दृष्ट्वाऽपि च तत्रतत्रातिरम्यान् बालान् स्वसुत-

तुल्यान्न मत्वा तानपहाय स्वसुतमेव उपशान्तानलाङ्गाराभं काणं खल्वाटं कृशह्रस्वबाहुजङ्घं स्थूललम्बोदरं राजवेश्मनि नीत्वा राज्ञे निवेदयामास राजन् आनीतोऽयं अतिरम्यतमो बालः। दृष्ट्वा च तं कुरूपं नापितपुत्रं राजा उपहासं मयि कृतवानयं खल इति मत्वा चुकोप, उवाच च– अरे मूर्ख किमिदमिति। नापितश्च कुपितं राजानं ज्ञात्वा कृताञ्जलिपुटो भूत्वोवाच, राजेन्द्रमौले! तव चरणमुपलभे, नायमुपहासः किन्तु मे मनसीत्थमेव निश्चयः– मत्पुत्रसदृशो रम्यस्त्रिलोक्यामपि नास्ति, तव नगरस्य का कथेति। राजा च सत्यमीदृश्येव रागग्रहगृहीतचित्तदशेति कोपं तत्याजेति। तथा, यथा अतिकुरूपेऽपि स्वसुते रागातिशयवशान्नापितस्य सर्वोत्तमत्वधीः तथा केषाञ्चिदाधुनिकपाषण्डिमतानुयायिमन्दधियां प्राक्तनजन्मकुसंस्कारप्रयुक्तरागातिशयवशात् कस्मिंश्चिदतिक्षुद्रेऽपि मते सर्वोत्तमत्वधीः परिहृत्य च सनातनश्रौतस्मार्तपौराणिकोत्तममतानीति न्यायसंगतिरिति। **साहस्री.** ७९.

* **नेत्रे संमील्य हसति**, मुखं व्यादाय स्वपिति इति उपसंख्यानात् समानकर्तृत्वमात्रवाचित्वं क्त्वाप्रत्ययस्य। सु. पृ. ८६७.

* **नेत्रद्वयाञ्जनं** साङ्गमेकपदार्थः। तेन अनेकयजमानके अहीने एकत्र नेत्रद्वयेऽपि अञ्जनं कृत्वा यजमानान्तरे तत् कार्यम्। **भाट्ट.** ५।२।३.

* **नेमाधिकरणम्।** पिकनेमाधिकरणम्। **भा.** १।३।५।१०.

* **नेमशब्दः** अर्धवाची अनार्यप्रसिद्धेरेव। **के.** १।३।५।१०.

* **नेष्टा** नाम ऋत्विक् अध्वर्योः पुरुषः। तृतीयवर्गस्थोऽयम्। अयं तृतीयी तृतीयांशभाक् चतस्रो गाः लभते। वि. ३।७।१७.

* **नेष्ट्रीया** इति समाख्यानात् कर्म ज्ञायते। **भा.** ३।७।२०।४१.

* **नैचाशाखं** नाम नगरम्। **भा.** १।२।४।३१–९.

* **नैमित्तिकमतुल्यत्वात्०** (३।६।१३।३६) इति नैमित्तिकाधिकरणसिद्धान्तहेतुपरशब्देन 'अतुल्यत्वात्' इत्यनेन द्विरुक्त्यापादकं विध्ययौगपद्यमेव विवक्षितम्। **रसायनम्.** पृ. १५६.

⌛ **नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्।** ३।६।१३।३६॥

क्षत्रियस्य वैश्यस्य च अग्निष्टोमे यजमानस्य सोमचमसस्थाने फलचमसः एव भवति। ये तु मानं क्रयः उपावहरणं अभिषवः इत्यादयः सोमधर्माः, तेषामपि किं फलचमसार्थेषु नैयग्रोधादिफलेष्वपि समानमेव विधानम्, उत चोदकेनैव प्राप्तिः इति संदेहे सिद्धान्तसूत्रमिदम्। नैमित्तिकं राजन्यवैश्यनिमित्तेन निर्वृत्तं फलचमसद्रव्यं सोमेन असमानविधानं स्यात् सोमेन सह समानं विधानं यस्य, तादृशं न स्यात्। क्रयादीनां धर्माणां विधानं सोमस्येव फलचमसस्य साक्षात् न स्यात्। कुतः? अतुल्यत्वात्, फलचमसस्य सोमेन तुल्यत्वाभावात् सोमो नित्यः, फलचमसो नैमित्तिकः। अतो धर्मा अपि क्रयादयः सोमे नित्याः, फलचमसे तु न तथा किन्तु चोदकेन स्युः। **के.**

* ननु फलचमसे सोमत्वाभावात् कथमनुच्छिष्टत्वं संभवतीति। न त्वेष दोषः, स्थानापत्त्या सोमधर्मलाभात्। वक्ष्यति हि **नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्** इति। **वा.** ३।५।२०।५३ पृ. १०२४.

* नैमित्तिकमेव नित्यमपि क्वचित् यत्र संयोगपृथक्त्वं अग्निहोत्रहोमे दधि अग्नीषोमीयपशोर्यूपे खादिरश्च। **भा.** ४।३।३।५–७.

⌛ **नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत।** ९।२।५।२३॥

अग्निष्टोमे 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति श्रूयते। तत्र योनिभूतायाः ऋचः परस्तात् तच्छन्दस्के एव केचित् द्वे ऋचौ गृहीत्वा जायमाने तृचे साम गेयम्, उत उत्तरानामको यो ग्रन्थः छन्दोगानां प्रसिद्धः, तत्र पठिता ऋक् उत्तरा नाम। एवं च उत्तराग्रन्थे पठितयोर्द्वयोः ऋचोः योनिवत् गेयं इति विचारे सिद्धान्तमाह। नैमित्तिकम् 'तद्योन्यां तदुत्तरयोर्गायति' इति वचनप्राप्तं उत्तरात्वं आनन्तर्यात् उत्तरासंज्ञकग्रन्थपाठेन अव्यवहितयोः अनन्तरत्वात् प्रतीयेत। एवं च

